





गते सुप्रभाताङ्केऽस्माकमनौचित्यद्वयं समजनीति चेखिद्यतेतराम् चञ्चलं चेतः। प्रथमन्त्विदमनौचित्यम्, यत्, क्रान्तिकारिलेखे श्रीमतां नारायणशास्त्रिणां विषये कश्चन शब्दो नितरां लज्जां जनयत्यस्माकम्। यद्यपि 'श्लिष्टैः पदैः पिशुनयेच्च रहस्यवस्तु' इति विद्यते, तथाप्यावेशविलसितमिति स्फुटमेव प्रतीयते। कर्णमर्दनेनोष्ण्यं गतः क्रान्तिकारी सर्वथाऽनुचितमाचचारेति वयं भृशं निन्दामः, निन्दन्ति च सर्वे। सुप्रभातप्रचाराय वहिर्गतेन मया कश्चन नियुक्त आसीत् छात्रः सहायकत्वेन, तेन च मदनुमत्या प्रकाशिते क्रान्तिकारिलेखे श्रीमतां शास्त्रिमहोदयानामुपरि ध्यानं न दत्तम्। मदागमनानन्तरं मुद्रितप्रायमेवासीत् सुप्रभातम्। श्रीमन्तः शास्त्रिमहोदया अस्माकं परमहितचिन्तकाः, श्रद्धास्पदाः, प्रणयिनश्च सन्ति। ते प्रौढाः सुपरिस्कृताः कविवराः, सहृदयधुरीणाश्च सन्ति। संस्कृत-वाङ्मय-गवेषका अपि सन्ति। तेषामिममपराधमगत्या शिरसावहन्नहं कैः शब्दैः क्षमाप्रार्थनं कुर्यामिति न जानामि। सुप्रभातेन शास्त्रिमहोदयानां घनिष्ठः सम्बन्धः, स्नेहश्चास्ते। तद्वयं चिरमनुग्रहीताः स्मः।

अपरमिदं यत्, सूर्योदय-विषये निवेदनं कृतवता मया विन्ध्येश्वरीप्रसादशास्त्रिणां सम्बन्धे विलिखितमासीत् "यत्तैः सुप्रभातस्य शतशो ग्राहकाणां हानिः सम्पादिता" इति। तत्तेषां जाते सम्मेलने ज्ञातम्, यदयं समाचारो भ्रममूलक एव। तेषामपि सुप्रभातेन स एव सम्बन्धः, यो मम। समाजिकत्वेन, व्यक्तित्वेन च तेषामस्माभिः सह शाश्वतः सम्बन्धः। स च न कदाचिदपि व्यपगमिष्यतीति निश्चितमेव। कैरपि धूर्तैर्मिथ्याटुकद्भिः प्रचारकैर्बहिर्लोकानां मनसि वैमत्यं व्यवस्थापितमासीत्। अतएव तेषां समाचाराणामाधारत्वेन मया लिखितमासीत्। तत्साम्प्रतमसत्यत्वात्, वयं तान् शब्दान् सखेदं परावर्तयामः। नीतिविषये, लक्ष्यविषये भवतु वैमत्यम्, परमान्तरिकः स्नेहोऽस्माकं न केनापि विचलयितुं शक्यः।

* * * *



Published by Gaurinath Pathak and printed by Rameshwar Pathak at the Tara Printing Works, Benares.

सौर पौषः [ धनुर्मासः ] १९८४

चतुर्थवर्षे ] [ नवमी सङ्ख्या

# सुप्रभातम् ।

संस्कृत-साहित्य-समाजस्य मासिकं मुखपत्रम् ।

तिमिरततिमुदस्यद्,
भेदतारा विलुम्पन्,
नयदधि सुरभाषाभाषि-
जागर्तिभावम् ।
विबुध-विहग-वादै-
राह्वयद् भाग्य-भानुम्,
विलसतु भुवनेऽस्मिन्
सर्वतः 'सुप्रभातम्'

सम्पादकः—

श्रीकेदारनाथशर्म्मा, सारस्वतः

वार्षिकम्मूल्यम् ३) मानवीयेभ्यः १२)
छात्रेभ्यः १॥) वैदेशिकेभ्यः ६)

व्यवस्थापकः—

श्रीगिरीशशर्म्मा, शुक्लः, न्यायाचार्यः

प्राप्तिस्थानम्—

सुप्रभातकार्यालयः, काशी ।

# लेख-सूची।

(१) विज्ञप्तिसारः।
महाकवि श्रीगुमानी पंतप्रणीतः ... ... २०३
(२) मङ्गलम्
श्रीसोहनलाल द्विवेदः .. ... .. २०४
(३) कम्बोजीयः। (आख्यायिका)
श्रीबहादुरचन्द्रगुप्तः, शास्त्री ... ... २०४
(४) सुलभ-व्याख्यान-माला।
श्रीत्र्यम्बक विश्वनाथ सोहरीर ... ... २०६
(५) उमारमयोः श्लेषेण वर्णनम्।
श्रीभूपनारायण झा, व्याकरणाचार्यः ... २०७
(६) सत्कवि विठोबा अएणानां जीवन चरितम्।
श्रीहरिगोविन्द बोरवणकरः ... ... २०८
(७) श्रीसुप्रभातोत्सवः।
श्रीचक्रधर शास्त्री, बहुगुणः ... ... २११
(८) सिंह-दिलीपयोः सम्वादः ... ... २१३
(९) श्रीभारतगुण-सम्वर्द्धना।
भट्ट श्रीमथुरानाथशास्त्री साहित्याचार्यः ... २१४
(१०) समस्यापूर्त्ती।
श्रीभूपनारायणझा, व्याकरणाचार्यः .... २१९
(११) मद्रास-भारतीय-महासभा।
श्रीमहादेवशास्त्री पाण्डेयः, साहित्याचार्यः ... २१६
(१२) सम्पादकीयम्। ... ... २१८
(१३) कामना पञ्चकम्।
श्रीईश्वरदत्त दौर्गादत्तिः शास्त्री, एम० ओ० एल्० २२२
(१४) अभिनन्दनम्।
गिरिजानन्दमिश्रः
(१५) संस्कृत-समाचारः।
१ श्रीवासुदेजोशी, चूरू
२ क्षेमचन्द्रः, बीकानेर
३ श्रीदुर्गादत्तशर्म्मा, अलवर
४ युगलकिशोरझा शास्त्री .. ... २२२




विविध-विषय-विभूषितम्, अद्वितीयम्, संस्कृत-मासिक-पत्रम् ।

चतुर्थ-वर्षे | वाराणसी, सौर पौषः (धनमासः), १९८४ वैक्रमाब्दाः | नवमी संख्या




महाकवि-श्रीगुमानीपन्त-प्रणीतः ।

सम्पादकः—श्रीतारादत्तपन्तः, साहित्याचार्यः

त्वदेकशरणं गताश्रममसौ विमोहश्चिरा-
न्मुहुर्मुहुरपह्नुतस्तुदति मामकीनं मनः ॥
अवेक्ष्य तदुपेक्षसे तव किमेतदात्मोचितं
कथं हि पुरतोरवेर्मुकुलयेद्विधुर्वारिजम् ॥ २१ ॥
चिराय विहितास्पदैः स्वहृदि कामशोषादिभि-
र्हतस्मृतिरयञ्जनोऽनवहितत्वमाप्नोति यत् ॥
तदेव तवसेवनस्तवनिवृत्तिवीजध्रुवम्
विना निशित-धारया दलयितुं न खड्गः क्षमः ॥ २२ ॥
नितान्तमविवेकिनी समधिरूढदोषोत्करा
न बुद्धिरनधिष्ठित-प्रचुर-शुद्धिरुज्जृम्भते ॥
अतो वत न भूयते खलु तयोदितज्ञानया
रजश्चयमलीमसे न मुकुरे मुखम्भासते ॥ २३ ॥
कथञ्चन कुतश्चन कचन किञ्चनाहं यदि,
स्मरामि करणैर्भवच्चरणपद्ममाभ्यन्तरैः ॥
जनुर्मम न किन्तदा भवति तावतैवोर्जितं,
मनागपि सुधाशिता दिशति निर्जरत्वं क्षणात् ॥२४॥
अनेन विषयैषिणा हृदि जनेन चिन्ताकुले
स्मृतं किमपि नाम ते यदि घुणाक्षरन्यायतः ॥
तदेव महतोऽखिलानलमपासितुं पाप्मनो
वनानि खलु बर्हिषस्तनुरपि स्फुलिङ्गो दहेत् ॥ २५ ॥

स को नु भविता क्षणः क्षणकृतानुकम्पस्त्वया
जनोयमुपनेष्यते सपदि यत्र धन्यात्सताम् ॥
इति प्रणयता मया हृदि समाकलय्य स्थितं
मनोरथ-पथं गतः किमिव नेहते दुर्गतः ॥ २६ ॥
विभाव्य सदयं मनस्तव वृतोऽस्मि भव्याशया
स्वयं प्रभुरपावृतस्त्वमसि किन्तु भीतं मुदा ॥
अकृत्यमपि कर्म ते जगति नापवादाय्य
न वह्निरिव शर्वभुग् विपथगो महान्दुष्यति ॥ २७ ॥
त्वमात्मशरणात्मने सकरुणत्व-सार्द्रात्मना
प्रसीदसि मनोगतं स्वयमनोदितोऽर्थं दिशन् ॥
तदेव रसमग्रतस्तव मदीय-विज्ञापनै-
र्विकाशयति केन वा कुमुदमिन्दुरभ्यर्थितः ॥ २८ ॥
नमो जनकनन्दिनी-परमवल्लभाय स्वयम्-
प्रभाय रमित-प्रभाकर-कुलाय रामाय ते ॥
गृणन्तमिति मामहर्दिवमुपासता सिद्धयो
जनाय कृतभक्तये किमिव न प्रदद्यात्प्रभुः ॥ २९ ॥
भवतु भवभयघ्नो वाचमाकर्ण्य दीनां
रघुपतिरति तुष्टः सर्वदः सर्वदेति ॥
सुचिरमनु विविच्य त्रिंशता पद्यराजै
रिममकृत गुमानी नाम विज्ञप्तिसारम् ॥ ३० ॥

समाप्तम्।

—:*:—

## मंगलम्।

विनाशाय त्रिलोकानाम्
यो ह्यभूद्वै त्रिलोचनः।
त्राणाय त्रय तापात्तम्,
त्रिपुरारिं नमाम्यहम् ॥

—सोहनलाल द्विवेदी।

## कम्बोजीयः।

( अनुवादकः—श्रीबहादुरचन्द्र गुप्तः, शास्त्री )

श्रीरवीन्द्रनाथ ठाकुरस्यैकतमायाः कथाया अनुवादः



मम पञ्चहायनी तनया मिनी अजल्पित्वाऽऽसितुं न शक्नोति। आजन्मनस्तया क्षणमपि तूष्णीं न स्थितमिति दृढं विश्वसिमि। तस्या माता प्रायोऽनेन खिद्यते, जल्पनाच्च तां वारयितुमिच्छति, परन्त्वहं नेच्छामि। मौनं मिनीकृते नितान्तमस्वाभाविकम्, अहं स्वयञ्चाप्येतच्चिरं सोढुं न शक्नोमि। तस्मादेव च तया सह मदीयः स्वकीयः संलापः सदा स्फूर्जितो भवति।

उदाहरणतया, एकदा प्रातः स्वस्य नूतनस्योपन्यासस्य सप्तदशं परिच्छेदं लिखतो मम सहसा वत्सा मिनी निभृतं मन्निकेतनं प्राविशत्, स्वकीयं हस्तं च मदीये निधायाशंसीत्—'तात! द्वाःस्थो रामदयालुः काकं कागं कथयति! मन्येऽसौ न किमपि जानाति, जानाति किमु? इति।

अथो तस्यै 'भाषां भाषामन्तरा लोके को विशेषः' इति विशदीकर्तुकामस्य मे साऽकस्माद्विषयान्तरकल्लोलमभ्यप्लवत—'तात! तव कस्तर्कः? भोलस्तु कथयति यज्जीमूतेषु हस्ती वसति, स स्वशुण्डातो जलानि मुञ्चति, तदियं वर्षा भवतीति'।

अथ यावत्किञ्चिदुत्तरं चिन्तयन्नहं जोषमासे, तावत्क्षिप्रं सा भूयः परिप्रष्टुमुपाक्रमत—'तात! कस्तेऽस्यया संवन्धः?' इति।

ततोऽहं गम्भीरवक्रेण कथमप्यवोचम्—'याहि मिनि! भोलेन सह खेल च, अहं व्यापृतोऽस्मि।' इति।

मम निकेतनस्य गवाक्षो रथ्याभिमुखमासीत् बालिका चोपचतुष्किकं मम चरणयोरासीना स्वे जानुनी ताडं ताडं मधुरं क्रीडति स्म। अहञ्च तत्सप्तदश-परिच्छेद-लेखने मग्न आसम्। तत्र खलु नायकः प्रतापसिंहः काञ्चनलतां नायिकां स्व-बाहोरादाय दुर्गहर्म्यतृतीयप्रकोष्ठाद् गवाक्षमार्गेण सद्यः पलायितुमना आसीत्। तावदेव मिनी सहसा खेलामहासीत्, 'हे कम्बोजीय! हे कम्बोजीय!' इति क्रन्दन्ती च वातायनाभिमुखमधावीत्। वस्तुत एवाधस्तात्प्रतोल्या[1] मलसं परिभ्रमन्नेकः कम्बोज वासी पुमानासीत्। स स्वदेशवेशानुरूपं शिथिलं मलीमसं निचोलं[2] तुङ्गमुष्णीषं च पर्यधत्त; किञ्च पृष्ठदेशेनैकं प्रसेवं[3] पाणिना च मृद्वीकापिटकानवोढ।

नास्मि शक्नोमि कथयितुं के नाम भावा आविरासन्ममदुहितुः स्वान्ते यदा सेमं पुरुषमालोकतेति, परं सा तं तारस्वरं क्रन्दितुमारभत। अथाहं व्यचिन्तयम् हन्त! स चेदन्तरेष्यति, मम सप्तदशः परिच्छेदः समाप्तिं नैष्यति' इति। तत्क्षणमेव स कम्बोजीयः परावर्तत, बालिकाञ्चाभ्यपश्यत्। अथैतदवलोक्य स साध्वसाभिभूता मातरं शरणमुपधावन्ती क्वापि न्यलीयत। तस्या ह्यन्धविश्वास आसीद् यन्नूनं तस्मिंस्तेन भीमेन पुंसोह्यमाने प्रसेवे मत्तुल्या द्वित्रा इतरेऽपि बाला: सन्तीति। एतस्मिन्नन्तरे स पण्याजीवः प्रतीहारभूमिं प्राविशत्, मां च सस्मितमनंसीत्।

इतस्तावन्मम नायकयोः स्थितिस्तथा दोलायमानाऽऽसीत्, यथा विवशं मया तत्रैव विरमणीयं किमपि क्रयणीयञ्चाभवत्। मिन्या हि स पुरुषो गृहं प्रतिसमाहूयत। अथाहं क्रयं स्तोकमकरम्, ततश्च तेन साकमब्दुर्रहमान-रशियन- इङ्गलिश-सीमान्त-राष्ट्रनीतिसम्बन्धिनं वाकोवाकमारभे।

अथ प्रस्थातुमुद्यतः स पर्यपृच्छत्-'नन्वार्य! क्वास्ति सा बालिका?' इति अथाहं तदानीं मिनीमानोनयमियमियमलीकभयं मुञ्चेदिति।

यावत्सा [4]मदासन्दीसन्निधौ स्थिता तं कम्बोजीयं तदीयं स्यूतं च न्यरूपयत्, तावत्स तस्यै सशुष्कमृद्वीकान् कन्दरा[5]लानुपाहरत्, परं सा नासीदुपच्छन्दिता, केवलमुपचीयमान-संशय-सङ्कुला भूयोऽपि मामुपाश्लिष्यत्।

इदं तयोः प्रथमं सम्मेलनमासीत्॥

परन्तु कतिपयदिवसानन्तरं गृहान्निष्क्रामन्नहं मिनीं द्वारोपकण्ठे मञ्चमध्यासितां पादयोरुपविष्टेन विशालकायेन तेन कम्बोजीयेन सार्धमालपन्तीं हसन्तीञ्च लोचित्वा भृशमचित्रीये। एवं किल प्रत्यभासीत्, यद् आजन्म मे वत्सा स्वपितुःपृथक् तादृशं सहिष्णुं श्रोतारं नासीसददिति। तदानीं च तस्याः शाटिकाञ्चलं तदागन्तुकार्पितेन वाताद (वादाम) शुष्कद्राक्षामयेनोपायनेन संपूरितमासीत्। अथाहं कम्बोजीयं किमिति त्वं तस्यै तान्यदाः? इति ब्रुवन्नेकामष्टाणकीं निष्कास्य तस्य पाणौ न्य-

टि०—१ रथ्या-गली, २ चोला, ३ झोला।

दधाम् । स च विप्रतिपत्तिमन्तरेणैव तद्धनं प्रतिपद्य निचोलविले न्यधत्त ।

हन्त ! द्विगुणीकृतनिजायासामपश्यं तां वराकीं मुद्रां मुहूर्तात्पश्चात्प्रतिनिवृत्तोऽहम् ! कम्बोजीयो हि तां मिन्यै प्रादात् । तस्या माता च भास्वति गोलाकृतौ पदार्थदृष्टिं क्षिपन्ती ।' कुतस्त्वमेतामष्टाणकी मलभथाः ? ' इत्युदीरयन्ती च श्येनपातं कन्यकामभ्यपतत् ।

मिनी सोल्लासमाचष्ट—' कम्बोजीय इदम्मेऽदत्त ' इति

अथ भृशं द्रुता तदम्बाऽदात् ! अये मिनि ! कथं नु त्वं तस्मादेनत्प्रतिग्रहीतुमार्हीः ?' इति

तत्क्षणमेवाहं प्राविशम्, आपिपतिषन्त्या विपदश्च तां परिरक्षन्निजानेव संप्रश्नम् कर्तुमुपाक्रमे

नाहं सकृद् द्विर्वा द्वौ मिलितावपश्यम् । कम्बोजीयो हि समञ्जसेनाक्षोटवातादमयेनोत्कोचेन कन्यकाया आदिमं साध्वसं परास्यत्; साम्प्रतं च द्वौ परमे मित्रे अभूताम् ।

विचित्रैः परिहासै स्तावन्योऽन्यमरञ्जयताम् । मिनी तस्याभिमुखं वीक्षत्, स्वबालगौरवं च साधु विवृण्वती तदीयमायतं कलेवरं निरवर्णयत्, हासोल्लसद्वलिबन्धुरेण वदनेन च व्याहर्तुमुपाक्रमत—'अयि कम्बोजीय ! कम्बोजीय ! किमिदं नूह्यते त्वयाऽस्मिन्स्यूते ?' इति

अथ स नासिकोनपर्वतीयस्वरेण प्रत्यवोचत—'कुञ्जरः' इति । नासीदयं मोदाय-अलंहेतुः; किन्त्वहो ! कथं स्वादुङ्कारं तावुभौ हास्यानन्दमन्वभूताम् ! बालिकाया अस्मिन् प्रवयसा पुरुषेण संलापे मत्कृते तु सदैव किमप्यपूर्वमाकर्षणमविद्यत ।

अथ कम्बोजीयस्तदानीं 'माऽधरी भूवम्' इति स्वं वारं प्रत्यपादि—'साधु ! अथ वत्से ! त्वं कदा स्वं श्वशुरालयं गन्तासि ?' इति

अयत्वे प्रायः प्रत्येकं वङ्गीया कुमारी बहोः कालात्प्राङ्निजश्वशुरालयोदन्तं श्रुतवती विद्यते, परं वयं किञ्चिन्नवयुगीना आस्म, तादृशानि वस्तूनि च स्वस्याः कन्यकाया नित्यमगोपस्म; अतस्तेन प्रश्नेन मिनी नूनं किञ्चिदिवोदभ्रमीत् । किन्तु न सा तत्प्राचीकटत्, प्रत्युत्पन्नमत्या तु प्रत्यवादीत्—'अपि त्वं जिगमिषसि तत्र ?' इति

कम्बोजीयपुरुषाणां मध्ये तु 'श्वशुरालयः' इत्ययं शब्दोऽर्थद्वयं वक्तीति प्रथितमस्ति । एष श्रुतिमधुरं संज्ञान्तरमस्ति कारावासस्य, यत्र निजव्ययेन विनैवास्माकं सम्यक्प्रतिपालनं भवति । एतमेवार्थं मनसिकृत्याऽसौ पीवरः पण्याजीवो मम सुतायाः प्रश्नमग्रहीत् । ततश्च हुं कृत्वा परोक्षं राजपुरुषं प्रति मुष्टिं धुन्वन्नवादीत्—'अहं स्वं श्वशुरं कुट्टयिष्यामि !' इति । एतदाकर्णयन्ती, धर्षितं वराकं सम्बन्धिनं च ध्यायन्ती मिनी अट्टहासपुरःसरं दूरं पलायिष्ट; स प्रचण्डस्तत्सखा चापि तामनुप्राहसीत् ।

( क्रमशः )

---




श्रीप्रकाशमहोदयानां राजशास्त्रविषयकं व्याख्यानद्वयं समासतोऽत्र लिख्यते । सुप्रभात-पाठकवृन्दास्तत्पठनेनानुगृह्णन्तु ।

'प्रथमे व्याख्यानेऽस्माभि र्दृष्टं यत् समाजोत्पत्तिः कथमभवत्; कथं च तस्य सुसंघटित-व्यवस्थापने नियमानामावश्यकता बभूव; कथं च नियमकर्तारो नियमद्रष्टारो नियमोल्लङ्घयितृदण्डदातारश्च भिन्नाः स्युरिति।

इदानीं तावत् राजसंघटनं कथमभूदिति प्रथमं विचारणीयम्। तद्विषये तु सन्ति त्रयः पक्षाः। केचित् मन्यन्ते, यत् ब्रह्मा स्वयमेव स्वप्रजारक्षणाय भूम्यामवततार; तेन च राजसंघटनं कृतमिति। अन्येच, केचित् जना एकत्रीभूय कांश्चित् नियमान् कृतवन्तः; तान्ननुसृत्येतरे जना वर्तन्ते स्म; अनेन राजसंघटनमभूदिति। अपरे च केचित् वदन्ति, यत् यो ह्यस्माकं शक्तिमानासीत्, स एव राजा भूत्वा राजसंघटनं चकारेति।

एतेषु द्वितीयः पक्षः श्रेष्ठतमः। तमेवानुसृत्येदानीं सर्वा राज्यव्यवस्था क्रियते। प्रान्तप्रतिनिधयः एकत्रीभूय नियमान् कुर्वन्ति; जनैश्च तान् परिपालयन्ति; नियमोल्लङ्घयितॄन् दण्डंच दापयन्ति। राज्यस्यैतदेव मुख्यं स्थानम्, यत्रैते प्रतिनिधयः सम्मिलिताः सन्ति। कौन्सिलादिसंस्था स्तान्येव स्थानानि सन्ति। अत एव राजकार्यधुरंधराणां कौन्सिलादिप्रवेशेऽतीव यत्नः। किन्तु नास्ति तत्र सर्वेषामधिकारः। ये धनवन्तो विद्यावन्तश्च तेषामेव प्रवेशाधिकारः। मतप्रदानेऽपि सन्ति न सर्वेऽधिकारिणः। तेषामेव मतप्रदानाधिकारो ये धनवन्तः। बालवृद्धवनितानां नास्ति मतदाने प्रवेशे चाधिकारः। एतदयुक्तम्। यदि सर्वेषां नियमपालनमावश्यकं तदस्तु सकलानामपि मताधिकारः। विदुषीणां स्त्रीणां कौन्सिलादिप्रवेशेऽप्यस्त्वधिकारः। अनेन, सर्वेषामपि जनानां नियमपालनं सुकरं भवेद्यतस्ते तानेव नियमान् संघटेयुः, यान् ते सुलभतया परिपालयितुं शक्नुवन्ति; अन्यच्चाधुना दृश्यमानः प्रकारः कौन्सिलादिषु न भवेत्।

इदानीं कौन्सिलादिषु सन्ति सर्वे धनवन्तः। प्राकृतिकनियमानुरूपं हि तत्, यत् ते न जानन्ति धनहीनदुःखानि, । ते स्वीयान्येव दुःखानि बहुमन्यन्ते,अर्थात् ते नियमकरणसमये नास्माकं दुःखानि संकटानि च विस्तृततया विचिन्तयन्ति। तस्मान्न तत्र सर्वे धनवन्तः स्युः। तथैव स्त्रीणां विषयेऽपि। न वयं पुरुषास्तासां दुःखानि यथा तथा ज्ञातुं प्रभवामः।

अस्मिन् समये ये नियमाः सन्ति तत्राल्पा एव स्त्रीविषयकाः। एतदपि न युक्तम्। अस्तु।

तदेतत्सिद्धमेव यदस्तु सर्वेषां विदुषां धनवतां धनरहितानां च मतप्रदाने, कौन्सिलादिप्रवेशे चाधिकारः, राज्यकार्ये चास्तु तेषां हस्तक्षेपः। किन्तु नास्त्येवम्; एतत्तु दुःखस्थानम्। पाश्चात्यदेशविशिष्टेषु चास्ति स्त्रीणां मतदाने; कौन्सिलादिप्रवेशे चाधिकारः। अस्तु। जगति सन्ति सर्वे भिन्नप्रकृतयः। केचित् परिवर्तनवादिनः, केचिदपरिवर्तनवादिनः, अन्ये च केचिदतीतवादिनः, भारतेऽस्मिन्नपि सन्ति बाहुल्येन पक्षविपक्षाः। केचित् स्वराज्यवादिनः, केचित् स्वान्यवादिनः, केचित् साम्राज्यान्तर्गतस्वराज्यवादिनः, केचित् सहकारिणः, केचिदसहकारिणश्च। एतेषां प्रतिनिधयः कौन्सिलादिप्रविष्टाः स्वमतानुरूपान् नियमान् घटयन्ति, परमतानुरूपान् नियमान् विघटयन्ति च। अल्पाःसन्त्येतादृशा नियमाः ये सर्वैर्मतैर्नियमत्वं गताः, किन्तु विपुलाः सन्त्येतादृशा येऽधिकैर्मतैर्नियमत्वं प्राप्ताः।

एतैर्नियमैर्वयं बद्धाः स्मः। अस्माकमेतेषां नियमानां पालनं सर्वथाऽऽवश्यकम्। तस्मान्मतदातृभिरस्माभिस्तेभ्यः पुरुषश्रेष्ठेभ्यो मतानि दातव्यानि, ये खल्वस्माकं दुःखानि संकटानि च जानन्ति, ये च खलु तत्र गत्वास्माकं श्रेयस्करानेव नियमान् संघटयन्ति; अन्यांश्च विघटयन्ति; ये च न केवलं स्वमतानुरूपनियम-संघटनाय तत्र गच्छन्ति, किन्तु स्वबान्धवनियमसम्बन्धि-दुःखदूरीकरणाय।

यदि सर्वे मतदातार एतादृग्भ्यो मतानि वितरेयुः, यदि तेषामेव तत्र प्रवेशो भवेत्, तर्हि ये नियमाः संघटिता भवेयुस्ते कदापि दुःखदायका न स्युः।' इति॥

श्री त्र्यं० वि० मोहरीर.

## उमारमयोः श्लेषेण वर्णनम्।

अब्जाऽऽयतेक्षणलसद्वदनापिनाक—
भृन्मौलिना मिलितपादसरोरुहश्रीः।
गोत्रेश्वरादरनिदानमसौ विदध्या—
द्वामा मनोभवकृतः शमुमारमा वा॥१॥

—भूपनारायणझा, शर्मा।

# सत्कवि-विठोबा-अण्णानां जीवनचरितम्।

लेखकः—श्रीहरि-गोविन्द-बोरवणकरः छात्रः, श्रीकाशी-विद्यापीठस्य।



अस्माकमुत्तरापथनिवासिनां जनानां नास्ति दक्षिणभारतीयगीर्वाणवाणीप्रवीणानां चरितैः सह सुपरिचयः। इदं हि महद्दुःखस्थानम्। अतो वयं सुप्रभातपाठकानां कृते, ये दाक्षिणात्यपण्डितप्रवराणां चरितानि न जानन्ति, निम्नलिखितं जीवनचरितं प्रेषयामः। तत्पठनेन केनापि वाचकेनान्यदेकमप्यप्रकाशितपूर्वचरितं सुप्रभाते प्रकाशनार्थं प्रेषितं भविष्यति चेद्वयं कृतार्था भविष्यामः। तदेवास्मल्लेखनस्य महत्पारितोषिकम्।

अस्ति च दक्षिणेषु विषयेषु 'निजाम' नाम प्रसिद्धमेकं संस्थानम् ( Nizam State )। तस्मिन् 'करहाटक' नामकमेकं सुविख्यातं तीर्थस्थानं कृष्णा-कोयन्नानद्योः सङ्गमे वर्तते। तत्रैको ब्राह्मणः 'पन्तमहादेव' आसीत्। स च स्नानसन्ध्यादिब्रह्मकर्मनिरतः सत्त्वशीलश्च। 'रामचन्द्र' नाम्नस्तस्यपुत्रस्य पञ्चदशवर्षदर्शनात्प्रागेव मृत्युः समजनि। प्राणप्रियपुत्रनिधनेन व्याकुलः स यथा कथंचित् कालं यापयितुं निश्चिकाय। तस्यासन्बहवस्तनयाः किन्तु नैकोऽपि तेष्वेवम्भूतो यो कालान्तकयमेन नापहृतो भवेत्। इदमेव सर्वसुखसम्पन्नस्य तस्य ब्राह्मणस्य दुःखस्थानम्। रात्रिंदिवं सोऽखिलभुवनदुःखदातृदैत्यदानवेन्द्रपौलस्त्यविदारकस्य दाशरथेराराधने निमग्नोऽभूत्। स्वदासवशमानसः स करुणावरुणालयो भगवान्कथं न स्वाश्रितजनमनोरथान् पूरयेत्। वदान्यजनसद्गुरुणा तेन भगवता रामचन्द्रेण स्वसेवानिरताय तस्मै पन्तमहादेवाय १७३५ तमे शाकाब्दे ( तदनुसारेण १८७० तमे वैक्रमीये ) पौषकृष्णामावास्यायामेकं पुत्ररत्नं प्रदत्तम्। मृतबहुपुत्रकस्य तस्य प्रभूत आनन्दः, प्रभूतं दुःखं च समभवताम्। आनन्दो बहुकालानन्तरपुत्रप्राप्तौ दुःखं च स्वाभाविकपूर्वक्रमानुवर्तिबालकस्याल्पायुषः तर्कितनिधने। तत्रापि चामावास्यासदृशमभद्रं जन्मस्थानमिति तद्दुःखस्य कारणविशेषम्। किन्तु तर्कातीता भगवल्लीला केन ज्ञायते? अमावास्यायां जातेन तेनैव बालकेन स्वकीर्तिश्चिरस्थायिनी कृताऽस्मिन्भूतले। तस्य 'विठ्ठल' इति नामाकारि जनकेन पन्तमहादेवेन।

वर्द्धमानस्य तस्य बालकस्य हृष्टा पुष्टा चाङ्गयष्टिर्दिने दिने सुदृढा बभूव। न कोऽपि तस्मै कुप्यति यद्यपि किञ्चिदपि श्रोतव्यं स न शृणोति

बहवो भिन्नभिन्नोपायाः कृतास्तं पाठशालायां प्रहेतुं, किन्तु न ते सफलीभूताः । 'बाल एवायमद्यापि' इति विचिन्त्य जनकस्यापि तत्र उपेक्षाभावोऽभवत् । प्राप्तदशवर्षस्यास्य वालकस्य नाद्याप्यक्षरसंस्कारोऽभूत् । विजयादशम्यांतिथौ पन्तमहादेवेन सहाक्षरसंस्कारविहीनोऽयं विठ्ठलः कस्यचिच्छ्रीमतो मण्डपं गत आसीत् । अनोमोहकमस्य वदनं दृष्ट्वाऽऽकृष्टहृदयेन धनिना पृष्टानां केषाञ्चित्प्रश्नानां चातुर्यपूर्णानि प्रत्युत्तराणि विठ्ठलेन दत्तानि । तानि श्रुत्वा श्रीमता स पृष्टो यत् 'कस्यां पाठशालायां पठसि त्वं' इति । विठ्ठलेन न किमप्युत्तरं दत्तं परश्च लज्जया मुखमधः कृतम् । मनसि च तेन स्वमूढता सहस्रशो धिक्कृता निश्चितं च विद्याभ्यासपारङ्गततां प्राप्तुम् । अयमेव परिवर्तनकालस्तस्य चरितस्य । षण्मासाभ्यन्तर एव तेनेदृश्युन्नतिः कृता यां दृष्ट्वा सर्वे गुरुजना आश्चर्यचकिता बभूवुस्तस्य चातीव प्रशंसां चक्रुः । यदा तेन श्रीमता महाशयेन पारितोषिकप्रदानेन तस्य कौशल्यमभिनन्दितं तदैव तस्य समाधानमभवत् ।

द्वादशतमे वर्षे तस्य विवाहः सञ्जातः । अस्मिन्नेव वयसि व्यायामविषये तस्य रतिरुद्भूता । यद्यपि व्यायामविषयेषु तेनातिकौशलं प्राप्तं तथापि तरणकलायां तु तस्य वैशिष्ट्यमेव । मित्रवृन्देन सह कृष्णां तीर्त्वा तेषां साहाय्येन प्रतिसमयं स पञ्चषान् ग्राव्ण आनीतवान् । तेषां संगृहीतग्राव्णामेकं हनुमन्मन्दिरं तेन रचितमद्यापि कृष्णातटे दृश्यते ।

'आप्पा पुराणिका' नाम्नां विदुषां समीपे विठ्ठलेन गीर्वाणवाणीविज्ञानं प्राप्तम् रघु-किरात-कुमार-माघ-नैषधानां प्रख्यातपञ्चकाव्यानामध्ययन विषयक ञ्च पाटवम् । एकस्मिन्दिवस आप्पाशास्त्रिणः पुराणं वाचयितुं पन्तमहादेवस्य गृहं गताः । असमापित एव पुराणे ते व्यासपीठादवातरन्नकथयंश्च यदवशिष्टान्दशद्वादशश्लोकानयं विठ्ठलः श्रावयिष्यतीति । न स्वसुतस्य संस्कृतभाषापाटवं पन्तमहादेवस्य ज्ञातपूर्वम्, अतः स पुराणश्रावणे विठ्ठलस्यस्खलितवाग्धाराप्रवाहं दृष्ट्वाऽऽश्चर्ययुक्तो बभूव । अनन्तरं तेन स्वगृहे आप्पाशास्त्रिभ्यो वसितुं स्थानं दत्तं तेषां चोचितादरातिथ्यं कृतम् । विठ्ठलस्यागाधं बुद्धिसामर्थ्यं दृष्ट्वाऽऽप्पाशास्त्रिणोऽपर्याप्तमतयोऽभवन् । स्वशिष्यशङ्कानिरसनमशक्यमिति बुद्ध्वा कस्यां रात्रौ त एकाकिनेऽकथयित्वैव कुत्रचिदपि गताः । न चापि तेषां शोधने कश्चित् प्राप्तयशा बभूव । सर्व एव तेषां गमनेन परमदुःखिता बभूवुः । विठ्ठलस्य तु शोकस्य पारो नाभूत् । आप्पाशास्त्रिभिर्विठ्ठलो 'अण्णा' इति नाम्नाऽऽकारितस्तस्मात्तस्य 'विठोवा अण्णा' इति नाम प्रसिद्धम् । अतो वयमपि तमनादरसूचकैरेकवचनशब्दै प्रतिपाद्य आदरवाचकैर्बहुवचन-शब्दैः प्रतिपादयिष्यामः ।

यद्यपि तैः ( विठोवा अण्णाभिः ) आप्पाशास्त्रिसकाशे व्युत्पत्तिज्ञानं सम्यगधीतं तथापि व्याकरण-न्याय-वैद्यक-सङ्गीतादिविषयाणां तेषामध्ययनं तत्तद्विशिष्टगुरुसमीपे समाप्य तेषु तेषु विषयेषु तैः प्रावीण्यं सम्पादितम् । सर्वमिदं विंशवयसः पूर्वमेवाधीतमिति खलु महदाश्चर्यकारणम् ।

अष्टवर्षानन्तरं दुःखराशयस्तेषामुपर्यपतन् । तेषां वयसोऽष्टाविंशतितमे वर्षे जनकस्य पन्तमहादेवस्य निधनमभवत् । वर्षद्वयाभ्यन्तरे तेषां पत्नी

'गयाबाई' नाम्नी पार्थिवं शरीरं त्यक्त्वा सुरलोकं गतवती। पत्न्या निधनस्थानतीते संवत्सरयुगल एव तेषां सदया जननी स्वपतिनिधनदुःखमसह्यं ज्ञात्वा तत्समीपे चिरं निवसितुं जगाम! संसृतिशीलं संसारमसारं विज्ञायाण्णाशास्त्रिभिः स्वचित्तौघेऽनश्वरं परिपूर्णं च श्रीरामचन्द्रपदकमलं गन्तुं भक्तिमार्गेण नियोजितः। साग्रहेण वारं वारं द्वितीयं विवाहं कर्तुं विज्ञापितानां तेषां मतिर्न निश्चितमार्गतः किञ्चिदपि विचलिता बभूव। जननीनिधनकालतस्तैरुष्णीषधारणं त्यक्तम्। आमरणान्तं तैर्न कदापि पुनः शिरस्युष्णीषं धृतम्। मातृमरणसमय एव तेषां वेदाभ्यासप्रारम्भकालः। आपाशास्त्रिणां समीपे तेषां वेदाध्ययनमभवत्।

अर्धाङ्गवायुविकारेणाण्णाशास्त्रिणोऽत्यन्तं पीडिता आसन्। यथानियमं तै रामनवम्युत्सवो महता समारोहेण पारं नीतः। न कस्यापि कल्पना लेशो यदयमेवाण्णानामन्तिम उत्सवो भवेदिति। शकीयसम्वत्सरे १७९५ तमे (तदनुसारेण १९३० तमे विक्रमीयवत्सरे) चैत्रमासि कृष्णपक्षस्य या दशमी तिथिः तस्या मध्यरात्रावेषां सत्पुरुषाणां पृष्ठेऽतीव पीडोदभवत्। तथा पीडितैस्तैः कथञ्चिदपि सा रात्रिरतिक्रामिता। अन्यस्मिन्प्रभाते पिपासया तेषां कण्ठावशोषः समभवत्। परन्तु नित्यविधिसमाप्तिं विना कदाचिदपि कर्हिचिदपि यैर्जलमपि न पीतं, कथं तैर्हरिदिन (एकादशी) सदृशशुभ्रावसरे नित्यविधिपरिसमाप्तेः प्राग्जलसेवनं कर्तुम् शक्यम्? असह्यकष्टान्यप्यगणयित्वा तैः स्नानध्यानादिनित्यकार्याणि समाप्य दाशरथिरामचन्द्राय [1]राजादन-क्षीरनैवेद्यमर्पयित्वापराधस्तोत्रं पठितं तुलसीपत्रं च स्वीकृतम्। अनन्तरं क्षीरप्रसादं भक्षयित्वा पिपासा-शामक-जल-प्राशनार्थं हस्ते पात्रमादाय नित्यनियममनुसृत्य 'श्रीराम' इति घोषेण मुखे जलं गृहीतम्। तदेव तेषामन्तिमकृत्यम्। तेषां पञ्चप्राणाश्चित्स्वरूपे विलीना देहस्त्वचेतनो भूमाववशिष्टः। विना क्लेशैस्तेषां निधनमभवत्!!

तेषामपत्यानि त्रीणि द्वौ पुत्रौ कन्या च। तेषु द्वितीयेन रघुवीरेण स्वजनककृतगजेन्द्रचम्वादि ग्रन्थानामुपरि संस्कृतटीका रचिताः।

'विठोबा अण्णा' कृतानि पद्यानि दक्षिणेषु विषयेषु विशेषरूपेण प्रख्यातानि।

शुद्धब्रह्मपरात्परराम। कालात्मकपरमेश्वरराम
लीलाकल्पित जगदभिराम। शेषतल्पसुख-निद्रित राम
ब्रह्माद्यमरप्रार्थित राम। शिष्टाश्रितजनरक्षित राम
चण्डकिरण-कुलमण्डनराम। श्रीमद्दशरथनन्दनराम
* ४ * (नामरामायणम्)

इयं सुमधुर पदलालित्ययुक्ता रचनैतेषामेव! एतेषां 'आनन्दाचा कन्द हरि हा देवकिनन्दन पाहिला' इदं सुमधुरं भक्तियुक्तान्तः करणेत कृतं पद्यं मराठीभाषाभिज्ञानां विदितचरमेव। कीर्तनकारिहरिदासानांत्विदं, विशेषतः प्रियं भवति। निम्नलिखिताः प्रवन्धास्तै रचिताः—'सुश्लोकलाघवम्', 'हेतुरामायणम्', 'प्रबोधोत्सवलाघवम्', 'प्रयोगलाघवम्', 'नित्यकर्मलाघवम्', 'सङ्कल्पः', 'रामतापिनी', 'विवाहतत्त्वम्', 'साधुपार्षदलाघवम्'. 'एकादशी विचारः', 'गजेन्द्रचम्पूः' आदयः।

१ 'चिरौंजी' इतिभाषायां प्रसिद्धम्

एतेषां काव्येषु मुख्यतया श्रेष्ठौ गुणौ भक्ति प्रसादौ वर्तेते। 'सुश्लोकलाघवे' ग्रन्थे काव्य-पाटवं रचना-चातुर्यं कल्पना-कौशलं च प्रति-पदं दृश्यन्ते। सुश्लोक-लाघवरचनाहेतुस्तेषामेव शब्दैर्दीयतेऽस्माभिः—

सुविचित्र वाक्यरचनं सुजनाः सुश्लोकलाघवं शृणुत।
स्पष्टं नृणां प्रतिष्ठा दृष्टा नूनं यतो जनस्थाने॥

अस्य ग्रन्थस्य माहात्म्यमपि तेषामेव शब्दैः शृणुत-

सुश्लोकलाघवश्लोकं विचित्रानन्ददायकम्।
सकलाः स्पृहयन्त्येव हरिदासा विशेषतः॥ १॥
सुश्लोकलाघवश्लोकः प्रस्तुतो जनसंसदि।
न कस्मै रोचतां नूनमेकां खरचमूं विना॥ २॥

सुश्लोकलाघवस्य श्लोकाः सकलानां स्पृहणीया विशेषतस्तु स-कलानाम्। हरिदासानां कृते भगवद्गुणवर्णनेन ते प्रसन्ना भवन्ति रचना कौशलेन ते हरिदासानां (कीर्तनकीर्तन् महाराष्ट्रदेशेषु 'हरि-दास' इति संज्ञया जानन्ति जनाः। भगवत्कथाकीर्तन मेव तेषां वृत्तिसाधनम्) प्रियतरा भवन्ति। सुश्लोकलाघवश्लोक एकां खरचमूं खलचमूं वा विना कस्मै न रोचते। सर्वेभ्य एव।

ग्रन्थस्यास्यान्तिमभागे कविवरेणानेन स्वयमेव लिखितम् यद्यथा मे कुलदैवतं श्रीरामचन्द्रः प्रेरये-त्तथैवाहं समग्रमवोचम् इति। स्वनामपि तेनैवं लिखितं—

यस्य श्रीकरहाटकाभिधमहाक्षेत्रे निवासो महा-
देवो यस्य पिताऽच्युताङ्घ्रिनिरतो माता च गीताह्वया
सर्वस्वं रघुनन्दनाङ्घ्रियुगलं यस्यैहिकामुष्मिकं-
ग्रन्थेऽस्मिन्स निमित्तमात्रमभवत्पन्तादिमो विठ्ठलः



ग्रन्थग्रथनकालोऽपि दत्तः पण्डितप्रवरेणानेन यथा-शालिवाहन भूपालशकेऽक्ष्ताश्वाश्वभूमिते [१७७५] ग्रन्थोऽयं ग्रथितः सन्तः पन्तविठ्ठल शर्मणा॥





# सुप्रभातोत्सवः।

(ले० —श्रीचक्रधरशास्त्री, बहुगुणाः)

[अवशिष्टांशः]



(ततः प्रविशति ज्ञान-विज्ञानाभ्यां निगड़बद्धमज्ञानम्)

*अज्ञानम्—त्राहि! त्राहि! रक्ष! रक्ष! नास्ति मे शरणम्। किं करोमि? क्व गच्छामि? एताभ्यां दृढं निग-ड़बद्धोऽहं स्वेच्छया विचरितुं न शक्नोमि। हा दैव! दुर्विदग्ध! नष्टं मे स्वातन्त्र्यम्, नयनविहीनस्येव न किमपि मे भाति। यवनसमयान्मे निरर्गलमासीत् राज्यम्। तन्मध्य एव सहसा भग्नम्। (इति बहुलं विलपति)

भारतभाग्यम्—को भवान्? किं निमित्तं रोदिसि? किं कष्टं वर्त्तते?

अज्ञानम्—अहमस्मि, हतभाग्यधेयमहमस्मि। (पुन-र्विलपति)

भारतभाग्यम्—वद-वद! स्वदुःखस्य, रोदनस्य कार-णम्। विश्रब्धम् कथय स्वकीयोदन्तजातम्। कोऽसि भवान्?

अज्ञानम्—अरे अहमस्सि। यस्य भारते निष्कण्टकं राज्यमासीत्। यस्माद्भारतभाग्यमपि पलायिता। यस्य समये मुसलमानानां मुसलस्येवाधिपत्यमासीत्। सोहं सकल चराचर विदितोऽज्ञानोऽस्सि। अद्य दौर्भाग्यादेतयोर्महाधूर्तयो-र्हस्ते पतितोऽस्सि। अतएव विलपामि।

* अज्ञानत्वादशुद्धि बहुलं वक्ति।

**भारतभाग्यम्**—(सभ्रूक्षेपम्) तिष्ठ धूर्त ! तिष्ठ । त्वमेवासि भारतदैन्यस्य निदानम्, दुर्विदग्धतायाः कारणम् ! तिष्ठ ! करोमि ते चिकित्साम्। (भारतीमवलोक्य) एतच्चिरायाद्य मे भुजपञ्जरे पतितं, तत्करोम्यस्य शल्यम् । ( इतिकरेणदृढं गृह्णाति ) वद रे वद !, किन्ते करोमि ? ( दृष्ट्वा ) अहो ! एतत्तु 'सुप्रभातालोके' ऽन्धं जातम्, न जाने सूर्योदये काऽस्य-गतिर्भविता । तन्मुञ्चामि । परं नहि, दुष्टस्य वधोऽवधः । ताड़नमेव हितम् । ( इति ताड़यितुमिच्छति ) ।

**अज्ञानम्**—कोर्भवान् ! मा मा मारय । दयनीयोस्मि-सोयम् । यतः 'सुप्रभात' स्यालोकेन मे हृदयं नितरां कम्पते । नयने च क्षीणक्षीणे । परन्तत्प्रभातं सूर्योदयेनानुगतमिति, श्रावं श्रावं मृतप्रायोऽस्मिसंवृत्तः । एताभ्याञ्च दुष्टाभ्यामहं-निगड़े पातितः। तत्प्रणतोऽस्मि शरणाय। प्रार्थयामि चाभयम्।

**भारत भाग्यम्**—( भारती मुद्दिश्य ) अस्ति कृपा-पात्रं यदेतदन्धम्। अन्धस्य वधाय नास्ति शास्त्रानुज्ञा । न चायं ममात्मा प्रभवति । ( अज्ञानं प्रति ) तन्मुञ्चामि गच्छ ! मूर्ख ! गच्छान्यत्र !

**सुरभारती**—तात ! भारतभाग्यधेयम् ! प्रीतास्मि तवात्मन औदार्येण धर्मपरायणतया च।

**अज्ञानम्**—भगवन् ! भवतां सङ्गमात्रेणैव मे चेतसि प्रकाशं जातम् । तत्क्षमस्व मां । प्रसीद ! मयि प्रसीद ! परमानुकम्पयोपदिश यां स्वनामधेयपुरःसरम् ।

**भारतभाग्यम्**—आः ! ते भाषणेनैव ज्ञायते यदीश्वर स्त्वयि प्रसन्नो जातः । तच्छृणु 'भारतभाग्य' मिति जना मे नाम कथयन्ति । सम्प्रति तुभ्यमुपदिशामि यत्त्वमितो भारतात् स्वकुटुम्बीयैः कुटिलता-जड़ता-दुर्जनता-आदिभिः सह ताम्रकूटगुहासु गत्वा स्वदुराचारस्य पश्चात्तापं कुरु, स्फटिकाच्छहिमराशौ स्वात्म-विसर्जनं विधेहि । येन ते भावि जन्म उज्वलं विशुद्धञ्च भवेत् ।

**अज्ञानम्**—क्षम्यतां भगवन् ! ममापराधान् । मया तु दुर्विनीतेनाखर्वगर्ववशादनेकदुराचारैर्भवतामन्तःकरणमतीव क्लेशितम् । तस्मात्ते शतशः क्षमामभ्यर्थयामि । ( इति पादयोः पतति )

**भारतभाग्यम्**—सर्वं मया विस्मृतम् । त्वं गच्छ धर्मपरो भूत्वा दिवसान् यापय ।

**अज्ञानम्**—यथोपदिशति भवान् । ( इति निष्क्रान्तम् )

**सुरभारती**—( ज्ञानविज्ञाने प्रति ) पुत्रके ! युवां भारतं निबोधयतम् । तस्य साहाय्यं कुरुतम् । अद्य तस्य पुनस्तिलकोत्सवायोपस्करणं आनयतम् ।

उभे--यथाज्ञापयति भवती । ( इति निष्क्रान्ते । )

( ततः प्रविशति भारतं, सोपस्करणे ज्ञान विज्ञाने च )

**भारतम्**—सुरभारत्याः पादयोः प्रणिपत्य ) अम्ब ! चिरस्यानुग्रहीतोऽस्मि ।

**सुरभारती**—पुत्र ! उत्तिष्ठ ! अवलोकयस्वाग्रजं भारतभाग्यम् । ( परस्परं मिलित्वोभे परिष्वजतः ।

( सर्वाणि सुरभारतीञ्च स्तुवन्ति )

"सद्भावा, शुचि रुज्वलामितरसा, सद्बन्ध-सन्मात्रिका,
सद्वर्णा मृदुरीतिमोहनरता, स्वच्छावगाहा स्थिरा ।
जाड्यध्वान्त-निरास-रास-रसिका यालंकृता सर्वदा
सा पायात्परदेवतेव भवती श्रीभारती नः सदा ॥ ६ ॥

**सुरभारती**—अये ! सुतरां प्रसन्नाऽस्मि । भारतस्य चेच्छामि पुना राजतिलकं स्वहस्तेन कर्तुम् ।

**भारतम्**—यथाभिमतं भवत्यै ।

**सुरभारती**—( स्वहस्तेन भारतभाले तिलकं विधाय ) वत्स ! सम्प्रति कृतयुगसमयवद्यापि प्रजानुरञ्जनं विधेहि । भारतभाग्यञ्च स्वेच्छया विहरतु । ज्ञानविज्ञाने च चिरं विजृम्भेताम् ।

**सर्वाणि**—यथाभवत्या आशिषस्तथैव भविष्यति ।

**सुरभारती**—किं ते भूयः प्रियमुपकरोमि ।

**भारतम्**—अतः परमपि प्रियमस्ति ? यदि विशेषं प्रियं कर्तुमिच्छसि तर्हीदमस्तु—

"प्रजा हृष्टापुष्टाः किमुत शरदां नन्दतु शतम्
प्रवर्तन्तां विश्वे प्रकृतिइहिताय क्षितिभुजः ।

नृणां भक्तिर्भूयाद्भगवति भवे द्वैतगलिता
ममान्तस्तापं ते शमयतु च मन्दस्मितमदः ॥ ७ ॥

सुरभारती—तथास्तु ।

( इति निष्क्रान्ताः सर्वे । )

॥ *समाप्तश्चायमुत्सवः* ॥



## सिंहदिलीपयोः सम्वादः ।

### छात्राणां कृते

गुरोराज्ञां स्वीकृत्य, सम्राट् दिलीपः, प्रातःकाले समुत्थाय, जायाप्रतिग्राहितगन्धमाल्याम्, पीतप्रतिबद्धवत्साम्, वशिष्ठधेनुं नन्दिनीं वनाय मुमोच । स च—'स्थितः स्थितामुच्चलितः प्रयातां निषेदुषीमासनबन्धधीरः । जलाभिलाषी जलमाददानां छायेव तां भूपतिरन्वगच्छत्'।

एवं आस्वादवद्भिः तृणानां कवलैः, कण्डूयनैः, वनमक्षिकापसारणैः, निःशङ्क—स्वच्छन्दगमनैश्च एकविंशतिदिनानि यावत् समाराधयामास ।

अन्येद्युः—आत्मानुचरस्य भावं जिज्ञासमाना नन्दिनी, गङ्गाप्रपातान्तविरूढशष्पां हिमालयस्य गुहां प्रविवेश । सा हिंस्रैर्मनसाऽपि दुष्प्रधर्षा–इति नृपः पर्वतस्य प्राकृत-सुषमायाः विलोकने संलीनोऽभवत् । अपरतश्च गुहाशयः सिंहो हठात् नन्दिनीमाक्रमत् । ततश्च धेन्वाः कातरं दीन-दीनमाक्रन्दनमाकर्ण्य, राजा तत्र दृष्टिं निचिक्षेप । नान्दन्या उपरि स्थितं सिंहमालोक्य विस्मय-क्रोधाविष्टो राजा सत्वरं तूणीरात् शरं निष्कासयितुं प्रायतत्, परं तस्य दक्षिणो हस्तः सायक-पुङ्ख एव चित्र-लिखित इव तस्थे ।

ततो हस्तावरोधेन क्रोधाभिभूतं चकित-चकितं राजानमत्यन्तं विस्मापयन् सिंहो मनुष्यभाषायां तमुवाच—

"हे राजन् ! परिश्रमं मा कुरु । मयि तव बाणप्रक्षेपण-प्रयासो व्यर्थ एव । अहं खलु कुम्भोदरनामा शिवस्य गणोऽस्मि । शिवो मत्पृष्ठे पादन्यासं कृत्वा वृषभमारोहात । यं खलु पुरस्तात् देवदारुवृक्षमवलोकयसि, असौ शिवेन पुत्र इव स्वीकृतः, पार्वत्या स्वयं जलसेकेनाऽयं संवर्धितः । एकदा कटं कण्डूयमानेन वन्येन गजेन अस्य त्वक् समुत्पाटिता । तदा पार्वती नितरामेनं स्वपुत्रमिव शुशोच । तत एव कालादारभ्य शिवेन सिंहत्वं विधाय, अहमस्य रक्षायै पर्वत-गुहायां नियुक्तः । अहमङ्कागतसत्ववृत्तिरस्मि । तदियं धेनुर्बहुकालानन्तरमत्र समागता मम पारणा भविष्यति । अतस्त्वं लज्जां विहाय निवर्तस्व ! नात्र ते परिवादः । अत्र दैवकार्ये शस्त्राणां पौरुषस्य च प्रभावो नास्ति ।"

इति सिंहस्य वचनं श्रुत्वा राजा लज्जां तत्याज । जगाद च हे सिंह ! यद्यपि मदुक्तं हास्यं भवेत् तथापि वाच्यम् । यतो भवान् सर्वेषां हृदयस्याभिप्रायं जानासि, अतो वदामि । सः खलु शिवो मे मान्यः, इदमपि च गुरोर्धनं नेत्राणां समक्षं विनश्यच्चोपेक्षणीयं भवति, अतस्त्वमिमां वराकीं त्यज ! मम शरीरेण स्व-शरीरवृत्तिं निर्वर्तयस्व । तत्स्थाने मां मेव भुङ्क्ष्व ।"

ततःसिंहः प्रत्युवाच—

"हेनृप ! एकातपत्रं जगतः प्रभुत्वम्, नवं वयः, इदं सुन्दरं शरीरञ्चेति, एकस्या धेनोः कृते एतत्सर्वं त्यक्तुमिच्छन् भवान् विवेक-विकलोऽसीति प्रतीयते । त्वं हि कोटिशः घटोध्नीः गाः दत्वा अस्याः क्षतिं पूरयिष्यसि । परन्तु त्वन्तु जगतामधीश्वरः, तव विनाशे जगतः सर्वस्वं विनष्टं स्यात् । तत्स्वदेहं रक्ष । इमां जहीहि ।'

ततो नन्दिन्या कातरतया निरीक्ष्यमाणो दिलीपः पुनरुवाच—

"अयि मृगाधिराज ! क्षतात् किल त्रायत इत्युदग्रः क्षत्रस्य शब्दो भुवनेषु रूढः । राज्येन किं तद्विपरीतवृत्तेः प्राणरुपक्रोशमलीमसैर्वा । इयं खलु न सामान्या गौः । इयं कामधेनोः सुता कामधेनुरेव । न साधारणा हिंस्रा एनामाक्रमितुं शक्नुवन्ति । त्वया तु शिवप्रभावेणास्यां प्रहृतम् । तदहमस्या निष्क्रयेण स्वदेहं ददामि । एवं तव पारणा विहता न स्यात्, मुनेश्च क्रियार्थो न लुप्तः स्यात् । परवान् भवानपि जानाति यत् रक्षकः स्वयमक्षतो नियोक्तुरग्रे रक्ष्यं विनाश्य न स्थातुमर्हति । एकान्तविध्वंसिषु मद्विधानां पिण्डेष्वनास्था खलु भौतिकेषु-इति त्वं मे प्रणयं स्वीकुरु ।'

इत्युक्त्वा दिलीप अमिषस्य पिण्डमिव स्वदेहं हरये समुपानयत् । ततश्च तस्य अवाङ्मुखस्योपरि विद्याधर-हस्तमुक्ता पुष्प-वृष्टिः पपात ।

ततश्च—

"उत्तिष्ठ वत्सेत्यमृतायमानं वचो निशम्योत्थितमुत्थितः सन् । ददर्श राजा जननी मिव स्वां गामग्रतः प्रस्नविणीं न सिंहम् ।"

तदनन्तरं प्रीता नन्दिनी तस्मै वरप्रदानमकरोत् । कृतार्थो राजा तया सह वनान्तादाश्रममागत्य गुरवे सुदक्षिणायै च वरप्रदानवृत्तान्तं निवेद्यामन्दानन्दमविन्दत ।

—:०:—




'ग़ज़ल' गीतिः [ रेख़ता ]

अहो श्रीभारताभिख्योऽतिसुख्यो दिव्यदेशोऽयम् ।
अपि ध्यायेत्सुरेशो यं स भूमेः संनिवेशोऽयम् ॥
जगज्जीवातवे जाताऽनुयाता जाह्नवी यस्मिन् ।
प्रसर्पत्पुण्यपीयूष-प्रवेशो भू-प्रदेशोऽयम् ॥ १ ॥
त्रिलोकाधीश्वरो यस्मिन् हरो वाराणसी-वासी ।
प्रहासी स्वर्गसौख्यानां विभासी भूनिवेशोऽयम् ॥२॥
हर्यिस्मिन् वहून् वारान्समादत्तेऽवतारांस्तान् ।
ध्रुवं मन्ये महिम्ना नाकलोकस्यापदेशोऽयम् ॥ ३ ॥
अमुष्मिन्वर्द्धितानन्दो मुकुन्दो मोदमातेने ।
तदीयाऽलङ्घ्यलीलाभिर्विलीनाऽलीक-लेशोऽयम् ॥४॥
हिमाद्रिः प्रोन्नते मौलौ चकासच्चामरं धत्ते ।
उदन्वद्धौतपादाग्रो नरेशानां नरेशोऽयम् ॥ ५ ॥
विराजत्कुङ्कुमक्षेत्रे विजेत्राऽशेषदेशानाम् ।
स वै काश्मीरदेशोऽस्मिन् समिन्धे स्वर्गशेषोऽयम् ॥६॥

महिमद्वारा स्वर्गलोकस्य व्यपदेश इत्यर्थः ॥३
अलीकम् पातकम् ॥४ अस्य देशस्य उन्नते मस्तके । हिमाद्रिः चामरं धत्ते । राजचिह्नमेतेन ॥५ विराजन्ति कुङ्कुमक्षेत्राणि ( 'केसरके खेत' ) यस्मिन् । शोभया सर्वदेशानां विजेता । समिन्धे दीप्यते कद् ॥६

कला-विद्या-गृहं यस्मिन् जयाद्यं तत्पुरं रम्यम् ।
स धीमान्मानसिंहाख्योऽधितिष्ठत्यम्बरेशोऽयम् ॥७॥
भ्रियन्तेऽस्मिन्निधिप्रख्याः सुविख्याता अमी वेदाः ।
भृशं भूमण्डले ख्यातोऽवदातो यन्निदेशोऽयम् ॥८॥
अमुष्मिन्नुष्णशीताद्याः प्रतीताः स्युर्यथाकालम् ।
अहो क्रीडास्थलं देव्याः प्रकृत्याः पुण्यवेषोऽयम् ॥९॥
भृतो नानाविधैर्धान्यैः किलान्यैर्यानि नीयन्ते ।
अहो सर्वानुजीव्यानन्तसंपत्संप्रवेशोऽयम् ॥ १० ॥
रसालाद्योटनारङ्गाऽम्बुजद्राक्षेक्षुजम्बीरम् ।
फलं यस्मिन्नलं सिध्येत्स कश्चिद्भूविशेषोऽयम् ॥११॥
खनिभ्यो हीरकं सूते, प्रभूतेलासनाथोऽयम् ।
ध्रुवं नानाऽऽकराधीशो धनेशानां धनेशोऽयम् ॥१२॥
अमुष्मिन्नेव सर्वादौ दिदीपे ज्ञानदीपोऽयम् ।
सदा ह्यध्यात्मविद्यायां बुधानां श्मश्रुकेशोऽयम् ॥१३॥
हिमाद्रिर्मस्तकम्, बाहू इमौ पूर्वापरौ देशौ ।
हृदा ध्येयाङ्गसंस्थानं दधानोऽस्मत्परेशोऽयम् ॥१४॥
हिमाद्रौ मस्तके गङ्गा, भुजङ्गा भूरि जृम्भन्ते ।
सदा धर्मानुयातोऽवदातो व्योमकेशोऽयम् ॥१५॥

---

जयाद्यं पुरं जयपुरम् । आम्बेर राजधान्याः ईशः ॥७ अवदातः पवित्रः । येषां वेदानां निदेशः (आज्ञा)॥८ सर्वैर्वैश्यैः अनुजीव्यः अनन्तः संपत्प्रवेशो यस्य ॥९॥ आम्रादिकं फलं यस्मिन् पर्याप्तम् उत्पद्येत, सोऽनिर्वचनीयो भूविशेषः ॥११ प्रभूता या इला ( पृथिवी ) तत्सनाथः । विस्तृत इत्यर्थः । नानाविधानाम् लोह-भौमाङ्गारसमरराद्याकराणाम् (खनीनाम्) अधीशः ॥१२ श्मश्रुकेशः ( 'मूछों का बाल' ) । लोकोक्त्यलङ्कारः ॥१३ वङ्गादिः पूर्वदेशः, सिन्ध्वादिः पश्चिमदेशश्चेति द्वाविमौ बाहू परेशः परमेश्वरः ॥१४

हिमाद्रिरूपे मस्तके गङ्गा भातीति व्यस्तरूपकम् भुजङ्गा देशोत्सादकाः सर्पाः धर्मानुगामी, व्योमकेशस्तु धर्मेण वृषेण अनुयातः । शुद्धाङ्गः, श्वेताङ्गश्च । व्योमकेशः शिवः ॥१९

कियद्धु गीतानि गायामो न तृप्यामो गुणैः, किन्तु ।
करेणाऽऽपाद्यतेदानीं स्वदेशो हा विदेशोऽयम् ॥१६॥
सखे ! हे मञ्जुनाथालं मुधा मा यापयेः कालम् ।
अहो ते संस्कृतोपेनो न रोचेतोपदेशोऽयम् ॥ १७ ॥

—भट्ट श्रीमथुरानाथ शास्त्री [ साहित्याचार्यः ]

[ 'संस्कृतरत्नाकरस्य भूतपूर्वः संयुक्त-सम्पादकः ]

जयपुरम् ।



## समस्यापूर्त्ति ।

त्वमधुनाऽसि कथं मलिनानना ।
कथय मानमदोन्नतमानसे !
नयन-गोचरतां क्वचिदञ्चिता ।
"कमलिनी मलिनी कमलाकरे" ॥१॥
सरसि लोलमरालकुले भ्रमद्—
भ्रमर-पुञ्ज-सुगुञ्जन-मञ्जुले ॥
विधिवशादहहाऽस्तमुपागते
"कमलिनी मलिनी कमलाकरे" ॥२॥

—श्रीभूपनारायण झा ।

---

जनैः करेण स्वहस्तेन, स्वदेशोऽप्ययं विदेशः आपाद्यत ( लङ् ) विहितः । तथात्रष्ठीयते सर्वैर्यथा विदेशवदस्माकं स्थितिः स्यादित्याशयः । करेण राजदेयद्रव्येण प्रियोऽस्माकं स्वदेशोऽपि विदेश इदानीं जात इति त्वर्थो नास्ति । ॥१६

---

☞ सुप्रभात-ग्राहकैः पत्रलेखनावसरे ग्राहकसङ्ख्या नूनं लेखनीया । सम्पादकीयपत्रेषु च पूर्णः स्व-सङ्केतो लेख्यः । —व्यवस्थापकः ।

# मद्रास–भारतीयमहासभा ।

## हिन्दूयवनैक्यस्य अपूर्वं दृश्यम् ।

### श्रीमालवीयचरणेषु अलीमहम्मदस्य मस्तकम् ।

महादेव शास्त्री, पाण्डेय ।

मद्रासे भारतमहासभा-साफल्ये गान्धीमहात्मनो विचाराः ।

गान्धीमहोदयोऽद्य सायंकालेऽत्र समागतः । मद्रासे भारतमहासमायाः सम्बन्धे "डेलीमेल" पत्रप्रतिनिधेः प्रश्ने महात्मना उक्तं यत्, मद्रासमहासभया हिन्दूयवनैक्यस्य शिलान्यासः कृतः । अतएव वक्तुं शक्यते,यत्,भारतमहासमितेरिदमधिवेशनमपूर्वं साफल्यमलभत । प्रस्तावदृष्ट्या मया नेदमुच्यते किन्तु प्रस्तावा येन प्रकारेण उपस्थाप्य स्वीकृताः तद्बुद्ध्वा इदमुच्यते । हिन्दूयवनैक्यसम्बन्धिनि प्रस्तावे भाषमाणेन पण्डितमदनमोहनमालवीयेन ये भावाः प्रकटितः, तत्र च अलीबन्धुभ्यां यथा आदरः प्रदर्शितः तत्सर्वं भाविशुभलक्षणम् । मालवीयमहोदयैर्भाषणे परिसमापिते मान्यालीमहम्मदो हर्षातिरेकेण तदीयचरणयोः पपात—मौ० अलीशौकतश्च तालवृन्तं चालयामास । तदानीं सभायामनुपस्थानात् तदपूर्वदृश्यावलोकनस्य मम सौभाग्यं नाभूत् । परन्तु राष्ट्रपतिः डा० अन्सारी तद्दृश्यवर्णनं माम् अश्रावयद् । यतो मम महान्प्रमोदो जातः, मन्मनसि च बृहती बृहती आशा समुदभवत् । अहं सम्भावयामि यद् परस्परस्नेहस्य सद्भावाः समस्ते भारतवर्षे प्रसरेयुः, सर्वेषु दलेषु च आदरपात्रं भवेयुः । एतदपूर्वभावोत्पत्तिहेतोः डा० अन्सारी श्री श्रीनिवास ऐयंगरश्च भारतस्य कृतज्ञताभाजने स्तः ।

### पूर्णस्वतन्त्रतायाः प्रस्तावः ।

प्रतिनिधेः प्रश्ने यत् पूर्णस्वन्त्रताप्रस्तावे विचारस्य समये महासभायां भवान् किमिति नोपातिष्ठत ? महात्मना उक्तं यत् स्वास्थ्यस्य असौष्ठवात् कस्यांचिदपि सभायां ममोपस्थानं न सम्भूतमासीत् । चिकित्सकैर्मित्रैश्च मद्रासमहासभायां मम गमनं निषिद्धं समभूत् । परन्तु तदुक्तप्रमादस्य अहं तदभिप्रायेणैव महासभामागतो यत् महासभाया यथाशक्ति साहाय्यमाचरेयम् ।

अस्मिन्प्रश्ने यत् पूर्णस्वाधीनताप्रस्तावं भवान् न समर्थयते ? महात्मा अवोचत्, यत् अहं न समर्थये परन्तु एवमाचरणस्य नायं हेतुर्यत्तत्प्रस्तावविरोधिनः कथयन्ति । गतवर्षे पूर्णस्वाधीनतायाः प्रस्तावः उपस्थापितः, तदानीमेव मया तत्समर्थनाभावस्य कारणमुक्तम् । मद्वचनस्य अर्थो नायं बोध्यः, यदहं भारतवर्षं पूर्णस्वाधीनतायोग्यं न मानयामि । 'भारतवर्षं पूर्णस्वाधीनतायोग्यम् अद्यापि नास्ति' अयं विचारो मे मनसि कदापि उत्पन्न एव न भवति ।

* * * *

### हिन्दूयवनानामेकता ।

#### मालवीयमहोदयस्य गौरवपूर्णं भाषणम् ।

साधारणतया जनताधारणा इयमेव वर्तते यन्महासभायां पण्डित मदनमोहन मालवीय-भाषणेनैव हिन्दूयवनैकताप्रस्तावस्य विरोधा अवरुद्धाः । पण्डितवर्यस्य भाषणप्रभाव इयान् मौ० अलीमहम्मदस्योपरि पतितः । यतः तत्रभवता इदं भाषणमद्भुतमभिहितं गौराङ्गेभ्यश्चैतद्वक्तुमारब्धं यद्भारते अल्पसंख्यकानां रक्षकः पण्डित मदनमोहनमालवीयोऽस्ति ।

पण्डितवर्यः स्वभाषणे उक्तवान्—भवद्भिः एतत्प्रस्तावसम्बन्धे बहु श्रुतम् । अहमपि एकं द्वे वा वचः भवद्भ्यः कथयिष्यामि । अस्य प्रस्तावस्य उद्देश्यं मतभेदनिवर्त्तनम्, विरोधप्रशमनम् सम्भूय स्वराज्यपथप्रवर्त्तनं चास्ति । पृथग्निर्वाचनस्य वार्त्ता परित्यक्ता । अहं श्रीगौरीशङ्करमिश्रेण एकमतोऽस्मि

इच्छामि च विशेषप्रतिनिधित्वपरित्यागम्। वयं सर्वप्रयत्नेन सहयोगं करिष्यामः, अन्ततश्च मतविभेदे उपस्थिते तं निवारयिष्यामः। हिन्दुयवनैर्व्यवस्थापक सभाया एकप्रतिनिधिनिर्वाचने उत्सुकता प्रकटनीया। स प्रतिनिधिः हिन्दूः, यवनः, पारसीकः ईसवीयभारतीयो एव वा किं न भवतु स इदमेव विचारयतु, यद्, अहं भारतीयोऽस्मि, मया भारतस्य आवश्यकता पूरणीया। इति

प्रस्तावे उक्तमस्ति यदुत्तरपश्चिमसीमाप्रान्ते न्यायकार्यं तथैव भवतु, यथा अन्यप्रान्तेषु भवति। भाषाभेदमाश्रित्य प्रान्तसंघटनविषये केवलमेतदेव कथितं यत् प्रान्तस्तदैव पृथक क्रियेत; यदा प्रान्तनिवासिनस्तथा अभिलषन्ति। देशस्य आर्थिकदृष्ट्यैव प्रान्तस्य विभागो भवितुमर्हति। ईदृगवस्थायां महासभा प्रान्त-विभागे न विरुद्धा भविष्यन्ति।

हिन्दूयवनैकतासम्बन्धे महात्मना कथितं यत्, हिन्दवो यवनमन्दिरसमक्षं वाद्यानि न वादयन्तु, यवनाश्च गोवधं मा कुर्वन्तु। यवनाः कथयन्ति अस्माकं गोबधे अधिकारोऽस्ति। गतसहस्रवर्षस्य इतिहासः कथयति यत्, गोवधेन हिन्दूहृदयानि प्राणान्तपीडामनुभवन्ति। कश्मीरस्य एकनरेशः गोवधमन्याय्यमकथयत्। वाबरेण वसीयतनामपत्रे एवमेव लिखितम्। सा नीतिः यावद् अकबरराज्यसमयं कार्ये परिणता, परन्तु यदाप्रभृति लण्डननिवासिनाम् आगमनं तदाप्रभृति भारते प्रचुर गोवधप्रचार अवर्द्धत। गोवधविषये यवनैर्हिन्दुभावानाम्, यवनमन्दिरेषु वाद्यविषये हिन्दुभिः यवनभावानाम्, समादरः कर्त्तव्यः। एवमनुष्ठिते गोवधस्तत्फलीभूतो हिन्दूयवनविरोधश्च ध्रुवम् उन्मूलितौ भवेताम्।

यवना वाञ्छन्ति यत्तेषां जमायतीनमाजसमये विघ्नो माभूत्। हिन्दुभिस्तदिच्छाया आदरः करणीयः। गोवधस्य यवनमन्दिरसमक्षं वाद्यवादनस्य च निरोधाय न्यायालयशरणाश्रयणं लोष्ठलगुडादिप्रहारो वा निषेध्य एव भवतु। अयं प्रस्तावः अस्मान् एकपदमग्रे वर्द्धयति। न्यायालया अस्माकं वास्तविकीं सहायतां नाचरन्ति, किन्तु ते पर्यायेण जातिद्वयस्य साहायकं कृत्वा केवलं विभेदं जनयन्ति।

यदा प्रभृति शासनसुधारः समारब्धः तदाप्रभृति केचन लोका इमान् विरोधान् महतीं काष्ठामारोप्य वर्णयन्ति। ते इदं वक्तुमिच्छन्ति यद् वयं परस्परमेव कलहायामहे स्वराज्ययोग्या न स्मः। अस्माभिरल्पाल्पमतभेदा नैव कर्त्तव्याः। अस्माभिः स समयो ध्येयः, यदा आस्माकीनाः पोताः, आस्माकैरेव लोकैः संचाल्यमानाः, अस्मदीयाः पताकाः स्फारयन्तः, भारतमहासागरे विचरिष्यन्ति। वयमिच्छामो यत् अस्माकं स्वकीया सेना भवतु, यत्र अस्मदीया एव मनुष्याः सेनापतयः सेनाधिपतयश्च भवन्तु। वयमिच्छामः, यत् अस्मद्देशविभागे पारेसप्तसमुद्रं पारेत्रयोदशसरिच्च मनुष्या न प्रविशन्तु। वयमिच्छामः, यत् व्यापारेषु, राजनीतिषु, जलसेनासु, स्थलसेनासु प्रत्येकं कार्येषु च भारतीया एव भवन्तु। इदं सर्वम् एकेन सम्प्रदायेन साधयितुं दुःशकम् इति सम्भूय सर्वैः सम्प्रदायैः साधयितव्यम्। डा० अनसारी सेनापतिर्भवितुं शक्नोति, मदनमोहनमालवीयश्च शिक्षासचिवो भवितुं शक्नोति। देशे प्रेम शान्तिश्च भविष्यति, हिन्दवो यवनाश्च एकस्यैव ईश्वरस्य उपासकाः। ते एकस्या एव भारतमातुः सन्ततयः। मुष्टिपरिमाणा गौराङ्गाः क्रोशत्रिसहस्राद् दूराद् आगत्य अस्मान् शासति। भवद्भिरेष कलङ्कः प्रक्षाल्य प्रोन्मूलनीयः। यदि हिन्दवो, यवना ईसवीयभारतीयाश्च सर्वे सम्भूय एकमतीभवन्तु यत् सर्वेषाम् एक एवेश्वरः अस्ति, सर्वेषाम् एकैव माता भरतमाता तर्हि लण्डनसमाजे एतावती शक्तिर्नास्ति यद् एकमासमपि अस्माकमुपरि शासनं कुर्यात्।

*　　*　　*　　*

## भारतमहासभायाः सफलता।

### डा० अनसारिणो विचाराः।

### देशदुर्लभदृश्यदर्शनम्।

डा० अनसारिणा भारतमहासभाकार्यसम्बन्धे असोसिएटेड-मुद्रणालय प्रतिनिधिप्रश्ने राष्ट्रपतित्वेन स्वीया विचाराः प्रकटिताः। यद्यपि तेषां वदने कार्याधिक्यश्रान्तिसूचकानि चिह्नानि दृश्यन्तेस्म, तथापि ते प्रसन्नचेतस आसन्। तैः स्वप्रकाशमानमुखेन कथितम्—

अस्माभिस्तत्प्राप्तं यत्, सन्देहवादिनः असम्भवं वर्णयन्तिस्म। मया तदभूतपूर्वं दृश्यं कदापि न विस्मर्येत, यत्र सर्वसम्प्रदायानां विंशतिः सहस्रामिताः सत्या भारतीया एकीभूय

सम्प्रदायकलहं प्रशमयितुं स्वीयं निर्णयं घोषितवन्तः, येन अद्यत्वेऽपि अस्माकं मातृभूमिर्मलिनीकृता। एकतायाः प्रस्ताव इतरप्रस्तावानुसारं न केवलं स्वीकृतः, किन्तु यदा स स्वीकृतः, तद् वातावरणम् अदृश्यत तदा यद् अद्यत्वे दुर्लभो बोभूयते। इदं विलोक्य अस्माकं बहवो निराशावादिनो विश्वस्युर्यत्, साइमनकमीशननियुक्तिद्वारा भारतस्य योऽपमानः कृतः, तद्विरोधे अयं प्रस्तावः वस्तुतो राष्ट्रनिश्चय आसीत्। सम्राड् अमानुल्लाखानस्य अस्मद्देशे आगमनसमयस्य हार्दिकं क्षोभकं च भाषणं, साधुचरितस्य गान्धीमहात्मनः प्रभावः, श्रीश्रीनिवासैयंगरस्य स्फूर्त्तिः, भारतीयस्वाधीनतायै महद् युद्धं कुर्वाणस्य पण्डित मदनमोहनमालवीयस्य देशभक्तिः, तथा तेषामेकतासम्बन्धिनी गौरवपूर्णा वक्तृता च सर्वमिदं सहनशीलतायाः सद्भावस्य च सत्यं वातावरणमुत्पादयितुं संजघटे।

अस्माभिः साधु सम्यक्प्रकारेण आरम्भः कृतः, परन्तु विगताभिः कियतीभिर्दुर्घटनाभिर्जनितं विभेदं पूर्णतः प्रशमयितुं बहुकर्त्तव्यमवशिष्टम्। महासभया शान्त्यर्थं अमूल्योऽयमवसरः प्रदत्तः। ततोऽस्माभिर्लाभो ग्रहीतव्यः। अहं प्रत्येकं भारतीयं प्रार्थये, यत् स समस्तसाम्प्रदायिकेषु एकतां जनयितुं स्वकर्त्तव्यं जानातु, देशस्य सर्वस्मिन् राजनीतिककार्ये एकताया इदमपूर्वमुदाहरणं समक्षमादधातु। अहमाशासे, यद् वयं साइमनकमीशनबहिष्कारसफलतायै देशार्थम् पृथक्शासनयोजनायै च समर्थयामहे; या सर्वस्य देशवासिनः प्रार्थनां पूरयिष्यति। अहं पूर्णाशया उत्साहेन परावर्त्ते अहं विश्वसिमि, यत्, अग्रिमं वर्षं अस्माकं देशस्य इतिहासदृष्ट्या महत्त्वपूर्णं भविष्यति, महासभा चेदं स्मरणीयं विधास्यति।

—:०:—

## सुप्रभातस्य विशिष्टाङ्कः।

सुप्रभातस्य चतुर्थवर्षीया प्रथमसंख्या विशिष्टाङ्क रूपेण प्रकाशिता भविष्यति। एतस्मिन् विशेषाङ्के त्रिवर्णचित्राणि, साधारणचित्राणि, प्रचुराणि पत्राणि च भविष्यन्ति। लेखाश्च महतां विदुषां स्थास्यन्ति। एष समारम्भो सर्वथा-नवीन एव। एतस्य व्ययो न्यूनतः २९०) मुद्रामितः स्यात्। एतदायोजनस्य भारः सुप्रभात-पाठकानां सहृदयतामेवावलम्बते। तैर्यथाशक्ति प्रत्येकं सर्वविधं साहाय्यं प्रेषणीयम्।

—व्यवस्थापकः




वाद्य-प्रश्नः।

मद्रासनगरे राष्ट्रिय-महासभाया वार्षिकमहोत्सवे हिन्दूनां यवनानाञ्च स्नेह-सम्बन्धस्य सुदृढीकरणाय माननीयैर्गान्धि-मालवीय प्रभृतिभिर्निश्चितं यत्, यवना गोवधं त्यजन्तु, हिन्दवश्च तन्मन्दिराणामग्रे वाद्य-वादनं माकुर्युरिति। सर्वैरप्येष प्रस्तावो मालवीय-महोदयानामाग्रहेण स्वीकृतः। माननीयैर्मालवीय-महोदयैश्च गान्धिवत् चतुर्विंशतिमासाभ्यन्तरे स्वराज्यप्राप्तिरुद्घोषिता। अत्रास्माकमल्पज्ञानां संस्कृतज्ञानां विचार-प्रहसनं न शोभते, तथापि वयमनुमिनुमः, यत्, राजकीयसङ्घस्य ( रायलकमीशन ) महति विप्लवे देशकार्यसम्पादनाय नेतारः कुर्वन्तु नाम सभा-मञ्चे प्रेमाभिनयम्; परं 'प्राप्ते वसन्तसमये काकः काकः, पिकः पिक' एव भविष्यति। नाद्यावधि यवनमन्दिराणां सविधे वाद्यवादनस्य प्रतिबन्धः कदापि समाकर्णित आसीत्। तच्च हिन्दूनां देशे हिन्दूनां कर्तव्यमेव। तत्र यदि विधर्माणः काम्यापत्तिमाचरेयुस्तदा सुखमाचरन्तु। हन्त! किमल्पसङ्ख्यकानाम्, स्वं विदेशीयं मन्यमानानाम्, दरिद्राणां यवनानां भिया वयं स्वदेशेऽपि स्वीयान् महोत्सवानवरोत्स्यामः? अन्येषु देशेषु स्वल्पसङ्ख्यका वैदेशिका यथा निवसन्ति, तथैव निव-

सन्तु नाम मोहम्मदा अस्माकं देशे । अस्माकं देशे, अस्माकं रक्तैः पुष्टानां दरिद्राणां दासानां बर्बराणामस्माकमुपरि निर्भयं मूर्खताप्रयुक्तञ्च शासनं स्याच्चेदस्माकं हिन्दूनां जनिरेव व्यर्था । यदा वयं सर्वतः सर्वथा च समुन्नतिमारूढाना आङ्ग्लानां हस्तात् स्वं देशमाक्रष्टुमीहामहे, तदा के नाम मुष्टिमेया दासप्राया यवनाः ! अस्माभिस्तु भारते सर्वेषां भारत-प्रवासिनां विधर्मिणामुपरि आश्रयत्वेन पोषकत्वेन च स्थातव्यम् । वयम्; अस्माकं देशः, अस्माकं धनम्, सर्वं हिन्दूनां विद्यते। ये तावदस्माकं छत्रच्छायायां निवसन्ति ते मोहम्मद-पारसीक-ईसवीय-धर्मावलम्बिनोऽस्माकमुपजीव्याः । त एव यदि हिन्दूनामुपरि शासनं कुर्वन्ति चेत् कृतं स्वाराज्य-योग्यतया । मोहम्मदीयैरीशवीयैः पारसीकै र्भारतीयैर्हिन्दूभिः सह तथा स्थातव्यम्; यथा अन्येषूपनिवेशेषु वैदेशिका स्तिष्ठन्ति । हिन्दवस्तु स्वोपजीविनां सर्वासां स्वल्पसंख्यकानां जातीनां प्रेम्णा, धनेन, अन्यैश्च प्रकारैः पोषणं कुर्वन्ति, ते तु दुष्टाः विषमुद्गिरन्तीति राजनीतिकदृष्ट्या, नैतिकदृष्ट्या, सामाजिकदृष्ट्या च हिन्दूनां कृते नितरां हानिजनकम् । अस्माभिस्तु सर्वेषामेव स्वतन्त्रदेशानां पुरः सर्वेषां विधर्मिणां स्वाङ्गेषु निवेशनं कृत्वा, केवलं हिन्दुत्वेनावस्थातव्यम् । तदा हिन्दूनां नैतिकी योग्यता समस्तेऽपि भूमण्डले प्रत्यक्षं प्रतीयेत । अत्रतु वयं स्वजन्मसिद्धमधिकारं त्यक्त्वा सहजशत्रूणां यवनानां चाटुकारा भवामः इति न कदापि कल्याणकरमस्माकमिति सुधीरं विवेचनीयोऽयं प्रश्नः ।

*　　*　　*　　*

*गोवध-निषेधः ।*

गोवध-निषेध विषये माननीयैर्मालवीयमहोदयैर्यवनाः प्रार्थिताः, यत्ते 'गोवधं मा कुर्वन्तु' । एकतः ख्वाजाहसननिजामी प्रभृतयो बहवो गोवधप्रचाराय सततं प्रयतन्ते,अन्यतो मालवीय-महोदयाः पञ्चष-यवनानां विश्वासेन गोवधनिषेधं कुर्वन्ति । हिन्दवस्तु पूज्यपादानां मालवीय-महोदयानामाज्ञया वाद्यं न वादयिष्यन्ति, परन्तु यवनाः मोहम्मद-अली प्रभृतिनां कथनेन न गोवधं रोत्स्यन्ति । प्रत्युत ख्वाजाप्रभृतीनां कथनेन विशिष्टतया करिष्यन्ति । एतेनास्माकं हानिरेव भविष्यति । गोवधस्य निषेधोऽपि न भविष्यति । यवनास्तु निभृतं शून्यमन्दिरेषु सुखं स्वच्छन्दं गोवधं करिष्यन्त्येव, परन्तु वराका हिन्दव एव वाद्यं वादयितुं न प्रभविष्यन्तीति प्रत्यक्षं प्रतीयते । दैववशात् यदि यवनाः गोवधं त्यक्ष्यन्त्यपि, तदापि आङ्ग्लास्तु करिष्यन्त्येव । यवनास्तु स्वल्पमेव गोवधं कुर्वन्ति, आधिक्येन तु आँग्ला एव । एवं स्थिते नैतावता कार्यं सेत्स्यति । गोवधविषये प्रान्तीयासु व्यवस्थासभासु, प्रधानव्यवस्थासभायाञ्च हिन्दुभिर्यवनैश्च मिलित्वा प्रस्तावाः स्वीकारयितव्याः, यत्, "दुग्धेन घृतेन च विना भारतीयानां पुंस्त्वमेव शनैः शनैर्व्यपगच्छति । बालाः, युवानश्च प्रत्यहं क्षीणतां भजन्ते । भारतीयं सर्वस्वं कृषि र्हि नाम गवां विना न भविष्यति चेद्, वयं बुभुक्षिता एव मरिष्याम इति भारते स्वास्थ्यदृष्ट्या, आर्थिकया च दृष्ट्या सर्वथा गवां संरक्षणं विधेयम् ।" भारते गोवध एव न स्यादितिराजकीयनियम एव भवेत् । भारतीयं स्वास्थ्यं गवां संरक्षणेन,

सम्बर्द्धनेन च स्यादिति गोचिकित्सा-शास्त्रस्य गोपालन-पद्धतेश्च प्रचाराय महानारम्भो विधेय इति । यदि सर्वेऽपि भारतीया व्यवस्थासभासु ऐकमत्येन प्रस्तावमिमं सन्निवेशयेयुः, सर्वत्र भारते सर्वधर्मिणाश्च महदान्दोलनं कुर्युश्चेत् गोरक्षा भवितुमर्हन्ति । नो चेत् प्रस्तावैर्भाषणैर्वा गोवध-निषेधो दुर्वार एव ।

*　　*　　*　　*

*हिन्दू सम्मेलनम् ।*

तत्रैव कांग्रेसनगरे हिन्दूमहासभाया हिन्दूसम्मेलनं माननीयानां श्रीमतां मालवीय-महोदयानां सभापतित्वे सम्पन्नम् । तत्र च महामान्यानां मालवीयानामयं निदेशो नितरां स्पृहणीयः, समादरणीयः, समाचरणीयश्चासीत्, यत्, हिन्दुभि र्हिन्दूधर्म प्रचाराय ईशवीय-प्रचारकाणां ( पादरी ) नीतिरवलम्बनीया । धार्मिक-प्रचाराय यादृशी नीतिः साम्प्रतमीशवीयानां विद्यते, तादृशी न कुत्रापि । ईशवीयैः प्रचारकैः शतवर्षाभ्यन्तरे शान्त्या धर्म-प्रचारः कृतः, तथा च साफल्यमनुभूतं यथा नान्येन केनापि । आर्यसमाजस्य संस्थापनमेतेषामेव निरोधायाभूत्, परन्तु नाद्यावधि यत्रकुत्राऽपीशवीयधर्मप्रचारकाणामन्यधर्मिभिः सह विवादोऽपि श्रुतः । तैः शतवर्षाभ्यन्तरे निभृतं शनैश्च यावत् साफल्यं लब्धम्, तावत्सप्तशतवर्षाभ्यन्तरे यवननृपतिभिरत्याचारेण, भयानकैश्चोपायैर्न प्राप्तमासीदिति प्रत्यक्षमेव । परमेतस्य कृते तादृशा एव ब्राह्मणाः, सन्यासिनश्चापेक्षन्ते ये खिष्टधर्मप्रचारकाणामिव, सहनशीलाः, सदाचाराः, स्वधर्म-दृढव्रताः, स्निग्धहृदयाः, तितीक्षवश्च स्युः । नोचेदनर्थ एव । एतादृशस्य हिन्दूसङ्घस्य ( हिन्दू-मिशन ) संस्थापनाय सुधीरमालोचनीयम् । तस्य नियमाश्च पालनीयाः, सुदृढाः, सत्याश्च स्युः । धर्म-प्रचाराय व्ययश्च प्रचुरः स्यात् । यत्रतत्रत्यानां शुद्धिसभा-हिन्दूसभाप्रभृतीनां विविधानां सभानामेकीकरणं विधाय प्रतिनगरं प्रति ग्रामं हिन्दूसङ्घस्यैव ( Hindu Mission ) संस्थापनं स्यात् । सर्वेषां सङ्घानां सञ्चालन-प्रचारण-नियमनादिप्रकारः समान एव स्यात् । एकैव कार्यप्रणाली सर्वत्र समानं व्यवहृता भवेत्तदाकार्यमिदं सम्यक् प्रचलिष्यतीति सम्भाव्यते । अत्र सर्वैरपि प्रचारकैरवधेयम् ।

*　　*　　*　　*

*यवन-सम्मेलनम् ।*

दिसम्बरमासस्यान्तिमे सप्ताहे लवपुरे कालिकान्तानगर्याञ्च यवन-सम्मेलन-द्वयमभूत् । यवनेषु दलद्वयमभूत् । एके ते वर्तन्ते, ये खलु सर्वथा धर्मान्धाः साम्प्रदायिकता-पिशाचिनीग्रस्ताः, भारते यवनशासनं पुनरप्यानयितुमीहमानाः, चाटुकाराः शफी-मोहानी-प्रभृतयो यवननेतारः । अपरतश्च राष्ट्रवादिनो यवना अन्सारी-जिन्ना-मोहम्मदअलीप्रभृतयः । कलिकातायामस्य नवीनदलस्य सम्मेलनम्, लवपुरे च प्राचीनदलस्य जातम् । द्वयोरपि प्रस्तावास्तत्तद्भावानुरूपा एवासन् । यद्यपि यवनसमाजस्य कृते मतभेदोऽयं भयजनकस्तथापि हिन्दूनां कृते राष्ट्रिय-हितदृष्ट्याऽपि दलद्वयमिदं भयजनकम् । एवं द्वैधे संस्थापिते कांग्रेस-महासभायाः साफल्यं वैफल्ये परिणतं न स्यादिति विभीमः ।

*　　*　　*　　*

माघमासस्याङ्कोऽपि मुद्रितप्रायएव, सच यथासमयात् प्रागेव ग्राहकाणां सविधे प्रहीयेत । होलिकाङ्क-कृते लेखकैः शिवरात्रितः प्रागेव लेखाः प्रेषणीयाः ।

*सनातनधर्म महासभा ।*

श्रीमतां माननीयानां मालवीय-महोदयानां प्रयत्नेन माघ-शुक्लैकादशीमारभ्य सप्तदिवसानि-यावत् प्रयागक्षेत्रे त्रिवेणीतटे सनातनधर्म-महासभायाः, सम्मेलनस्य च पुनः सङ्घटनाय, प्रतिनगरम्, प्रतिग्रामम् च सनातनधर्मसभा-शाखा-संस्थापनाय, सनातनधर्मिषु विलुप्तप्रायाणां धार्मिकभावनां पुनः समुद्बोधनाय महान् समारम्भो भविष्यतीति विदितचरमेव स्यात् प्रायःपत्रपाठकानाम्।

एतस्य विशिष्टान् समाचारान् पुनः प्रकाशयिष्यामः । साम्प्रतमिदमेव वक्तव्यमस्ति यत्, ये सनातनधर्मानुयायिनां नेतारः सन्ति ब्राह्मणाः विद्वांसस्ते समुचित-साहाय्याभावेन चिरं भाग्यमाक्रोशमानाः सन्ति । साम्प्रतं ते सोत्साहं सभायां समेत्य सनातनधर्म-प्रचारे प्रबलं प्रयत्नं विधातुं बद्धपरिकरा भवन्तु ।

अस्माकमालस्येनैवैतत्सर्वमधःपतनमभूत् । वयमभिलषामो यत् कश्चिदागत्यास्मान् प्रार्थयेत्, दद्यात्, दापयेत्, प्रशंसां कुर्यात्, कार्य्यश्च कुर्य्यादिति । एतस्मादेव कारणात् पण्डितानां कार्यं न प्रचलति । साम्प्रतं कर्मयुगे स्व-हस्तेनैव सर्वं सम्पादनीयम् । अतएवाऽस्मिन्नवसरे सर्वैः संस्कृतज्ञैः सनातनधर्मावलम्बिभिः पक्षपातं मात्सर्यं च विहाय विशुद्धहृदयेन सनातनधर्मप्रचारोपायाश्चिन्तनीयाः, समाचरणीयाः प्रचारणीयाश्च । एतदेव ज्ञानस्य फलं यत्तस्य सर्वत्र वितरणम्, प्रचारश्च । अस्मिन् महति कार्ये सहस्रशः संस्कृतज्ञाः प्रचारकाः, कार्यकर्तारश्चापेक्ष्यन्ते । एतेन जीविकाराहित्यं हि नाम महान् दोषोऽस्माकमपनीयेत । परस्परं प्रेम-सम्बन्धश्च सुदृढो भवेत् । हार्दिकी सङ्कीर्णता च दूरीभवेत् ।

---

स्यादिति । मन्ये सुधा-सम्पादकाः समुचितं सूचयिष्यन्तीति ।

*सुधा ।*

श्रावणमासात् 'नखलऊ'-नगरतः 'सुधा' नाम्नी सुन्दरी, सुवेषा, सुमनोहरा, सुरुचिपूर्णा, सुव्यवस्थिता, सु-वर्ण-सन्निहिता, सुप्रकाशिता हिन्दी मासिकी पत्रिका प्रकाश्यते । तस्याः प्रथमां विहाय, पञ्च सङ्ख्याः सादरं सस्पृहं सामोदं समवलोकिता सत्यं सुधा-स्वादमासदयन्तीति वक्तुं सर्वथा-समुत्सहामहे । एतस्याः सञ्चालकः स एव कर्मवीरः सुशिक्षितः श्रीदुलारेलालभार्गवमहाशयो वर्तते, यः पूर्वं माधुरीं सञ्चालयाञ्चकार । अस्याः सम्पादकौ-श्रीभार्गवमहाशयः श्रीरूपनारायण पाण्डेय महोदयश्च, इमावाश्विनेयौ हिन्दीसाहित्य-संसारं सुधां पाययितुं प्रवृत्तौ महतीं समाज-सेवां साहित्य-सेवाञ्च सम्पादयत इति परं प्रमोदमश्नुतेऽन्तरात्मा । यद्यपि व्यापारप्रचाराय महानारम्भोऽयमिति केचन महात्मानः प्रलपन्ति, परन्तु भोजनं विना न कोऽपि किमपि कर्तुं कृती! व्यापारस्य फलं समाज-सेवा, साहित्य-सेवा च । धनं विना कः किमपि कर्तुं प्रभविष्यति ? । अतोऽयं सर्वथा सभाजनीयः, समादरणीयश्च समारम्भः ।

अस्या मुद्रणम्, प्रकाशनम्, लेख-सौष्ठवम्, चित्र-चातुर्यम् चेत्यादिकं सर्वं सुधा सममेव । श्रद्धेयानां आचार्य-श्रीरामावतारशर्म्ममहोदयानाम्, श्रीमतां सहृदय-धुरन्धराणां श्रीशालग्राम शास्त्रिमहोदयानाम्, श्रीरामदास गौड़ एम० ए० महोदयानां लेखाः विज्ञान-साहित्य-दर्शन-विषये परं महत्वमावहन्ति । अन्ये च लेखाः पठनीया भवन्ति, माधुरी-समुन्नतौ कृत-शक्तिव्ययानां सञ्चालकानां सत्वरमियती समुन्नतिः सभाजनीया वर्तते । अस्या मेकः "सुर-भारती" अथवा "संस्कृत-सुधा" नामकः कश्चन स्तम्भो नूनं भवेदिति सम्पादकान् प्रार्थयामः । यस्मिन् स्तम्भे संस्कृतकवीनां चरित्र-चित्रणम्, पुस्तकानां काव्यानामालोचनम्, अन्येषाञ्च संस्कृतसम्बन्धिविषयानां प्रकाशनमावश्यकं

उद्दण्डावलिमुण्ड-खण्डनचणै-
श्चण्डैः कृपाणैः पुरा
येषां राजपद-प्रशस्तिरुदिता
लोकैः स्वयं घोषिता ॥
राजानः खलु ते, तृणादपि भयं
येषां, कथञ्चिछ्छ्रु—
व्याजासादितराजराजपदवी-
मन्ये वहन्त्युच्चकैः ॥ ५ ॥
लोकान् रञ्जयते गुणैरगणितै-
र्यो दानपाथःप्लवै—
र्दैन्यं मज्जयते सदैव विदुषां
राजा स एव ध्रुवम् ॥
यन्नामग्रहणं प्रभातसमये
लोकोऽशुभं मन्यते
राजाऽप्येष न राजते कृपणता
पाणिग्रहीता (?) यदि ॥ ६ ॥

श्रीनारायणशास्त्री, खिस्ते,
साहित्याचार्यः ।

——:*:——

## सतीर्थ्य विनोदः ।

प्रथमः—( द्वितीयं प्रति ) सखे ! विद्यालयेऽस्मिन्पठतामन्तेवासिनां कतमं श्रुतग्रहणधारण पटुम् वटुम् मन्यसे ?

द्वितीयः—( स्वगतं ) दृप्यत्ययमात्मनः पाण्डित्येन । भवतु । अपनेष्यामि तावत् वाचोयुक्त्यास्य दर्पम् ( प्रकाशम् ) वयस्य ! यदि सर्वेऽपि विद्यार्थिनः सति पाठसंशये भवन्तमेव निर्णयाय समाश्रयन्ति ; तर्हि कथमयं प्रश्नावकाशः ? यत्सत्यं पाणिनीयानुशासने तु भवान् दीक्षितायते ।

प्रथमः—( सहर्षं ) सखे ! साधु पश्यसि ।

द्वितीयः—( क्षणं विलम्ब्य ) सखे । तस्मिन्दिवसे प्रसंगात् भवत्पूर्ववृत्तमाख्यातुमारब्धवति त्वयि भवत्तातपादनिधनं यावदाकर्ण्य, गुरुनिदेशाद्वहिर्गतेन मया न तदासमाप्तेरश्रावि । तद्यदि सावकाशो भवांस्तदा कथाशेषश्रवणकौतुकं मे पूरयेत् ।

प्रथमः—श्रूयताम् । ननु उक्तमेव मया पूर्वं यदस्मत्कुलं पद्मा-प्रसन्न-कटाक्ष-लेप-पात्रं नासीदिति । स्वल्पंच कथंचित्संगृहीतं वित्तमपि रुग्ण-तातचरणानाम् औषधोपचारादिकृत्ये निःशेषतां गतम् । ततश्चोपरतेषु तातपादेषु अस्मासु च बालेषु निष्किंचना नो जननी बहु विमृश्यापि उपायान्तरमपश्यन्ती प्रतिगेहं भैक्षं चरित्वा कथंचिदस्मांस्तनयानवीवृधत् ।

द्वितीयः—( स्वगतम् ) लब्धावसरोऽस्मि सांप्रतम् । (प्रकाशं) हन्त शोचनीया सा वराकी कुलटा ।

प्रथमः—( सामर्षम् ) आः पाप ! कथं स्पृहणीयशीलामपि मज्जननीं कुलटां ब्रवीषीति ( तं प्रहर्तुमुद्युङ्क्ते ) ।

द्वितीयः—( स्मित्वा ) काल्याणिनेय ! मा भूत् भवान् मयि उग्रंपश्यः । किल स्मरति भवान् कुलटायावेति सूत्रव्याख्याने श्रीमद्दीक्षितोक्तं सती भिक्षुक्यत्र कुलटेति ? तत् भिक्षुकीं भवन्मातरं कुलटां ब्रुवता मया किं तवापराद्धं ? येन वैयाकरणप्रकाण्डोऽपि मयि कोपनः संवृत्तः ? ।

प्रथमः—(सानुतापं) लब्धं दर्पस्य सदृशं फलम् ।

सूर्यपुरम् । ( सूरत ) —निगमशङ्कर शर्मा, द्विवेदः




हा हा पद्म ! वृथैवपल्वल-जले
जातोऽसि बद्धादरः,
भेकाजा-बक-गो-वराह-महिषी-
पङ्कैः परं वेष्टिते ।
ते भृङ्गा मधुपानमत्त-मुखरा
हंसा गुण-ग्राहिणः,
सन्ति क्वात्र सुगन्धशुद्धपयसा
स्निग्धास्तथा वायवः ॥

—कालीप्रसाद शास्त्रिणः

( श्रीकरस्य )




## चोरपक्षीया टीका ।

——:※:——

( प्रणेता-महाकवि श्रीदुःखभञ्जनकवीन्द्रः )



धनुर्भृतोप्यस्य दयार्द्रभाव-
माख्यातमन्तःकरणैर्विशङ्कैः ॥
विलोकयन्त्यो वपुरापुरक्ष्णां
प्रकाम-विस्तार-फलं हरिण्यः ॥ ११ ॥

अपिर्निश्चयार्थे धनुर्भृतः चैारस्य, अवपुः न वपुर्यत्र विलोकनकर्मणि तद्यथा तथा अस्यदयार्द्रभावं असिना करवालेन उपलक्षितम् अदयार्द्रभावं अति शयितहिंस्रभावं विलोकयन्त्यः सत्यः हरिण्यः अक्ष्णां प्रकामविस्तारफलं आपुः, प्रकर्षेण कं सुखं नमाति तादृशः विस्तारः तत्फलं प्रापुः, अथ कं प्रकाशं न माति किन्तु मीलित्वा अन्धकारमेव तादृक् विस्तारो यस्मिन् फले तत्फलम्, अर्थात् अक्ष्णां विस्तारे सत्यपि तस्य क्रौर्य्यं द्रष्टुं न शेकुः, मीलयित्वा पलायन्तेस्म, अथ नेत्र-वैपुल्य-फलं न प्रापुः, कीदृशं अस्यदयार्द्रभावम् , विशङ्कैः विशेष शङ्कैः स्वान्तैः आख्यातम् , करवाल-दर्शनेनैव सञ्जातशङ्कैः मनोभिरेव परिचायितम् ॥ ११ ॥

सकीचकैर्मारुतपूर्णरन्ध्रैः
कूजद्भिरापादितवंशकृत्यम् ॥
शुश्राव कुञ्जेषु यशः स्वमुच्चै-
रुद्गीयमानं वनदेव ताभिः ॥ १२ ॥

हे आपादित आसमन्तात् संजातपाद ! तारकादेराकृतिगणत्वात् इतच, अथ आपादः अकारि इतिनामधातोः क्तः आपादीकृत इति यावत्, तत्संबुद्धौ । स चैारः कूजद्भिरिव कूजनं कुर्वद्भिरिव मारुतपूर्णरन्ध्रैः कीचकैः उद्गीयमानं यशस्सु कीर्तिषु वंशकृत्यं वेणुकर्म शुश्राव अशृणोत्, केषु काभिः कं का इव, कुञ्जेषु लतादिपिहितोदरेषु ताभिः प्रसिद्धाभिः गोपीभिः उद्गीयमानम् अं कृष्णं वनदा इव उच्चैरतिशयार्थे वनदा अवगतः तिरस्कृतः नदो यया अल्लोपे वनदा नद मुतीर्य कृष्णमागता ततो वनदेति संज्ञां लब्धवती, एका वनं जलम् आलवाले दत्वा इति संज्ञां प्राप, इति पैाराणिकी कथानुसर्तव्या ॥ १२ ॥

पृक्तस्तुषारैर्गिरिनिर्झराणा-
मनोकहाकम्पितपुष्पगन्धी ॥

तमातपक्लान्तमनातपत्र-
माचारपूतं पवनः सिषेवे ॥ १३ ॥

अथ पवनः वातरोगविशेषः, तं सिषेवे भेजे, कीदृशं तम्, आतपक्लान्तं घर्माभितप्तं, तथा अनात पत्रम्,अतनमातः सातत्यगमनं न आतो यस्य तादृशं पत्रं वाहनो यस्य, तम्, अथ अच्छत्रं तथा आचार पूतं समन्तात् चारः संचारो यस्य तादृक् पूतं पूतिः दुर्गन्धिः यस्य तं कीदृशः पवनः तुषारैः पृक्तः तुषाः अरणि इव उपमितसमासः, तैः पृक्तः छुरितः, तथा अनोकहाकम्पितपुष्पगन्धी, अनोकहानां अकम्पितानि पुष्पाणि तेषां गन्धः तद्वान्, कस्यां सत्याम् ,निर्झराणां निर्गताः झराः येषां येभ्यो वा दूरीभूतवारिप्रवाहा इति यावत्, तेषां गिरि वाण्यां सत्यां अर्थात् दूरेऽस्ति प्रवाहः दूरे त्यक्तः वारिप्रवाहोऽस्माभिः इति उक्तवत्सु मिलितेषु जनेषु सत्सु इत्येतद्रूपायां तेषां वाण्यां सत्याम् ॥१३॥

## श्री गीताजयन्ती ।

"सुप्तान् सम्बोधयन्ती, शुभपथ-विमुखान्
दर्शयन्ती च मार्गम्,
दीनान् प्रोत्साहयन्ती, तदनु च ददती
कर्मयोगस्य दीक्षाम् ॥
शब्दाख्यस्यापि बोधं त्रिगुणपरतरं
ब्रह्मणो भावयन्ती,
आनन्दे स्नावयन्ती, जयतु जगति सा
कापि गीताजयन्ती ॥ १ ॥"

ले० चक्रधर शर्मा "बहुगुणः" ।
सनातनधर्म कालेज, लाहौर ।

## पाणिनीयप्रकाशः ।

ले०—म० म० श्रीदेवीप्रसादशर्म्मा, शुक्लः, कविचक्रवर्ती ।

मकारस्य नकारो वा हकारे नपरे परे ।
किंह्नुतेऽसौ वलं स्वीयं किंह्नुतेऽयं निजं धनम् ४१
डात्परस्य सकारस्य वा धुडागम इष्यते ।
यस्योक्तौ टित्कितौ तस्य ह्याद्यन्तावयवौ क्रमात् ॥४२॥
षट्त्सन्तो नात्र त्रियन्ते षट्सन्तोऽत्र वसन्ति भोः ।
कुक्टुकावागमौ स्यातां वा ङकार-णकारयोः ॥ ४३॥
परे शरि तथा जश्त्वमसिद्धत्वात्तयोर्नहि ।
परे शरि द्वितीयाःस्यु श्चयः स्थाने विकल्पतः ॥४४॥
प्राङ्ख्षष्ठो भात्ययं दूरात्प्राङ्क्षष्ठोऽसौ समागतः ।
प्राङ्षष्ठो हर्षदोऽस्माकं सुगण्ठ्षष्ठोऽयमीक्ष्यताम् ४५
सुगण्ट्षष्ठो हितो नृणां सुगणषष्ठोऽर्च्यते जनैः ।
नकारान्तात्सकारस्य वा परस्य धुडागमः ॥ ४६ ॥
सन्त्स किन्नागतो मित्र सन्स किम्वा पलायितः ।
पदान्तस्य नकारस्य शकारे तु परे सति ॥ ४७ ॥
स्याद्वा तुगागम इति प्रोक्तवान् पाणिनिर्मुनिः ।
सञ्छम्भुस्सृष्टिकर्तास्ति सञ्च्छम्भुस्सृष्टिपालकः ४८
सञ्चशम्भुस्सृष्टिहर्ता च सञ् शम्भुः परमेश्वरः ।
एकं अछान्वितं रूपं द्वितीयं अचछान्वितम् ॥ ४९ ॥
तृतीयं अचशैर्युक्तं चतुर्थन्तु अशान्वितम् ।
विज्ञेयमिह तुक्छत्वचलोपानां विकल्पनात् ॥ ५० ॥
परो ह्रस्वतो यो ङकारो णकारो-
नकारस्तदन्तं पदं यद्धि तस्मात् ।

परस्य क्रमाद् ड़ुट् तथा णुट् तथा नुट्
भवेदागमोऽचः सदेत्युक्तमार्यैः ॥ ५१ ॥
प्रत्यङ्कात्मा सुगणीशः सन्नच्युत इहेज्यते ।
ङमोह्रस्वस्यात्सुटि परे पाणिनिः प्रोक्तवानिदम् ॥५१॥
अस्मिन् हि रुप्रकरणे रोः पूर्वस्याऽनुनासिको वा स्यात्
त्यक्त्वाऽनुनासिकं रोः; पूर्वात्पर आगमोऽस्त्वनुस्वारः।
विसर्गस्स्यात्पदान्तस्य रेफस्य तु परे खरि ॥
अवसाने तथेत्याख्यन्महर्षिः खलु पाणिनिः ॥ ५३ ॥
सम्पुंकानां विसर्गस्य सकारो भवति ध्रुवम् ।
सँस्कर्त्तास्म्यहमेतस्य सँस्स्कर्त्ताऽसि त्वमस्य च ५४
वा रूप्रकरणे लोपमिच्छन्त्येके समस्त्विह ।
शरः परस्य द्वित्वं स्यात्खयश्चाऽथ खयो भवेत् ॥५५॥
परस्य च शरो द्वित्वमेतत्पक्षद्वयं स्मृतम् ।
इत्थं सँस्स्कर्तृ शब्दस्य रूपाण्युक्तानि पण्डितैः ।५६।
अष्टोत्तरशतं वै वा लोवद्वित्वानुनासिकैः ॥
केवलं कौतुकं तत्तु विज्ञेयं बालकैः खलु ।५७॥
परे खय्यम्परे ह्रस्स्यात्पुम पतन्मुनेर्मतम् ।
पुँस्कोकिलः कलं रौति भाति पुंस्कोकिलः किल ॥५८॥
परे खय्यम्परे चेति निर्देशात्तु न दुष्टता ॥
प्रयोगेष्वस्ति पुंक्षीर पुंदासादिष्विति ध्रुवम् ॥५९॥
परे खय्यम्परे ख्याजादेशे रुर्न पुमो भवेत् ।
पुंख्यानमुत्तमम्भाति कच्चित्ते रोचते न वा ॥ ६० ॥

( क्रमशः )



# त्वं सैव सैव जननि !

( श्रीमूलशंकर केशवराम शास्त्री )

त्वं सैव सैव जननि, प्रथितप्रतापा
द्वीपेषु खण्डनिवहेषु सनातनी त्वम् ।
दीना वयं विभव-कीर्ति-सुविक्रमेषु,
हीना विषादमुपयाम इव प्रमत्ताः ॥ १ ॥
ईडया सचित्रि ! महतां महता महिम्ना,
विश्वस्य सम्प्रति तथैव; वयं हि तुच्छाः ।
अद्य स्थितिः स्वभवने भविके परेषां,
पापेन केन जगदम्ब विजृम्भितं तत् ॥ २ ॥
नीले त्वदीयगगने विमलेऽधुनापि
मार्तण्ड-तारक-सुधाकर-सुप्रकाशः ।
प्रक्षालयँश्चरणपङ्कजमर्णवस्ते
गर्जत्यमर्त्यशुभदुन्दुभिमन्द्रमम्ब ! ! ॥ ३ ॥
भित्वा तुषारगिरिनिर्मलदीर्घजङ्घां
दिव्यं पयो वहति सूरसुता † च गङ्गा ।
वक्षःस्थले परिवहन्ति सुधाप्रपूर्णं
स्नेहामृतं जननि. ते शतशो झराश्च ॥ ४ ॥
त्वं सैव सैव सुजला सुफला विधात्रि,
हर्षप्रकर्ष-सरसीज-सुफुल्लनेत्रा ।
कुञ्जानि चात्र गहनानि सुपुष्पितानि
क्षेत्राणि धान्यपरिपूर्णतमानि मातः ॥ ५ ॥
विश्वं प्रपूर्णमखिलं गुरुसम्पदा ते,
दीना वयं विधिवशान्ननु दुःखभाजः ।
तस्मिन् किमत्र भवती प्रकरोतु नाम ?
पुण्ये गरीयसि यशस्विनि कर्मभूमे !!! ॥ ६ ॥

† यमुना ।

# किं शुद्धिर्विरोधकारिणी न वा?

( लेखकः-धर्मदेववर्म्मा शास्त्री, अलीपुर वलवां )

"नीचैः पद्यन्तामधरे भवन्तु ये नः सूरिं मघवानं पृतन्यान् क्षिणामि ब्रह्मणाऽमित्रानुन्नयामि स्वानहम्।"



अयि भोः ? मान्याः सुप्रभात-पाठकाः ? आधुनिक-जगति या हिन्दूजातीय जनहत्यादिदुर्व्यवस्था प्रचलिता, तत्र को हेतुरित्यत्र केषाञ्चनाऽनभिज्ञानां तथा विरोधोत्पादकानां' हिन्दूनामपि श्रूयत एष सिद्धान्तः, यत् त्रीणि कारणान्यत्र वोभूयन्ते, (१) शुद्धिः, (२) सङ्ग्रन्थनम्, (३) यावनमतप्रकाशक-रङ्गीलारसूलादिपुस्तकमुद्रापणम् इति । मन्मते तु नैतानि त्रीणि कारणान्यपितु (१) अस्माकं दौर्बल्यम्, (२) यावन-मत-धर्म्म-पुस्तक-कुरान-सत्वम्, (३) आस्माकीनसंहत्यभावः, इत्येव त्रीणि कारणानि सन्ति !

तथाहि—तत्र पूर्वं मौहम्मदास्तथाऽऽस्माकमनभिज्ञाः जना विरोधे—

प्रथमं प्रधानञ्च कारणं शुद्धिमेव गणयन्ति,—

इति हेतुस्तदीयसन्मतौ हेत्वाभास एव वरिवर्ति । यतो हि-किन्ते तवलीगाभिधां शुद्धिं न कुर्व्वन्ति । उत वा तेषामन्यधर्मणाम् स्वमतप्रवेशस्य विद्यते राजनियमः,-नत्वस्माकमिति ।

यदि-तेषान्धर्मपुस्तकेषु तत्सत्वात्तदीयन्तथा करणं सुष्ठु नाऽस्माकन्तथाऽभावादधिकार इति कथ्येत, तर्हि तदपि न स्वयं वेदे "कृण्वन्तो विश्वमार्य्यम्, इत्यादि कथनात्तथा श्रीभागवतेऽपि—

"किरात हूणान्ध्र पुलिन्द-पुक्कसा
आभीर-कङ्काः यवनाः खशादयः ।
येऽन्ये च पापा यदुपाश्रयाश्रया-
च्छुद्ध्यन्ति तस्मै प्रभविष्णवेनमः ।

इत्यादि वचनैश्शुद्ध्या अपि वेदशास्त्र-सम्मतत्वात्।

तथा वुद्ध चैतन्यादीनान्तन्नाचरणकरण त्वात्। शुद्धिप्राक्तनत्वमपि द्योत्यत एव ।

यद्यपि सा पूर्वमतोलुप्तायिताऽऽसीत्तथाऽपि मध्यकाले तु तत्प्रचारोऽविद्यतैव । तथा हि—

( २ ) काश्मीरे पञ्चदशशताब्द्यामल्लाउद्दीन "वुतशिकन" नामा नृपोऽभूत् ।असको अनिच्छतोऽपि हिन्दून्मौहम्मदा श्चकार । पश्चात्तत्पुत्रोऽलाउद्दीनस्तु सर्व्वथैव स्वपितृविरुद्धाचरणोऽवर्तिष्ट, स तान् पुनरपि स्वधर्म्मं प्रवेष्टुमाज्ञप्तवान् । तेन बहवोऽहिन्दवः पुनरपि स्वधर्म्मं प्रविष्टाः ।

(२) शिवाजीत्यस्य वृत्तान्तस्तु सर्व्वैरपि ज्ञात एव ।

(३) महमूदेन १०६ शताब्द्यां भूय एव भारतवर्षं आक्रान्तम् । तदा पराजितस्सेवकपालस्तेन बन्दिगृहे निवेशितः । असौ पुनरपि हिन्दूधर्म्मं स्वीचकारेत्यत्र यवनेतिहासास्तथा खलफीतिहासादयोऽत्र प्रमाणम् । इति ।

किमौरङ्ग़ज़ेबनादिरशाहादि समयेऽपि शुद्धिरार्य्यसमाजो वाऽभवद्येनाऽभूवन् हिन्दु-हत्याविरोधाः एवम्भूतेऽपि यत्तेषां तदर्थं विरोधकृतिर्मारणं तदस्माकं दौर्बल्यनिमित्तमेवेति मन्ये ।

( २ ) सङ्गन्थनम् + द्वितीयं कारणन्तन्मते हिन्दू-सङ्ग्रन्थनम् । मौहम्मदा मन्यन्ते, यदेतेषां संहतिरस्मावपि क्षयकारिण्येवाऽस्माकम् ।

इति विमृश्यैव तदा तत्कार्य्यकर्तृ नपि निहन्ति । ते प्रष्टव्याः, किन्ते "इत्तहाद" नामकं सङ्ग्रन्थनं न विदधति । यदर्थमस्मान्निहन्ति । अतोऽत्राऽपि कारणं मे मतौ दौर्बल्यमेव भाति ।

ते तु सर्व्वथाऽपि सर्व्वतोऽपि वा इत्तहादमेव कुर्व्वाणा आसते । अपरांश्च तदर्थं निहन्ति ।

(३) तृतीयन्तु कारणम्—"तदीयमतप्रकाशक पुस्तक-मुद्रापण" मेव भाषन्ते ।

अत्राऽपि किमस्मत्तः प्राथम्यमजनिष्ट ततो वेति विचारणीयम्—

पूर्व्वन्तैः (१) रद्दे हिन्दू । (२) तोफ़तुल हिन्दू, (३) उन्नीसवीं सदी का महर्षि । इत्यादीनि पुस्तकानि प्रकाशितानि । पश्चादेव चास्मत्तः—

(१) रद्दे मुसिलमान् (२) तोफ़तुल मुस्लिम (३) रङ्गीला-रसूलादीनि पुस्तकानि प्रकाशितानि । अतो मन्मतौ तु नैतदप्यस्ति कारणम् । परन्तु निर्दिश्यमानान्येव कारणानि ।

आर्य्यसमाजिनामेव कारणात्तैर्निर्दिष्टानि पुस्तकानि व्यधायिषतेति चेन्न—

"तेज़े फ़कीर वर गर्दने शरीर" इति पुस्तकस्य हि श्री कृष्णनिन्दकत्वात् । इदं हि पुस्तकं श्री कृष्ण भगवतो व्यभिचारित्वद्योतकम्,-तत्र किं लिखितमिति चेच्छ्रूयताम्—

" लगाया दिल अजब शौके ज़िनह से
कृष्णे बेहिया ने गोपियों से "

किमेष लेख आर्य्यसमाजिपरको हिन्दूजातिपरको वा ॥

अत इदमपि न कारणमाधुनिकविद्रोहस्य, यदि भवेदपि तर्हि, किन्तदुत्तरे हत्यैव भवेदिति विचारणीयम् ।

कानि तर्हि तत्र कारणानीतिचेच्छ्रूयताम्—

(१) अस्माकं दौर्बल्यम्, (२) कुरानसत्ता (३) आस्माकीन संहत्यभावः । इति ।

तत्र (१) अस्माकं दौर्बल्यम्—

यदा वयं सबला भविष्यामस्तदा कोऽस्मान्वीक्षितुमपि क्षमः । तदाऽऽस्माकीनसबलत्वाद्विद्रोहशम एव स्यादिति । यथा सबलत्वादेते सप्तकोटिपरिमिता अपि यथेच्छमेव विदधति । अर्थात् यदीच्छन्ति, यदस्मद्धर्म्मो राजनियमे सुरक्षितो भवेत्तदा झटित्येव तथैव भवति । यदेच्छन्ति यदयं हन्तव्यस्तदाऽसौ व्यक्तिरवश्यमेव हन्यते । अतोऽस्मासु यदाशक्तिर्भविष्यति तदैतेऽनुचरा इवाऽस्माकं भूत्वा निवसिष्यन्ति ।

(२) द्वितीयं कारणं विद्रोहस्य कुरानपुस्तकमेव, तथाहि-यदेतान्शिक्षयति, "यदयि मदनुयायिनः,—यो मन्मताऽनुयायी न भवेदसौ काफ़िर संज्ञां लभते । स सर्व्वथाऽपि हन्तव्यः ।" इदं पुस्तकं राजनियमद्वारैव निषेधनीयम् । येन विद्रोहोपशमो भवेत् ।

(३) तृतीयन्निदानं विद्रोहस्य "अस्माकं संहत्यभावः" एव । मोहमदानां सन्ध्यावन्दनादौ कुरानस्यैवेश्वरीय-ग्रन्थात् साम्यमस्ति । परमस्माकन्तु किमन्यदीश्वरप्रार्थनोपासनेऽपि भिन्ने । कुतो भवेदुद्धारोऽस्माकम्, अधुना तु सानातनिकमार्य्यसामा-

जिकं वा भेदमपास्य परस्परं सम्मेलनं विधेलिमं येन विद्रोहोपशमो भवेत् ।

—:०:—

## व्याघ्राचार्यो बृहल्लाङ्गूलः ।

### पूर्वोभागः ।

( ले०—श्री वी. सु. रामस्वामिशास्त्री, बी. ए., बी. एल्. )

कस्मिंश्चित्समये सुन्दरवननामके महारण्ये समवेतासीन्महासभा शार्दूलानाम्। निविडवनमध्ये समीचीने भूमिभागे भीमाकृतयो बहवो व्याघ्राः पुच्छानुन्नमय्य पंक्तिश उपाविशन् । सर्वोऽप्यरण्यभागः प्रकाशितोऽभूत् एतेषां दृष्ट्याग्रैः । अमितोदरनामा प्राचीनो व्याघ्रो निवेशितश्च सभापतिपदे, ऐकमत्येन सभासद्भिः सर्वैः । स च पुच्छासनग्रहणपूर्वकमारभत सभायाः कार्यम्, अवादीच्च संबोध्य सभ्यगणम् । " सर्वे वयं व्याघ्रकुलतिलका एकत्र मिलिताः स्मः, परस्पर मंगलावहार्थम् । खलस्वभावेषु क्षुद्रपशुषु मध्ये काचित्प्रथास्ति " इच्छामो वयं वन मध्ये एकाकिन एव वर्तितुम्, परं च नास्त्यस्मासु परस्परस्नेहभाव " इति । अमूलकनिन्दावादममुं निराकर्तुं प्रवर्तामहेऽस्मिञ्शुभदिने, अभिलषामश्च सभ्या भूत्वा लभेमहि समधिकामुन्नतिमिति । दिने दिने अस्मासु जातिहितैषिता वर्धतां वयमपि नाना विधान्पशून् मारयित्वा सुखिनश्च भूयास्मेति " प्रार्थये पशुपतिं परमेश्वरम् ।

( सभामध्ये लांगूलचटचटारवः )

हे भ्रातृवृन्द ! संक्षेपतो विवृणोमि यदर्थं वयमत्र मिलिता इति । सुविदितमस्माकमिदं सुन्दरवनवासिव्याघ्रसमजे विद्या क्रमेणालुप्यदिति । पुनरपि वयं पण्डिता भवेमइति नितरामभिलषामः। एतत्समालोचनार्थमेव मेलितैषा मण्डली । अनुमोदन्तामत्रभवन्तः सर्वे । कालेऽस्मिन् सर्वेपि भवन्ति विद्वांसः । वयमपि भवामः, किमत्र दुःसाधम् । ( सभापतिः समापयद्वक्तृताम् )

परंच कतिभिः सभ्यैः कृतान्यनेकानि व्याख्यानानि । सकलानि व्याकरणशुद्धानि अलङ्कारविशिष्टानि च । किन्तु शब्दविन्यासझरी अतिभयावहा। कंपितमेवाभूत्सर्वं सुन्दरवनं वक्तॄणां भीषणस्वरेण। पश्चात्सभापतिरवोचदिदम् । एतद्वनवासी महा पण्डितो व्याघ्रो बृहल्लांगूलनामधेयः स्वीकृतवान्पठितुं मनुष्यसंबन्धिनमुपन्यासमेकम् ।

अवधत्त किंचित् । 'मनुष्य' शब्दश्रवणमात्रे नवीनसभ्याः केचिद् दर्शयन् लालसाम् । किन्तु "पब्लिक् डिनर" स्य ( Publice dinner ) सूचनाम दृष्ट्वा तूष्णीमेवातिष्ठन् । बृहल्लांगूलोऽपि सादरमाहूतस्सभापतिना गर्जनपूर्वकमुदतिष्ठत्, समारभत च पठितुं पथिक-प्रीतिविधायकस्वरेण निम्नलिखित मुपन्यासम् ।

सभापतिमहाशय, शार्दूलगण ! मनुष्य एकप्रकारो द्विपाज्जन्तुः, पक्षाभावेन स पक्षिगणेषु न गण्यते । चतुष्पदपशुना सह तस्यातीव विद्यते सादृश्यम् । चतुष्पदपशोरासते यानि यान्यस्थीनि तादृशान्येव विद्यन्ते मनुष्यस्यापि । अतएव मनुष्य एकविधश्चतुष्पात्पशुरिति कथ्यते । एष एव प्रभेदः

यत्, चतुष्पदस्य यादृशी घटनापरिपाटी विद्यते, तादृशी नास्ति मानवस्य । एतन्मात्रभेदनिमित्तेन मनुष्यं द्विपदमिति कृत्वा विद्वेष्टुं न युज्यतेऽस्माकम् । पण्डिता वदन्ति, कालक्रमेण जायत उत्कर्षः पशोरवयवानाम् । एकविधावयववान् पशुः कालक्रमेण उत्कृष्टतरस्य पशोरन्यस्याकारं क्रमशः प्राप्नोति । विश्वसिमो वयं मनुष्यपशुरपि कालक्रमेण लाङ्गूलाद्यलंकृतो भूत्वा वानरो भविष्यतीति । मनुष्य पशुरतीव स्वादुस्सुभक्ष्यश्च । ( व्याघ्रगणस्सर्वो व्यादात् स्वस्ववदनं ) । सुशकं तमनायासेन मारयितुम् । जगदीशो व्याघ्रजातेराहारार्थमेव मनुजानसृजदिति मन्ये । नास्त्यत्र संशयः कोपि । अतएव व्याघ्रोपादेयपशोर्नरस्य पलायनेऽथवात्मसंरक्षणे, न दत्तवान् सामर्थ्यमीश्वरः । व्याघ्रसेवां विना न पश्यामः प्रयोजनान्तरं जीवितस्य तेषाम् । अतएव तन्मांसस्वादुताहेतोश्च मनुष्य जातिरेवातिप्रियास्माकम् । मनुष्यो दृष्टमात्र एव धर्तव्योऽस्माभिः। किंचाश्चर्यावहमेतत्, मनुष्याः पुनस्सुतरां व्याघ्रभक्ताः । यद्येतां वार्त्तां न विश्वसिथ, तदा यन्ममाघटत वृत्तम्, तदुदाहरणरूपेण निवेदयाम्यधुना । सुविदित मेवात्रभवतां यत् वयं चिरं देशानटित्वा बहुदर्शिनो भवाम इति, यस्मिंश्चिरमभ्रमाम, सविषयोऽस्मात्सुन्दरवनादुत्तरस्मिन्नास्ते । धेनु-महिष-मनुष्यादिरहिंस्रः क्षुद्रपशुरेव वसति तत्र । एकदागममं विषयकर्मोपलक्ष्यात्तं प्रदेशम्, ( श्रुत्वा महादंष्ट्रनामा उद्धतस्वाभावो व्याघ्रयुवक अपृच्छद्धक्कारं ) किं विषयकर्मेति । प्रत्यवोचदुपन्यासकः " आहारान्वेषणमेव ' विषयकर्म ' वदन्ति सभ्या जनाः । संभ्रान्तलोकस्य आहारान्वेषणस्य नाम विषयकर्म । असंभ्रान्तलोकस्य तु तदेव द्यूतम्, चौर्यम्, उञ्छवृत्तिः, भिक्षावेति नानाविधैर्नामभिः व्यवह्रियते । धूर्तस्याहारान्वेषणस्य नाम चौर्यम्, बलवतस्तु तदेव दस्युतेत्यभिधीयते । लोके पुनर्दस्युताशब्दो न व्यवह्रियते । तत्परिवर्तनेन, तमेव वीरत्वमिति जना वदन्ति । दस्यो र्दण्डप्रणेतुः कार्यस्य नाम प्रभुता । यो दस्युस्स्वयं दण्डप्रणेता न भवति; तस्य कार्यस्य नाम वीरत्वम् । उदरपूजायाः स्मरणेन बुध्यामः, यत् वीरत्वादीनि नामानि सकलानि । यथाकथं वा भवतु । यद्यद्वदामि तत्तत् श्रृणुत सावधानम् ।

मनुष्याः सुतरां व्याघ्रभक्ताः । विषयकर्मोपलक्ष्यात् प्राविशमेकदा मनुष्यवसतिमध्यम् । वंशरचिते मण्डपे निशाम्य मांसलं नृत्यशीलं मेषवत्सं तदास्वादनलोलुपस्तत्र पदमकार्षम् । पश्चादज्ञासिषम्, यत्, एतन्मण्डपं पञ्जरमिति वदन्तीति । प्रविष्टमात्रे मयि संवृतमभूत् द्वारमेतस्य । तत्रागताः जनाः संप्राप्य मद्दर्शनं अमोदन्त नितराम् । अशक्नुवंश्च मद्विषये तत्कृतां भूयसीं प्रशंसामप्यवगन्तुम् । केचित् दंष्ट्रयोर्मम, परे नासिकायाः, अन्ये लाङ्गूलस्य गुणानारभन्त गातुम् । परंच दारान् सोदरान् अन्यांश्च बन्धून् संबोध्य प्रियवचनैरभाषन्त मां प्रति । ततो भक्तिनो मण्डपाधिरूढं मां स्वस्कन्धोपर्युत्थाप्य श्वेतवर्णेन वृषभद्वयेनोढे शकटे मामारोपयन् मण्डप सहितम् । दृष्ट्वा अनडुहौ मम अतीव क्षुधाया आसी दुद्रेकः, किंतु नापारयम् मण्डपाद्बहिर्गन्तुम् । अहं पुनः चर्वं चर्वं छागमांसं सुखेनाप्रापं प्रासादं गौरस्य नागरिकस्य जनस्य कस्यचित् आगतमात्रस्यममाराधनार्थम् । स भद्रपुरुषः स्वयमेव द्वारदेशमागत्य अभ्यर्थयन्मां सविनयम् । ममवासार्थं निरदिशन्म-

एडपमेकं लोहदण्डमण्डितम्। सेवार्थं मम न्ययुङ्क्त विनीतं सेवकमेकम् । स्वादुभिर्मांस शोणितैराराधयञ्च मां सादरम् । ततस्सजीवस्य वा सद्योमारितस्य मेषस्य धेनोर्वा मांसमास्वाद्यास्वाद्य सुखेनावसमेतस्मिन्नेव प्रकोष्ठे ।इच्छा नाभूत्प्रतिनिवर्त्तितुम् । तथापि नापारयं त्यक्तुं स्वदेशवात्सल्यम् , जननी जन्मभूमिश्च स्वर्गादपि गरीयसी । यदा यदैषा-जन्मभूमिर्मानसे ममास्फुरत्, तदातदा "हाउ" "हाउ" कृत्वा प्राभवं गर्जितुम् । हे जननि ! सुन्दर वनि ! कथं त्वामहं विस्मरामि ? यदा मन्मनसि त्वमाविर्भवसि तदाहं परित्यजामि धेनुमांसम् । जहामि मेषमांसम् । ( अर्थात् त्यजामि अस्थिचर्ममात्रम् ) लांगूलाघातद्वारा सदा प्रकटयामि लालसां मम । यस्मिन् दिने त्वां नाहं दृष्टवान् तदा क्षुधामप्राप्य नैव खादामि,निद्रामलब्ध्वा न स्वपिमि। यावद्धरामि जठरे तावन्मात्रं भुंजे। तदुपरि भक्षयामि त्रिचतुर "सेटक" मात्रं मांसम् । तदुपरि न खादामि (वक्ता धैर्यमवलम्ब्य पुनरप्यारभत वक्तुम् 'एकस्मिन् दिवसे मदभिप्रायं ज्ञात्वा वा प्रमादाद्वा सेवकः मन्दिरस्य मार्जनान्ते द्वारदेशमसंवृत्यैव गतवान् । अहंतु द्वाराद्बहिरागत्य उद्यानपालकमदृष्ट्वा पलायमानो झटित्येवागममेतदरण्यम् ॥

मनुष्याः क्षुद्रकाया अपि निर्मान्ति पर्वताकाराणि मन्दिराणि । कदाप्येतादृशगृहाणां निर्माणसमये वयं न प्रत्यक्षीकृतवन्तः । एते पुनस्स्वयमेवैतानि निर्मान्तीति प्रमाणाभावः । एष गिरिरेवास्माकं मन्दिरम् । आस्तामेषा स्वभावसृष्टिः । बहुगुहा मण्डितानेतान् महागिरीन्निशाम्य बुद्ध्याजीवी मनुष्यः स्वययेवाश्रयत् तानेव पर्वतान्।

मनुष्यजन्तुरुभयाहारी, मांसमपि खादति, तृणमूलान्यपि । मनुष्याः फल-मूल-गुल्मादीनि भुंजताम्, नाहं जाने किमर्थं शष्पाणि नाभ्यवहरन्तीति । यत्र कुत्रापि तृणभोजिनं मनुष्यं नाहमपश्यम् । ममास्ति संशयः कोप्यस्मिन् विषये । गौरवर्णा नरा धनिनश्च कृष्णवर्णाः स्वीयेषूद्यानेषु शष्पाणि बर्धयन्ति सादरम् । आहारार्थमेवेति मन्ये । नो चेत् तृणवर्धने किमर्थमादरः प्रयासश्च । मनुष्यास्तृणानि आहरन्तीति, कथां कृष्णवर्णस्य मनुष्यस्य कस्यचिन्मुखादेवाश्रौषम् । 'साहेब'वदुषित्वा,धनानि च व्ययित्वा,कश्चिद्धनवान् तृणं खादितवान् इति । मनुष्याः पुनर्नाहरन्ति बृहतीः शाखाः । किन्तु पक्त्वा भुञ्जतेऽल्पीयांसि सस्यानि । सस्यानि भूमावुत्पाद्य रक्षन्ति । रक्षितप्रदेशं कथयन्ति क्षेत्रं वा उद्यानं वेति । एकस्योद्याने न प्रभवत्यन्यः प्रवेष्टुम् । क्रोधातिरेकान्नुष्यो वदति,किमहं तृणं खादामि इति। जानाम्यहं मनुष्यस्वभाव एषः यद्यत् कार्यं कुर्वन्त्येते न तद्गूहयन्त्यतियत्नतः। मां यथाऽपूजयन्नश्वानपि तथैवोपासते। घोटका मनुष्याणां श्रेय इति निश्चयमेतत् । ते पुनः छागमेषगवादीनपि पोषयन्ति नितराम् । तेषां गोसंबन्धीव्यापार आश्चर्यावहः। पिबन्ति गवां दुग्धम् । तस्मात्पूर्वकालिका व्याघ्रपण्डिता स्सिद्धान्तितवन्तः कस्मिंश्चित्काले मनुष्याःगवां वत्सा अभूवन्निति । तस्माद्ब्रवीमि, मनुष्यस्य गवा बुद्धिगतं सादृश्यमस्तीति । धेनुछाग-मेषादीनाहारार्थं एव पोषयन्ति । प्रस्तौमि चाहं गेहानि निर्माय वयमपि नरान् पालयिष्यामः इति । परमपरे हस्ति-गर्दभ-कुक्कुर-बिडालादयोऽपि सेव्यन्ते मनुष्यैः । अतएव मनुष्यजातिः सकल पशूनां भृत्येति कथ्येत । अद्रान्तं मनुष्यालये वानरा

नपि । मनुष्यचरित्रमतिविचित्रम्, तेषां विहारीति कौतुकावहा । पश्चाद्विवृणोमि तां सरणीम् ।

सभापतिरसितोदरो दूरे दृष्ट्वा हरिणशिशुमेकं जवादुदतिष्ठदासनात्, सरभसमन्वधावच्च तमर्भकम्। एवमसितोदरो दूरदर्शीतिज्ञात्वैव सभ्यैर्निवेशितस्सभापत्ये । यस्यां दिशि सगतः तामेव ककुभं प्रातिष्ठन्तान्येपि सभासदः । व्याघ्र महासभेत्थमकाल एव भग्नाभूत् ॥

## भूदेवमहत्वम् ।

[ ले०—श्रीगङ्गाविष्णु शास्त्री, मुलतान ]

विपद्घनध्वान्त-सहस्र-भानवः,
समीहितार्थार्पण-कामधेनवः ।
अपार-संसार-समुद्र-सेतवः,
पुनन्तु मां ब्राह्मण-पाद-पांसवः ॥

उद्धृतपद्यम् ।

अयि ! सद्विद्योद्यन्नूतन प्रतिभाजन्याऽनवद्यहृद्य-गद्यपद्य-वैशद्य-माधुरीमधुरवाचः ! सकलगुणगम्भीरता-तिरस्कृतमहासमुद्राः ! जिज्ञासुजनमानसमुद्राः ! निरन्तर-विद्यादान-सन्तान-तिरस्कृत-सन्तानाः ! परोपकृतिकृतिचिन्तासन्तानवितानैकतानाः ! ब्राह्मणमहाभागाश्च ! पाठकमहाभागाः !

निगम-निगमाङ्गागम-प्रकाशरते, समस्तदेशान्तर्वर्तित्तमस्ततिनिवृत्तिनिरते, अखिलदेशजातिकुलानामादर्शभूते, देवभूमिभूते, भूतधात्री-समुद्भूत प्रभूत-भूतनाथ-ध्यानभूतभावनानाम्, भूतार्थ ( सत्यार्थ ) प्रतिपादनक्षमानाम्, क्षमासमान-क्षमानाम्, श्रीवशिष्ठ-वाल्मीकि-पराशर-व्यास-शुक-शौनकात्रि-च्यवन-जैमिनि-कपिञ्जल-पतञ्जलि-पाणिनि-कैयट-कणाद-पिप्पलादिमहात्मनां पूतात्मनां मण्डलैर्मण्डिते, प्राचेतस-व्यास-भास-भारवि-श्रीहर्ष-बाण-भवभूति-कालिदासादिकवि-पुङ्गवराजि-राजिते, भट्टोजिदीक्षिताऽप्ययदीक्षित-नागेशभट्ट-गदाधरभट्ट-जगदीशभट्टाचार्यादिकोविद-सनाथिते, भरतप्रतिष्ठापिते, भा-रते, भारतेऽनादिकालादेव देवशंकासा भूदेवा अनुत्तमं-सर्वोत्कृष्टतमं स्थानं, ज्ञानप्रकर्षाज्जगति जायमानानाम् मनुतनुजनुषां मध्ये सर्वश्रेष्ठां पदवीञ्चाविन्दन्त । नाऽत्रकोपि संशीतिलवः । निरस्तसमस्तमानवस्वान्तखेदाः शब्दात्मकब्रह्मरूपा वेदा ब्राह्मणानामुत्पत्तिम्-विश्वाधारस्य-विश्व-नियामकस्य-विश्वविश्वकर्तुर्विराट्स्वरूपस्य, सर्वात्मनः परमात्मनो मुखादेव प्रणिगदन्तीति नाऽविदितं विदितवेदितव्यानां भव्यानां महानुभावानां भावानाम् ।

स्मृतिकारचक्रचूड़ामणिर्मुख्यप्रजापतिरिद्धबोधो बुध-विबुधाग्रगण्यो यशसा वरिष्ठो वृन्दिष्ठः स्वायम्भुवमनुर्महर्तीं भगवतीं श्रुतिमनु, प्रथमाध्यायत एव भूसुरस्तुतिसन्ततिं प्रतिशदयन् , निम्नोक्तयुक्तियुक्तव्याहरणान्नजात्वपि व्यरंसीत् यज्जन्मन एव ब्राह्मणमूर्तिर्धर्ममूर्तिः ।

धर्मार्थमेवाऽयं विश्वस्मिन्नस्मिन् विजायते । विजायमानोऽयं जागतिकपदार्थसार्थपरिवृढः । अपरे जना अकम्पानुकम्पानुकम्पार्णवस्य भूदेवस्याऽनुकम्पा-कटाक्षपातेनोपयोगार्थं सांसारिकपदार्थानुपाददते ।

भारतविज्ञानम्, भारतदर्शनानि, धर्मशास्त्राणि, अर्थशास्त्राणि, ज्यौतिषम्, आयुर्वेदः,वनस्पति विज्ञानम्, भूगर्भविद्या, सर्वातिरिच्यमानं ब्रह्मविज्ञानञ्च ब्राह्मणानामप्रतिमतपस्यायाः प्रखर-प्रतिभायाश्च जाज्वल्यमानानि निदर्शनानि सन्ति । संक्षेपतः ब्राह्मणान्ववाय-गौरवे भारतीयगौरवस्य प्रशस्यं रहस्यं प्रच्छन्नमेव वर्वर्त्ति ।

किमधिकमुच्येत, सृष्टिसृजनदक्षः करुणासिन्धुः सर्वबन्धुरनाथनाथो विश्वनाथो ब्राह्मणजातिविरचनायां स्वरचनाचातुरीमेव प्राचोकटत्, परं तद्रचनाया अखर्वं-गर्वं प्रभुर्विभुरद्यापि न जहाति ।

यथोत्कृष्टशिल्पकर्मव्यापृतः शिल्पी यदृच्छया निर्मित-सुन्दरं वस्तु विलोक्य मोमुदिति, तथैवाऽयं जगच्छिल्पी सकलोदात्त-गुणोपेत-ब्राह्मणजातिनिर्मितिं निभाल्यामन्दमानन्द

सन्दोहमनुभवन्; तत्कल्पनायां न केवलं गर्वायते, परमेतज्जाति गुणगणे मुग्धायत एव ।

प्राचीनकालिकाः सुरनदीस्नाता वेदशास्त्र-निष्णातास्त्रुटित-भवबन्धव्यतिकराश्चित्तान्तर्विषमविषयाशीविष-गता अकिञ्चना अपि शमधनिनः, अनिकेतना अपि सत्यकेतनाः, मनस्विनो यशस्विनः, परमतपस्विनो । धर्मिष्ठाः, आत्मनिष्ठाः, सन्मङ्गलौघकरणीं, विपत्तेर्हरणींसंसारसिन्धुतरणिम्, तमोऽन्धे तरणिम् ( सूर्यम् ) अद्वैततत्वजननीं जननीं पुराणीममर्त्यवाणीं सेवमानाः, सुकृतचयचित्तैकशरणमाननीयाः, ब्राह्मणाः पर्णकुटीरेषु निवसन्तः, स्वेच्छया विलासैश्वर्यादिकं विहाय, केवलं धर्मज्ञानानुशीलनेऽहोरात्रमतिवाहयन्तः, भुवनत्रयमुपकृतिकृतिभिः प्रीणयन्तः, अशेषदुःखशमनव्यापारदक्षं श्रेयोमार्गमपरान् वदन्तः, परगुणपरमाणून्पि पर्वतीकृत्य नित्यं निजान्ते विकसन्तः, स्वयमाम्नायाऽध्ययनरतिजनितेनाऽमन्देनाऽऽनन्देन विलसन्तः, आत्मज्योतिषा प्रसीदन्तः, न जात्वपि विषीदन्तः, पुत्रान् शिष्यान् सर्वाङ्गसुन्दरीं सौपर्वणीं सौवर्णीं वाणीमध्यजीगपन् ।

राजन्यानां कृते राज्यसुख-भोगं, वैश्यानां कृते वाणिज्य व्यवसायद्वारा धनानन्दसुखं कृत्वा स्वयं भवरतिविरताः केवलं शरीरयात्रानिर्वाहाय भिक्षां भिक्षित्वा तदन्नेन जठरपिठरपूर्तिमरचयन् । सज्जनजन-शान्त-शान्तवृत्तिमिवातिस्वच्छं, कुन्दकुसुम--कर्पूर-नीहारवदतिधवलं बलप्रदम्, अच्युतचरणच्युतम्, त्रिपुरारिशिरश्चारि, पापपुञ्जहारि मनोहारि गाङ्गं पयो निपीय, तत्प्रभावेणातिगहनब्रह्माद्वैत तत्त्वराद्धांताटवीस्वच्छन्दसंचरणपञ्चाननप्रभावाः साहित्य पाथोनिधि-मन्थनमन्दरायमाण-प्रतिभा-विभवा आर्त्विजीना अनूचाना अश्वस्तनिकवृत्तयो विश्वजनीनवृत्तयः, धर्मसंतानसुवः, वाचंयमाः, स्थाण्डिलशयिनः, सत्यवद्याः, अनवद्याः, लोकोपकृतये, अज्ञानततिहतये शास्त्राणि, पुराणानि, नाटकानि, तथोच्चावच ग्रन्थराशीन् व्यरचयन्; यैः संसारस्य प्रभूतोपकृतिमन्वतिष्ठन् ।

मान्याः ! एतद्गुणगणगौरवावर्जितहृदयाः, सदय-हृदयाः नरपतयः, प्रभाते प्रदोषे च सामवेदगानेन तपोवनवासिना मानन्दराशिं समेधयतां महर्षीणामपनीतपान्थक्लमेषु पवित्राश्रमेषु सदा सदारदारिका विवसन्तः तच्चरणपायोषु बिलुठन्तः कतिपयसमयं तान्समयाऽतिवाह्य, ऋषिगणं परिचरन्तः, काननेषु विचरन्तः सदाचारवन्तः सद्धर्मवन्तः सन्तः राजनीति-शिक्षा मशिक्षन्त ।

तद्वदपरद्वीपवासिनोऽपि 'एतद्देशप्रसूतस्य सकाशादग्र-जन्मनः । स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः ।" इतिमनूक्तदिशा, एतज्जम्बूद्वीपान्तर्गताल्लब्धसमस्तोत्कर्षाद् विहित-सदुपदेश-पीयूषवर्षाद् भारतवर्षात् समुद्भूतानां प्रभूतानां भूदेवानां सकाशान्न केवलं विद्यां परं स्वं स्वं चरित्रमेवाऽप्य शिक्षन्त । यतः प्राणिमात्ररक्षायास्तेषु विज्ञानज्योतिः प्रसारणस्योत्तरदायित्वात्तैरात्मन्येव निहितमासीत्तदेव निज-पवित्रनिर्मलधर्मभावेन पूर्णेन चरित्रबलेन महत्या योग्यतया च निर्व्यूढ मासीत् ।

एतदर्थं तदात्वे परोपकारमयजीवनानां निःस्वार्थ परााणां करुणा-वरुणालयानामेषां करुणयाऽऽदर्शवतां चारु चरित्रवतां भूपानां समाजानाञ्चाभावो नावर्तिष्ट । सभाज-नीयाः ! सत्यमिदं यत्सदा जागतिककल्याणाय निजसर्वस्वोत्सर्गमपि विदधतां समाजार्थमादर्शस्वरूपाणां देवरूपाणां भूदेवानां समाना नाऽपरा कापि जाति र्लब्धसमस्तोत्कर्षं भारतवर्षं विरहय्य, दृष्टिपथमवतरिष्यति ।

इदानीमितिवृत्ते सुवृत्ते सुचारुतया चारुचारितानां भवतां दृष्टिराकृष्यते । नाऽसौ शुभमयः स्मृतिसरण्या अपेतो भवताम्, यत् भूदेवा न केवलं विद्यया, तपसा, परं कायेन कष्टजातं सोढ्वाऽपि समाजमरक्षन् । तत्समाजसेवाप्रतिज्ञे नेऽवदानसक्ताः ' सम्मानाद् ब्राह्मणो नित्यमुद्विजेत विषादिव इत्युक्तेः मानधनिनः सन्तोऽपि मानं नाचीकमन्त ।

अत्राऽस्मत्पूर्वजा द्विजा अस्मद्धं सप्रवर्तका ऋषयो महर्षयः धर्मरक्षायै, अज्ञानहत्यै, विज्ञानोन्नत्यै, परोपकृत्यै संसा सर्वातिशायिनं त्यागं विधायेदमपि याथातथ्येन दर्शकान् प्रत्यदर्शयन्, यद्देश-धर्म-सेवार्थमकिञ्चना तपोधनास्तपस्विनो मनस्विनः--सर्वकष्टम्, निखिलामापदं सानन्दं सोढुं सदा बद्धपरिकराः सन्ति ।

पुरा वृत्रासुरादिक्षणदाचराणां प्रबलपराक्रमैर्वित्रस्ता ( चकिता ) विद्रुता पलायिता) भयभीता देवसेना विह

धृतिरभूत् । नैजरक्षणमुपायमनालोक्याऽऽत्मना स्वयमेव सुराधिपस्तपस्याकारणेनाऽसाधारणेनास्थिककङ्कालावशिष्टं विशिष्टगुणोपेतं महर्षिपुङ्गवं दधीचिनामधेयं नैजवज्रनिर्मितिहेतवे तदस्थिभिक्षामभिक्षत । तद्वाक्यकर्णगोचरीकरणसमकालमेवाऽसौ परमत्यागी तपःक्रशिष्ठो भूदेववृन्दिष्ठो भूसुरः सुराणां धर्मपक्षस्य च विजयार्थं निजशरीरास्थिजातं वितीर्य, ब्राह्मणजातेरादर्शत्यागस्य मूर्तिमन्तमुदाहरणं सार्वदिके साहित्य सुवर्ण-फलके समस्थापयत् ।

हाहन्त ! कियतीनामेयमुक्ततिक्ततेः पराकाष्ठा । एतद्गुणगणकारणेन ब्राह्मणाः सर्वजनस्वान्तेषु राज्यमकुर्वन् । तस्मिन् रमणीयसमये शुभमये सदाचारेण, धैर्येण, क्षमया, विद्यया, प्रतिभया, विज्ञानेन, आचरणेन, व्यवहरणेन, सत्यव्यवहारणेन च मूर्तिमतामेव सनातनधर्माणाम्, शान्त्या, शुचितया, जितेन्द्रियतया चाहमहमिकया समालिङ्गितशिरोधराणां भगवदाराधनदत्तचेतसाम्, उदारगुणावदातसचेतसाम् सुमेधसाम्, निरेनसाम्, संयतरेतसाम्, अप्रतिमप्रतापानाम्, निजप्रताप-निर्जिततपन-प्रतापानामेषां महामहिमसहितानां महसा महीपतयोऽपि वेपन्तेस्म । स्मर्यतां भूतपूर्वः समयः, यदा गाधेयः, रक्षोभिरभ्याहतकर्मवृत्तिः कर्मठो महाराजं दशरथं निकषा श्रीरामचन्द्रं याचितुमायात्तदा किंकर्त्तव्यताविमूढो दोलायितचित्तवृत्तिः सन् पङ्क्तिरथो ( दशरथ- ) मनसि मीमांसाम्बभूवः—

'क्रुध्यन् कुलं धक्ष्यति विप्रवह्नि-र्यास्यन् सुतस्तप्स्यति मां समन्युम् । इत्थं नृपः पूर्वमवालुलोचे ततोऽनुजज्ञे गमनं सुतस्य ।' अत्र महाराजो दशरथः प्रेष्ठप्रष्ठमपि प्राणप्रियमपि श्रीगाधिनन्दनप्रभावप्रभावितः, तत्प्रतापानलजातसाध्वसः श्रीरामचन्द्रं ससौमित्रिं प्रजिघाय ।

भगवान्, तत्रभवान्, मर्यादापुरुषोत्तमः, धर्मोद्धारायाऽवतीर्णः श्रीजनकजाजानिर्ब्राह्मणोत्कर्षविषय मुद्दिश्यैतदेव व्याचष्टे, यत्

विप्रप्रसादाद् धरणीधरोऽहं विप्रप्रसादात्कमलावरोऽहम् ।
बिप्रप्रसादादजिता जितोऽहं विप्रप्रसादान्मम राम नाम,

अग्रे निर्वर्ण्यतां रामायणीयः प्रसङ्गः, मिथिला नगर्यां मिथिलेशनिकेतन-संस्थानं चन्द्रमौलिशरासनं खण्डशः कृत्वाऽखण्डपराक्रमो मिथिलाधिराजनन्दिनीमुपयम्य, वरयात्रया सह पथि परापतन्तं रघुवंशकेतुं संसारसन्तरणैकसेतुं श्रीदाशरथं तरुणेन्दुशेखर-शरासन-भङ्गजात-कोपः, वक्षसि विशङ्कटः ( विशालोरस्कः ), सम्पन्न-ताल-द्वयसः, भीष्मः, धनुष्मान्, उपजान्वरत्निः, कार्त्तस्वर-भास्वराङ्गयष्टिर्भार्गवः भास्वरेण तारस्वरेण यदा युद्धायाह्वत, तदा श्रीरामचन्द्रः स्पष्टमेव व्याजहार ।

"भोब्रह्मन्, भवता समं न घटते संग्रामवार्ताऽपि नः, सर्वे हीनबला वयं बलवतां यूयं स्थिता मूर्धनि । यस्मादेकगुणं शरासनमिदं सुव्यक्तमुर्वीभुजाम् युष्माकन्तु सदैव तन्नवगुणं यज्ञोपवीतं बलम् ॥" "जातःसोऽहं दिनकरकुले क्षत्रियश्रोत्रियेभ्यः, विश्वामित्रादपि भगवतो दृष्टदिव्यास्त्रपारः । अस्मिवंशे कथयतु जनो दुर्यशो वा यशो वा, विप्रे शस्त्रग्रहणगुरुणः साहसिक्याद्बिभेमि ॥" हनुमन्नाटकम् ।

अत्र भास्वरभास्करान्ववायोद्भवः, युद्धायालंभविष्णुरपि रोचिष्णुमुखस्य विष्णोरवतारः, जिष्णुर्भूदेवमानवर्धिष्णुः, धृष्णुः ( शत्रुविध्वंस-प्रगल्भः ), सबलारातिजनबलनिराकरिष्णुः, दुर्यशो यशो वा नाजीगणत् । पर्यवसितौ, यदाऽऽबद्धभीमभ्रुकुटीविहङ्गः, शेश्वीयमानारुणरौद्रनेत्रः, परशुरामः परशुमादाय, निम्नोक्तं वच उदैरयत, यदिदानीमेष मे कठोरधारो निष्करुणः कुठारः कण्ठं ते विशतु तत्प्रवीरोऽभव, तदैतत्परशुराम परुषभाषणमाकर्ण्याऽपि सरलप्रकृति विगतविकृतिः, धन्यधन्यः सुगृहीत-नामधेयो भगवान् भास्करवंश-भास्करः संयोजितकरः सप्रश्रयमभ्यधात्—

'हारः कण्ठं विशतु यदि वा तीक्ष्णधारः कुठारः
स्त्रीणां नेत्राण्यधिवसतु नः कज्जलं वा जलं वा ।
संपश्यामो ध्रुवमिह सुखं प्रेतभर्तुर्मुखं वा,
यद्वा तद्वा भवतु, न वयं ब्राह्मणेषु प्रवीराः ॥ प्रसन्नराघवम्

अथ, जीवतो वाक्यपालश्च मृताहे भूरिभोजनम् ।
गयायां पिण्डदानञ्च–त्रिभिः पुत्रस्य पुत्रता ॥

उपर्युक्तं युक्तियुक्तवाक्यं चरितार्थयितुमभियुक्तः पितुर्नियोगेन काननं प्रति प्रस्थितः, स्वप्राणवल्लभाया जनकजाया अन्वेषणयुतः, सुग्रीवाभिधकपिपतिना समं मैत्रीञ्चकार, राघवं प्रशस्यं वयस्यमासाद्य नतग्रीवः सुग्रीवः स प्रणयं प्रण्यगदत्, भगवन् ! यावदेकेन शरेण

देवस्य सकृदेव सप्ततालच्छेदो न स्यात्तावद्धि मम ज्येष्ठभ्रातुर्बलिनो बालिनः ( बालेः ) निग्रहणं साम्प्रतमसाम्प्रतं माँ प्रतिभाति ।

इत्थं तद्वचनोत्तजितो न केनाऽपि जितो धनुष्पाणी रामः शपथ-पूर्वकमुपदेशपूर्णं नूनं निम्नोक्तं वचः सुग्रीवं प्रत्यपादयत् ।

'भावोऽस्ति चेत्कुशिकनन्दन-पादयोर्मे, यद्यस्म्यहं द्विजतिरस्कृत-रोषहीनः । नान्याङ्गनासु च मनो यदि सप्त तालान् भित्वा तदा प्रविश भूतल मध्यगाधम्" इति ।

पाठकमहाभागैरवालोकिषत भगवतो महानुभावस्य श्रीरामचन्द्रस्य मुखारविन्दान्निःसृता नैसर्गिका भावाः ।

( क्रमशः )



# कन्या गुरुकुलम् ।

[ ले०-श्रीमती सीतादेवी, विशारदा ]

[ एष निबन्धो देहरादून-कन्या-गुरुकुल-जन्मोत्सवावसरे श्रीमत्या सीतादेव्या पठित आसीत् । एषा श्रीमती सीतादेवी, कांगडीगुरुकुलस्य प्रधानाध्यापकानामध्यापक श्रीरामदेव महोदयानां पुत्री वर्तते । तदस्या भगिन्या अयं निबन्धःसादर मस्माभिर्यथायथं प्रकाश्यते । —सु० सं० ]

**अयि सारासार-विचार-महनीय-मते ! संसत्पते ! विविध शास्त्रावगाहन-श्रुतिगीति-जनित-महिम-समुपलब्ध-लभ्याः सभ्याश्च !**

**इदन्तु नाविदितमेव तत्रभवतां यदस्यां भारतीय-वेद्यां कीदृशा ज्ञान-विज्ञान-निधयः, कपिल-कणाद-गौतम-वशिष्ठ-प्रभृतयो यतयः, प्रचण्ड-दोर्दण्ड-खण्डिताखण्डशत्रुमण्डला रामकृष्ण-भीष्मार्जुन-प्रताप-पृथ्वीराज-शिववीरादयो वीरवराः, विश्वामित्र द्रोण-कृपाचार्य्य-सदृशाः गुरुवर्य्याः, स्वकीय-सत्यव्रत-कम्पित-सुरेन्द्रशासनाः हरिचन्द्र-प्रमुखा व्रतिनः, निजभुजार्जिताक्षय्यकोशराशयः कुबेरतुल्या धनपाः, अरातिगृहीतसम्पदः, क्षुत्पिपासाशुष्क-कण्ठाः कृश-कलेवराः, प्रतापसिंह-सन्निभा मानिनः, स्वकीयया सरस्वतीनिभया अलौकिक प्रतिभया शक्त्या च मूकीकृतवादिवृन्दाः बुद्ध-शङ्कर दयानन्दाद्याः स्वनामधन्या महोदयाः मानवाः ।**

**भगवतो धर्मस्य प्रसवभूमिरिव उत्पातकेतुरिव कल्मषस्य, अखिललोकललना-ललामभूता जगज्जननी जानकी, हतोत्साहेष्वपि प्रियजनेषु वीररस प्रवाह-प्रवाहिनी द्रौपदी, अगणितमतिवितत गणित-तन्तुः लीलावती, अन्या अपि निज-चारित्र्य परिपूत-वसुन्धराः शैब्या, सावित्री, दमयन्ती प्रधानाः तथा यवन-राज-कालीनाः इतिहास-प्रसिद्धाः अबला अपि सबलाः पातिव्रत्यमेव सर्वस्वं मन्यमानाः ललना लेभिरे । परं नराणां नारीणां च तस्मिन उत्कर्षे कोऽयं उपायो नाम इति यदि विचार दृशा विलोकयामस्तदा शिक्षोत्कर्ष एव तदुत्कर्ष-निदानमवगच्छामः । केयं शिक्षा नाम । अत्र शास्त्रं वदति—**

**मातृमान्, पितृमान्, आचार्यवान्, पुरुषोवेद इति पितृभ्यां संस्कृतस्य पञ्चवर्षदेशीयस्य बालस्य सुचरित्र संपदः गुरोः सकाशे विद्याऽभ्यासेन उभयलोकगतिरिति तात्पर्य्यम् । पञ्चमवर्षादारभ्य दशम वर्षपर्य्यन्तं गुरोरन्तिके गमनकालः, तत्र च नियमेन ब्रह्मचारी ब्रह्मचारिणी च चारित्र्यनिर्माण पूर्वकं विद्या अधीत्य गृहस्थाश्रममाविशेत इति इति शास्त्राणां समयः ।**

साम्प्रतं यदि सन्ति कतिचन पाठशालाः विद्यालयाः, महाविद्यालयाश्च यत्र वाला वालिकाश्च सम्यगधीयते, परं तेषां विदेशीयाचार परिपुष्टत्वात् वैदिक-सनातनधर्म-सभ्यता ततो दुर्लभाः । न तत्र श्रुतिस्मृतीनां शिक्षा, न च पित्रोः गुरोश्चादेशाववोधनम्, न जनेषु सदाचारप्रणाली, न च वालासु पातिव्रत्य प्रचारणम्, एवस्थिते सा शिक्षा नास्मत्कृते सुखावहा, एतदेवालोक्योक्तं भगवता मनुना—

"एतद्देश प्रसूतस्य सकाशादग्रजन्मनः"

इत्यादि । सदाचार सम्पन्नस्य त्रैविद्यमूर्तेः, आचार्यस्याऽभ्याशे गुरुकुलात्मके विविक्तप्रदेशे यावान्विद्याधिगमः सम्भाव्यते, न तदंशेनापि अन्यत्र, इतिहासपर्यालोचनया प्रतीमः पुरा सर्वे भूमिदेवाः राजन्याश्च गुरो कुलेऽधीतविद्या धर्मार्थकाम मोक्षादिचतुवर्गं प्रापुः, नात्र लेशोऽपि संशयस्य । एषैव प्रणाली या राजपुत्रेषु रङ्कतनयेषु च परस्परं सहानभूतिं सातीर्थ्यं प्रणयं च जनयति, यथा हि कृष्णसुदामाचरिते जनसाधारणेनापि विलोक्यते । जगदानन्दकन्दो भगवान् रामचन्द्रोऽपि विश्वामित्र मुनेः सकाशात् विविक्ते एव सकल निशाचर नाश करीं विद्यामधिगतवान्, प्राचीन शिक्षा पद्धतेः अगणित लाभान्वि ताः कतिचित् आर्यवीराः इमां पद्धतिं पुनरुद्धृतवन्तः । इदं हि इन्द्रप्रस्थीयं कन्या गुरुकुलं पञ्चभिर्वषः यादृशीं शिक्षणद्वारा लोक सेवां तनोति, न सा तिरोहिता विदुषाम् ।

विधिवत्कन्या उपनीय वेदादि शास्त्रेषु तदङ्गेषु च शिक्षयेत, अन्योऽपि स्त्रीजनो पितावचनचित्रण सीवनादि कला यथाऽवसरं ज्ञास्यन्ति । अस्मद्देशे हि स्त्री समाजे ब्रह्मचर्य्यस्य च वेदादि सच्छास्त्र पद्धैतेश्च महान्तमभावं विलोक्यैतत्पूर्त्यै विहितोऽयं यत्नः, भारतवर्षे एतादृशः कन्याजने सदाचार शिक्षाप्रचारणपरः नास्ति कोऽपि विद्यालयः । अन्यत्र जलवायोः सांसारिकदुर्वासनारहित तपस्विजनोचितपरस्परिकस्नेहस्य च संपर्केण नात्र कोऽपि दोषः संभाव्यते । यदि तु वयं पुनरपि भारतवर्षे सावित्रीसदृशीं पतिपरायणाम्, जानकीसदृशीं धर्मपरायणाम्, लीलावती सदृशीं वुद्धिमतीम्, लोपामुद्रा—गार्गी—सुलभा-सदृशीं विदुषीं च दिदृक्षामस्तदेष गुरुकुलपद्धतिः पौरुषेण, धनेन, कायिक-मानसिक-आत्मिक-साहाय्येन च पोषणीया, अन्यथा पुरुषेषु शिक्षितेष्वपि न जातु भारतीयोन्नतिः संभाविनी, इदं खलु स्त्रीपुरुषयुगलं गार्हस्थ्य यानस्य चक्ररूपं, तथा च एक विकारोऽपि यानं चलनानर्हम् वाल्ये यथा मातुः संस्काराः शिशौ संक्रामन्ते स्थिरी भवन्ति च, न तथा प्रयत्नशतेनापि, विद्ययैव भामिनीनां आदरः, विद्ययैव सुखम्, किं बहुना—सदाचारपूर्वकं शिक्षिताः एव वालाः ऐहिक पारलौकिक सुखं भुञ्जाना स्वकीर्तिस्तम्भं दृढयन्ति ।



## होलिका ।

ले० म० म० देवीप्रसाद शुक्लः कविचक्रवर्ती ।

वसन्तलिङ्गेन सुसंगता सती
　　विकासयन्ती नवचूतकोरकम् ॥
कृतार्थयन्ती मुदितं मनोभवं
　　सुखेन रागं वितनोति होलिका ॥ १ ॥
सुतं वसन्तं सुखदं प्रसूय
　　गतेऽन्यलोकं शिशिरे स्वकान्ते ॥
सन्तापमन्तर्दधती नितान्तं
　　किं होलिकेयं विशतिस्म वह्नौ ॥ २ ॥

# अष्टादश-हिन्दी साहित्य-सम्मेलनम्।

## सूचना।

हिन्दी-भाषापत्रावलोकनरसिका जानन्त्येव यत्, अष्टादश-हिन्दीसाहित्य-सम्मेलनं विहार प्रान्तस्य प्रधान नगरे मुजफ्फरपुरे भविष्यतीति। तद्विषये सम्मेलन कार्यकर्तृभिः श्रीमद्भी रामधारी प्रसाद महोदयैर्विज्ञप्तित्रयं प्रेषितम्। तदस्माभिः क्रमशः संक्षिप्य प्रकाश्यते।

सु० सम्पादकः

## प्रथमा विज्ञप्तिः।

चिरकालं यावत् प्रामाणिक सूचनाभावेन हिन्दी-संसारे महती व्याकुलता प्रसृताऽऽसीत्, यत्, अष्टादशहिन्दी-साहित्य-सम्मेलन-कृते मुजफ्फरपुरनगरे किमपि कार्यं न भवतीति। परमिदानीं सानन्दं विज्ञापयामो यत् यद्यपि बहुभिः कारणैः कार्यमिदमवरुद्धमासीत्, तथापीदानीं हरिहरक्षेत्रसम्मेलनावसरे स्वागतसमितेः संग्रन्थनाय नियोजिका समितिर्निर्वाचिता विद्यते। तस्यां समितौ प्रान्तीयाः प्रमुखपुरुषाः सम्मिलिताः सन्ति। क्रमबद्ध-कार्यचालनाय प्रादेशिक-साहित्यसम्मेलन-कार्यालये अस्थायिकार्यालयोऽपि संस्थापितो विद्यते। सम्मेलनस्य साफल्याय सततं क्रियते प्रयत्नः। नियोजक-समित्या निश्चितम्, यत् आगामिनि अप्रेलमासे (वैशाखे) हिन्दीसाहित्य-सम्मेलनं भवत्विति। सम्मेलनेन सह कवि-सम्मेलनम्, सम्पादक-सम्मेलनम्, अन्यानि च सम्मेलनानि भविष्यन्ति। ललितकला प्रदर्शनम्, साहित्य-प्रदर्शनञ्चापि भविष्यति।

एतस्मिन्नवसरे वयं हिन्दी-लेखकान्, सम्पादकान्, हितैषिणश्च निवेदयामो यत्ते सम्मेलन-साफल्याय स्वीयान् विचारानस्माकं सविधे प्रेषयन्तु, पत्रेषु वा प्रकाशयन्तु। एतस्मिन् सम्मेलन किमपि वैशिष्ट्यं स्यादिति सर्वाभिलाषः।

## द्वितीया विज्ञप्तिः।

विहार प्रान्तीय—हिन्दी-हितैषिणः—

प्रिया भ्रातरः—

विदितमेव स्यात् तत्र भवतां श्रीमतां यत् हिन्दी साहित्य-सम्मेलनस्य अष्टादशाधिवेशनं मुजफ्फरपुर नगरे भविष्यतीति। अस्य कार्यस्य सुचारुरूपेण सम्पादनाय, स्वागत समितेः सङ्ग्रन्थनाय च नियोजिका समिति निर्मिता विद्यते, यस्यां प्रान्तीयाः प्रमुखाः व्यक्तयः सम्मिलिताः सन्ति। समित्यां निश्चितम्, यत्, अप्रेल मासे सम्मेलनम्, फरवरी मासे च स्वागतसमितेः सङ्ग्रन्थनं भवत्विति। सम्मेलनस्य महत्व विषये किमपि वक्तव्यं नास्ति। बङ्ग-कामरूप-सिन्धु प्रभृतिप्रान्तेषु हिन्दीप्रचारकार्यं गृहीत्वा सम्मेलनेन महती ख्यातिर्लब्धा। सौभाग्यमिदमस्माकं यदिदं सम्मेलनमस्माकं प्रान्ते तृतीयवारं भवति। अतो वयं सादरमभ्यर्थयामो यत्, भवन्तः स्वागतसमितिसदस्येषु नामोल्लेखनं कारयन्तु। सदस्य शुल्कम् ९), परन्तु यवनानाम्, स्त्रीणाम्, छात्राणाम्, बाङ्गानां च कृते मुद्रात्रयमेव। यस्य कस्यापि सम्मेलनस्य साफल्यं स्वागतसमितिसदस्यानामधिकाधिक सङ्ख्यायां निर्भरं तिष्ठति। वयं विश्वसिमः, आशास्महे च यद् विहारप्रान्तीया अस्माकं भ्रातरः स्वागतसमितौ सदस्यतां स्वीकृत्यास्माकमुत्साहम्, प्रान्तस्य महत्वं गौरवञ्च स्थापयिष्यन्ति। एतस्मिन् कार्ये विलम्बः शैथिल्यं वा न विधेयम्। शीघ्रता विधेया। समयः स्वल्पीयानेव विद्यते।

**अन्यच्च—**

वयमेतदपि ज्ञातुमिच्छामो यत्, अस्माकं प्रान्ते हिन्दी भाषा-सम्बन्धिन्यः कियत्यः संस्थाः सन्ति। यथा-पुस्तकालयाः, वाचनालयाः, नाट्यसमितयः। तासां नामानि प्रेषणीयानि। तासां हिन्दी-सेवामुपकारञ्च प्रख्यापयितुमिच्छामः।

## तृतीया—विज्ञप्तिः।

अस्यां विज्ञप्तौ लेखकाः सूचिताः सन्ति, यत्ते सम्मेलनाय निबन्धविषयान् चिन्वन्तु। स्वयञ्च स्वाभीप्सितविषयेषु लेखान् प्रहिण्वन्त्विति।

निवेदकः—

**श्रीरामधारी प्रसादः**

सहकारी संयोजकः—

प्रधानमन्त्री, विहारप्रान्तीय-हिन्दी-साहित्यसम्मेलनस्य

मुजफ्फरपुर।

Published by Gaurinath Pathak and printed by Rameshwar Pathak at the Tara Printing Works, Benares.

सौर चैत्रः १९८४

चतुर्थवर्षे ] [ द्वादशी सङ्ख्या

# सुप्रभातम् ।



## समाजाङ्कः

संस्कृत-साहित्य-समाजस्य मासिकं मुखपत्रम् ।

तिमिरततिमुद्वहत्वद्, मेदतारा विलुम्पन्, नयदधि सुरभाषाभाषिजागर्तिभावम् ।
विबुध-विहग-वादै-राह्वयद् भाग्य-भानुम्, विलसतु भुवनेऽस्मिन् सर्वतः 'सुप्रभातम्'



## विशिष्टाङ्क-सूचनाः ।

विशिष्टाङ्कृते चित्राणां क्रियते व्यवस्था । लेखाश्चातिविलम्बेन समागच्छन्ति । आकारोऽपि द्विगुणितः स्यादिति मुद्रणेऽपि समयोऽपेक्ष्यते । चित्राणां निर्माणमपि नास्माकं हस्ते विद्यते । तत्र पराधीना वयम् । विशिष्टाङ्कस्यार्थं विशिष्टो धनसङ्ग्रहश्च कर्त्तुमावश्यकः । अतएव यदि विशिष्टाङ्को यथासमयं न लभ्येत चेत्, ग्राहकैर्मर्षणीयम् । पञ्चदशदिवसेभ्योऽधिको विलम्बस्तु कदापि न स्यात् ।

द्रव्याभावात् विशिष्टाङ्कस्य मुद्रणसङ्ख्या स्वल्पैव भविष्यति । अतो नवीनैर्ग्राहकैः प्राचीनैश्चावश्यं ग्राहकत्वं स्वीकर्तव्यम् । नोचेन्नमेलिष्यत्ययमङ्कः । एतादृशो विशिष्टाङ्कश्चाऽपि संस्कृते अभूतपूर्वः, आश्चर्यजनक एव भविष्यति । अस्मिन् वर्षे सुप्रभातस्य महती समुन्नतिर्भविष्यति । अस्य ग्राहकत्वं स्वीकृत्य, प्रचारं कृत्वा, विविधञ्च साहाय्यं दत्त्वा भवन्तोऽपि सहृदयतामातन्वन्तु । विनीतः—सम्पादकः



वार्षिकम्मूल्यम् ३) प्राप्तिस्थानम्— छात्रेभ्यः १॥)

## सुप्रभातकार्यालयः, काशी ।

| | | |
|---|---|---|
| १९ कुङ्कम तिलकम् ( पद्यम् ) | श्रीगणेशीलाल शर्म्मा | १९८ |
| २० कजरी युगलम् ( पद्यम् ) | ... | २१६ |
| २१ कन्या गुरुकुलम् | श्रीमती सीतादेवी | २५८ |
| २२ कम्बोजीयः ( कथा ) | श्रीबहादुरचन्द्र गुप्तः, शास्त्री | २०४·२३७ |
| २३ क्रान्तिकारि समाहितिः | श्रीविमर्शी विद्वान् | १३९ |
| २४ कामना पञ्चकम् ( पद्यम् ) | श्रीईश्वरीदत्तदौर्गादत्तिः शास्त्री, एम० ओ०एल० | २२२ |
| २५ किं शुद्धिर्विरोधकारिणी न वा ? | श्रीधर्मदेव वर्मा शास्त्री | २५० |
| २६ गोरक्षा | श्रीलक्ष्मीनाथ मिश्रः, काव्यतीर्थः | ४१·८६·११९ |
| २७ छात्रनियमाः | श्रीवासुदेव शर्म्मा, जोशी | १९३·२४२ |
| २८ जगदीश्वरी वन्दना ( पद्यम् ) | श्रीबालकृष्ण शर्मा, सारस्वतः | १७ |
| २९ त्वं सैव सैव जननि ( पद्यम् ) | श्रीमूलशङ्कर केशवराम शास्त्री | २४६ |
| ३० दानम् | " याचकः " | २७२ |
| ३१ दाम्पत्य दण्ड विधानम् | अनु० श्रीकिशोरीलाल गोस्वामी | ५२ |
| ३२ नतिः ( पद्यम् ) | श्रीसोहनलाल द्विवेदः | २३१ |
| ३३ नामगुप्तिः | श्रीहरिगोविन्द मिश्रः | १२० |
| ३४ निदाघोपालम्भः ( पद्यम् ) | श्रीभूपनारायण झा व्याकरणाचार्यः | ६१ |
| ३५ नूतन वर्षाभिनन्दनम् ( पद्यम् ) | म०म० श्रीदेवीप्रसाद शुक्लः, कविचक्रवर्ती | २ |
| ३६ पञ्चनदीयो विश्वविद्यालयः | श्रीवहादुर चन्द्र गुप्तः | १० |
| ३७ पञ्च पञ्चाशिका ( गुमानी गीता ) | श्रीगुमानीपन्तः | २३५ |
| ३८ पण्डितानां दौर्वल्यम् ( १-२ ) | " श्रीक्रान्तिकारी " | ७८, १६३ |
| ३९ पण्डितान् प्रत्यनुयोगः | श्रीकाशीनाथ द्विवेदी | १५९ |
| ४० पण्डितेभ्यो निवेदनम् | श्रीवेङ्कटेश्वरः | १८० |
| ४१ परमेश्वरस्तवः | म० म० गणपति शास्त्री कविशेखरः | १८५ |
| ४२ पद्मान्योक्तिः ( पद्यम् ) | श्रीकरः | २४७ |
| ४३ प्रश्नोत्तराणि | श्रीमूलशङ्कर शर्म्मा. श्रीशेष शर्म्मा, हेब्बालकरः, गयाप्रसाद शर्मा, ब्रह्मदत्त शर्मा, | १९७ |
| ४४ प्रहेलिका | श्रीकिशोरी लाल गोस्वामी | ९३ |
| ४५ प्रहेलिका प्रपञ्चः | बहवः | १४५ |
| ४६ प्राप्त पत्राणि | कुञ्जविहारी पाण्डेयः, अमृत लाल शर्मा, जगदीश शुक्लः, बालक व्यवस्थापकः | ९९ |
| ४७ प्राप्त समाचाराः | रघुनन्दन पाण्डेयः, श्रीगोपाल शास्त्री, चन्द्र शेखर शर्मा | १४७ |
| ४८ पाणिनीय प्रकाशः | म० म० श्रीदेवीप्रसादशुक्लः कविः, | ९. ४५. ८९. १२७. १७१. २४९ |
| ४९ पाणिनीयं महाकाव्यम् | श्रीकेदारनाथ शर्म्मा सारस्वतः | ७१ |

| | | |
|---|---|---|
| ५० प्रार्थना ( पद्यम् ) | श्रीगोपाल शास्त्री, श्रीगणेशी लाल सारस्वतः | १८० |
| ५१ पिपीलिका ( पद्यम् ) | श्रीबहादुर चन्द्र गुप्तः | ११३ |
| ५२ पुराण तत्वम् | श्रीरामावतार शर्मा एम० ए०, सा० आ० | ८८ |
| ५३ पुराण तत्वम् ( समीक्षा ) | श्री पं० चण्डी प्रसाद शुक्लः | १३३ |
| ५४ पुस्तक परिचयः | सम्पादकः | १८० |
| ५५ ब्रह्मचर्यम् ( पद्यम् ) | श्रीमुनिन्यायविजयो न्यायतीर्थः | २३१ |
| ५६ ब्रह्मचर्यम् | श्रीविश्वनाथ प्रभाकरः | ५० |
| ५७ बड़ोदरा नगरे जलप्रलयः | श्रीनर्मदाशङ्कर शर्मा, दत्तात्रेय शर्मा च | ४४ |
| ५८ बहिर्लापिका ( पद्यम् ) | श्रीनारायणशङ्कर शर्मा हेब्बालकरः | ११२ |
| ५९ ब्राह्मण चाण्डालयोर्भेदः | श्रीवालजी गोविन्दजी देसाई | १९८ |
| ६० विबुध वन्दनम् ( पद्यम् ) | श्रीनारायण शास्त्री खिस्ते | १५८ |
| ६१ भगवान कौटिल्यः | श्रीदेवीचरण शर्म्मा, निगमः | २ |
| ६२ भङ्गातरङ्गः | श्रीभङ्गाभट्टः | ३७ |
| ६३ भारतीय-शासन व्यवस्था | श्रीअद्वैनप्रसाद गुप्तः | २३४ |
| ६४ भूदेव महत्त्वम् | श्रीगङ्गाविष्णु मिश्रः | ५६ |
| ६५ मङ्गलम् ( पद्यम् ) | श्रीदेवीप्रसाद शुक्लः, कविचक्रवर्त्ती म०म० | २५५-२७४ |
| ६६ मङ्गलम् ( पद्यम् ) | श्रीसोहनलाल द्विवेदः | ७७-१०५ |
| ६७ मद्रास भारतीय महासभा | श्रीमहादेव शास्त्री पाण्डेयः, साहित्याचार्यः | २०४ |
| ६८ मधुसञ्चयः | श्रीमधुकरः, | २१६ |
| ६९ महामहोपाध्याय पदाभिनन्दनम् ( पद्यम् ) | श्रीसंस्कृतच्छात्र सङ्घस्य | ५९ |
| ७० माङ्गलिक्यः सूक्तयः ( पद्यम् ) | सङ्कलिताः | १२१ |
| ७१ मातः ( गानम् ) | श्रीगिरिधर शर्म्मा, नवरत्नम्, काव्यलङ्कारः | १,२४, |
| ७२ मानवशास्त्रम् | आचार्य श्रीरामावतार शर्म्मा, एम० ए० साहित्याचार्यः | ११५, ३३ |
| ७३ मासावतरणिका ( पद्यम् ) | श्रीभट्ट गिरिधारी शर्म्मा | |
| ७४ मुक्तावली चन्द्रिका | श्रीरामनारायण शर्म्मा, शास्त्री | ५० |
| ७५ मुद्रणालयः | श्रीशिवराम शर्म्मा, सारस्वतः ( छात्रः ) | १४-५८ |
| ७६ रघुवंश महाकाव्यम् | कवीन्द्रदुःखभञ्जन-महोदयाः | ६-११०-१६१ |
| ७७ लावण्यमयी | श्रीकिशोरीलाल गोस्वामी हिन्दी साहित्य-सम्राट् | १५-८२-१४१-१८८ |
| ७८ वर्षा वर्णनम् ( पद्यम् ) | श्रीरामसुख मिश्रः | ११३ |
| ७९ वर्षा ( पद्यम् ) | श्रीकालीप्रसाद शास्त्री 'श्रीकरः' | ५५ |
| ८० वाग्देवि प्रशस्तिः ( पद्यम् ) | श्रीहरिशङ्कर शर्म्मा, ( छात्रः ) | ६२ |
| ८१ विनोदतरङ्गः | श्रीनिवास केदलायः. | १६६ |

८२ विभ्रम् गीतम् .... ... श्रीगिरिधर शर्म्मा, नवरत्नम्, काव्यालङ्कारः ५५
८३ विरहिणी विलापः ( गानम् ) .... श्रीभूपनारायण झा व्याकरणाचार्यः २६८
८४ विराम चिह्नानि ... ... श्रीबालमुकुन्द शर्म्मा सारस्वतः १३-१६२
८५ विल्व पत्रम् ... ... ... राजा शशिशेखरेश्वर शर्म्मा रायबहादुरः १०८-१४४
८६ विज्ञान वैभवम् ... .... श्रीकुचुट्टुपु ... ... ६१
८७ विज्ञप्तिसारः ... ... .... स्वर्गीय महाकवि श्रीगुमानी पन्तः १५५-१७८-२०३
८८ सतीर्थ्यविनोदः ... ... श्रीनिगमशङ्कर शर्म्मा द्विवेदः ... ... २४८
८९ सत्कवि विठोवाअरणानां जीवनचरितम् । ... श्रीहरिगोविन्द वेरवङ्करः ... ... २०८
९० सम्पादकीयम् ... ... सम्पादकः२२-३०. ६७. १५६. २००, २१८, २२६, २६८,
९१ समालोचना... ... ... सम्पादकः, .... ... २०, १४६,
९२ समस्यापूर्तिः ... ... श्रीमहादेव शास्त्री पाण्डेयः, श्रीमहाराजा प्रकाशसिंह वर्म्मा, श्री भूपनारायण झा ... ९३. १२०. २१५
९३ समाज समाचाराः .... .... श्री गोपालशास्त्री ( प्रधान मन्त्री ) ... १२७
९४ समाचार संग्रहः ... ... श्री हरिचरण शर्म्मा .... ... १२६
९५ समुपलब्धाः कोशग्रन्थाः ... ... श्रद्धेय श्रीरामावतार शर्म्मा एम. ए., सा. आ. १८२
९६ सरलसूक्ति संग्रहः ... .... संग्राहकः—सम्पादकः ... २४१
९७ सामुद्रिक परिचयः .... .... श्री कालिका प्रसाद शर्म्मा राजज्यौतिषी ४८. ११८
९८ सामुद्रिक विज्ञानम् .... ... श्री कालिका प्रसाद शर्म्मा ... १८६
९९ सारस्वतम्... .... ... श्री काशीनाथ द्विवेदी १८८
१०० सिंह दिलीपयोः सम्वादः ... .... सम्पादकः ... २१३
१०१ सुप्रभात प्रशस्तिः ... ... श्री वालशर्म्मा, शोरों ( एटा ) ... ४८
१०२ सुप्रभातोत्सवः ( रूपकम् ).... ... „ चक्रधर शर्मा "वहुगुणः" ... १६०. २११
१०३ सुभाषिते ( पद्यम् ) ... .... „ रामेश्वर शर्म्मा ... १९. ६३
१०४ सुभाषितानि ( पद्यम् ) .... ... संकलयिता—सम्पादकः ... १३३
१०५ सुलभव्याख्यान माला .... .... श्री त्र्यम्बक विनायक मोहरीर १६२. २०६
१०६ सूक्तिः ( पद्यम् ) ... ... „ कृष्णशर्म्मा आहिताग्निः ... १६८
१०७ सूक्ती ( पद्यम् ) ... ... „ सोहन लाल द्विवेदः ... १६६
१०८ सूचनासारः ... ... धर्म्मवीरस्य प्रवन्धकः, अभयस्य प्रवन्धकः श्रीरामगोपाल शर्म्मा श्री रामावधि शर्म्मा श्री जयदत्त शास्त्री ... १९, ६४
१०९ सौवरः ... ... श्री तारादत्त पन्तः, सा० आ० ... १२
११० संस्कृत शिक्षा दुरवस्था ... ... „ विमर्शी विद्वान् ... ३
१११ संस्कृत साहित्यमहाविद्यालयः ... „ हरिचरण शर्मा ... २७५, १५५

११२ संस्कृत समाचाराः ... ... शिवदयालु गिरिः, गङ्गाशङ्कर शास्त्री, पुरुषोत्तम शर्म्मा, निरीक्षणपतिः, सूर्यः माठोलिया, बी० जोशी, मन्त्री विहार परीक्षा समिति, एस० एल० मजुमदार, श्री वीरबहादुरसाही, श्रीवासुदेव जोशी, क्षेमचन्द्र, दुर्गादत्त, श्री युगल किशोर झा। ... २२२
११३ संस्कृत सा० स० वार्षिक विवरणम् ... श्रीचन्द्रः, प्रिन्सिपल, सं० कालेज, बड़वानी १६८
११४ संस्कृत सा० स० चतुर्थाधिवेशनम् ... भट्ट श्री मथुरानाथ शास्त्री सा० आ० २१४
११५ शारदीसुषमा ( पद्यम् ) ... ... म० म० श्री देवीप्रसाद शुक्लः कविचक्रवर्ती १८०
११६ श्रीभारतगुण सम्वर्धना ( पद्यम् ) ... श्री चक्रधर शर्मा "बहुगुण:" २४८
११७ श्रीविश्वेश्वर वन्दनम् ( पद्यम् ) ... श्री त्र्यम्बक विनायक मोहरिर
११८ श्री गीता जयन्ती ( पद्यम् ) ... ... कश्चित् विद्यार्थी
११९ श्रीमद्भगवद्गीता ... ... श्री भूपनारायण झा ... ८
१२० हिन्दू समाजस्य घातिका प्रथा ... म० म० श्रीदेवीप्रसाद शुक्लः कवि चक्रवर्ती .... २४४
१२१ हेमन्तानुरोधः ( पद्यम् ) .... ... भट्टःगिरीधारी शर्म्मा कविकिङ्करः ... २५६
१२२ होलिका ( पद्यम् ) ... ... पृष्ठसङ्ख्या .... ... २४२
१२३ होलोत्सवगीतयः ( पद्यम् ) ... ... चित्रसङ्ख्या ... ... २८८
७



# सुप्रभातम् ।

विविध-विषय-विभूषितम्, अद्वितीयम्, संस्कृत-मासिक-पत्रम् ।

चतुर्थ-वर्षे | सौर—चैत्रः । १९८४ वैक्रमाब्दाः | द्वादशी संख्या

## मासावतरणिका ।

जाड्यं प्रोज्जासयन्ती, जगति विदधती मित्रतेजः समृद्धिम्,
भूयोपि प्रोन्नयन्ती द्विजपतिवलयस्याच्छतां पूर्वसिद्धाम् ।
युक्ता जातिप्रपञ्चैः, प्रकटितसुमनोमोदभृत-"सुप्रभाता"
सद्गोष्ठीवेयमुच्चैः प्रगुणयति मुदं चेतसश्चैत्रलक्ष्मीः ॥ १ ॥

—भट्ट श्रीगिरिधारी शर्मा

जातिप्रपञ्चैः जातौकलहविस्तारैरित्यर्थः पक्षे मालतीविस्तारैः, "मालतीमुखश्चैत्र" इति कविसमय सिद्धत्वात् । सद्गोष्ठी शब्देन सुप्रभातप्रकाशकः संस्कृतसाहित्यसमाजोऽभिप्रेयते ॥

## विरहिणीविलापः ।

प्रियो नागतो मे वयस्ये ! वसन्ते । ध्रु०

लसन्मञ्जरीसञ्चरच्चञ्चरीकं,
न किं किञ्चिदुद्यानमास्ते तदन्ते ॥ १ ॥

कदाऽप्युल्लसन्मल्लिकाऽऽमोदवाहाः,
न किं तत्र हा गन्धवाहा वहन्ते ॥ २ ॥

कथं कोकिला मञ्जुलाऽऽलापशीला-
स्तदीयान्तिके मौनमासादयन्ते ॥ ३ ॥

कथा काऽधुना चेतनानाम्प्रसूनै-
र्लतास्सन्नताश्शाखिनः संश्रयन्ते ॥ ४ ॥

ऋतूनाम्प्रभोरस्य केचिन्निदेशं
न देशान्तरे किंकमप्याद्रियन्ते ॥ ५ ॥

इदानीं स्मरोन्मत्तचित्तो हरिः किं,
जना मादृशा यद्विपन्ना म्रियन्ते ॥ ६ ॥

कृतं भूपनारायणेनेति गीतं,
न गीत्वा जनाः के व्यथामाश्रयन्ते ॥ ७ ॥

*श्रीभूपनारायणझा शर्मा,*
व्याकरणाचार्यः, साहित्यरत्नम्.

## "अभेदोपासना ।"

शिवः, स्वयंज्योति,—रहीनसेवितो,
निरस्त-माद्यन्मकरध्वज-स्मयः,
मनुष्यधर्म्मादरकृ,—न्महेश्वरो
ध्रुवो धियामस्तु धरात्मजाधवः ॥

विनायकाराध्यवता, गुहावन-
प्रसक्तचित्ता, धृतचन्द्रभूषणा ।
मता सतीशेखरतां गताऽवता-
दगण्यकारुण्यधरा धरात्मजा ॥

—*भट्ट श्रीगिरिधारी शर्मा, "कविकिङ्करः"*

धरात्मजाधवः, गिरिजापतिः, सीतापतिर्वा ।




### संस्कृत-साहित्य-समाजस्याधिवेशनम् ।

संस्कृत-साहित्य समाजस्य चतुर्थमधिवेशनं साम्प्रतं सानन्दं ससमारोहञ्च सम्पन्नमिति विदितमेव स्यात् सुप्रभातरसिकानां समाज-सदस्यानाञ्च। एतस्मिन् वत्सरे खलु हिन्दूविश्वविद्यालयस्याचार्याः प्राच्य-पाश्चात्य-सिन्धुसम्भेद- स्नान-निर्मलाः, प्रसिद्धा गवेषका विद्वाँसः, परमदेशभक्ताः, श्रीआनन्दशङ्कर वापूभाईध्रुवमहोदयाः सभापतेरासनमलङ्कृत्य समाजमनुग्रहीतवन्त इति परं सन्तोषस्थानम्। एतस्मिन् वत्सरे विदुषामुपस्थितिरपि पूर्वेषां वर्षाणामपेक्षया प्रचुरा समभूत्। परन्तु यदर्थं परीक्षासमये क्रियते समाजाधिवेशनम् , तत्कार्यं न सम्यक् सम्पद्यत इति खेदं जनयति। एतदधिवेशनं प्रथमं श्रावणमासे भवतिस्म। परमिदानीं परीक्षासमय एतदर्थमेव क्रियते, येनैतस्मिन्नवसरे भिन्नभिन्नदेशेभ्यः पाठशालाभ्यश्च समागताश्छात्राः सम्मेलनेऽस्मिन् सम्भूय स्वीयामवस्थां समालोचयन्तु, समुन्नतेरुपायान् विमृशन्तु, तत्र तत्र प्रचारमान्दोलनञ्च कृत्वा मृतप्रायं समाजं जागरयन्त्विति; परं हन्त! सर्वत्रैव संस्कृतज्ञेषु संस्कृतत्वं समानमेव दरीदृश्यते। छात्राः परीक्षार्थं समागच्छन्ति। परीक्षापिशाच्यास्तेषां शिरसि तादृशं नग्नताण्डवं भवति येन तदभिभूतास्ते न किमपि पश्यन्ति, न शृण्वन्ति, न च विचारयन्ति। तेषामियमुपेक्षा न तेषामेव प्राणघातिनो, परं संस्कृतभाषायाः, ब्राह्मणजाते-

२७—अहो अस्माकं समाजः—
श्रीयुत श्रीनरदेव शास्त्री, वेदतीर्थः ९३
२८—काव्यकथा—
श्रीमान् पुरुषोत्तमशर्मा चतुर्वेदः, साहित्याचार्यः ९९
२९—स्वर्गीय स्मृतिः—
१—श्री सुप्रभात-सम्पादकः
२—श्री विष्णुदत्तशर्मा वैद्यः, आयुर्वेदाचार्यः
३—श्री सत्यप्रसादशर्मा, बहुगुणः ९९
३०—शिवगीतम्— ६३
श्री भूपनारायण झा,
३१—पण्डित-परिचयः— ६४
श्री सुप्रभात-सम्पादकः
३२—सम्पादकीयम्— ६६

## चित्रसूची ।

१—संस्कृत-साहित्य-समाज-संस्थापकाः, तत्सहकारिणश्च ।
२—महामहोपाध्यायः श्रीसुधाकरद्विवेदः
३—दैवज्ञवाचस्पतिः श्रीविनायकशास्त्री वेतालः
४—परमगुरवः श्रीराजारामशास्त्रिणः
५—महामहोपाध्यायश्रीबालशास्त्री, बालसरस्वती
६—श्रीमन् मध्वसम्प्रदायाचार्याः श्रीदामोदरलाल गोस्वामिनः
७—श्री डा० गङ्गानाथ झा एम० ए०, महामहोपाध्यायः, डी० लिट्०
८—अभिनवमहाकविः श्रीरामकृष्ण कविः
९—ब्रह्मर्षयः श्रीजनार्दनमिश्राः,
१०—आयुर्वेदमार्तण्ड-श्रीअर्जुनमिश्राः

# संस्कृत-समाचाराः

### प्रतीक्ष्यताम् ।

आपाढ़-श्रावणयोः सम्मिलिता सङ्ख्या प्रकाशिता भविष्यतीति प्रागेव निवेदितम् । एतस्यां खलु केचन विचित्राः विप्लवकारिणो हृदयाकर्षकाः परिमिता एव लेखाः प्रकाशमेष्यन्ति । एतस्या एत एव नियमिता लेखका भविष्यन्ति ।

१ श्रद्धेय—रामावतार शर्म्मा एम० ए० साहित्याचार्यः,
२ महामहोपाध्याय-श्रीदेवीप्रसादशुक्लकविचक्रवर्तिनः
३ श्रीगोपालशास्त्री, साहित्याचार्यः, दर्शन केशरी
४ श्रीगिरीश शुक्लो न्यायाचार्य, ( व्यवस्थापकः )
५ श्रीतारादत्तपन्तः, साहित्याचार्यः, दर्शनशास्त्री
६ श्रीदामोदरशास्त्री भिषगाचार्यः, सर्वदर्शनतीर्थः
७ श्रीविन्ध्येश्वरीप्रसाद शास्त्री ( सूर्योदय-सम्पादकः )
८ श्रीमहादेवशास्त्री पाण्डेयः, साहित्याचार्यः
९ श्रीकेदारनाथ शर्म्मा, सारस्वतः ( सम्पादकः )

एषा विचित्रा दर्शनीया, मननीया, क्रान्तिकारिणी सङ्ख्या भविष्यति । एतस्मिन् सर्वेषां समाज-कार्यकर्तॄणां सचित्रः परिचयोऽपि स्थास्यति

कार्तिके च कविताङ्कः प्रकाशितः स्यात् । एतस्मिन् भारतवर्षीयाणां धुरन्धर-कवीनां मनोहारिण्यः क्रान्तिकारिण्यश्च कविताः प्रकाशिता भविष्यन्ति ।

ग्राहकैरनुग्राहकैश्चास्याः समुन्नयने, प्रोत्साहने च बद्धपरिकरैर्भाव्यम् ।

### अखिल-भारतवर्षीय-संस्कृत-साहित्य-सम्मेलनम् ।

सम्यक् सम्भाव्यते यदस्मिन् संवत्सरे कार्तिकमासे सूर्यग्रहणावसरे सम्मेलनस्याधिवेशनं संस्कृतप्रधानकेन्द्रे वाराणस्यां महता समारम्भेण, उत्साहेन सम्पत्स्यते । तस्मिन्नेवावसरे, सनातनधर्मप्रचाराय विदुषां सद्ग्रन्थनाय

च अखिल भारतवर्षीयं विद्वत्सम्मेलनम् अपि भविष्यति । छात्र-सम्मेलन-कविसम्मेलनादयश्च भविष्यन्ति ।

* * * *

## अस्माकं नवीनाः स्तम्भाः ।

अस्माभिः सुप्रभाते केषाञ्चनावश्यकविषयाणां स्थायित्व-सम्पादनाय साम्प्रतं सप्तस्तम्भाः संस्थापिताः सन्ति । तेषां चित्राण्यपि निर्मापितानि सन्ति, यानि पाठकानां सम्मुखमेव समागतानि । तत्र प्रथमं 'काव्यकथा' नामकः स्तम्भो वरीवर्ति । एतस्मिन् स्तम्भे संस्कृतकाव्यानां कथा, तेषां समालोचनम्, तद्विषये चान्या ज्ञातव्या वार्ताः स्थास्यन्ति । (२) द्वितीये—**स्वर्गीयस्मृति**—नाम्नि स्तम्भे स्वर्गीयाणां भारतीयसंस्कृतविदुषां चित्राणि चरित्राणि च स्थास्यन्ति । एष सङ्ग्रहः कालान्तरे परं महत्वमासादयन् भविष्यति काले संस्कृत-साहित्यस्येतिहासस्य रूपं धारयित्वा भाविनां गवेषकाणां लोकानाञ्च महान्तमान्ध्यं दूरी करिष्यति । वयमित्र तेऽपि नेतिहासविषये सर्वथान्धाः स्थास्यन्ति । तृतीये 'पण्डितपरिचय'-नाम्नि स्तम्भे साम्प्रतिकानां विदुषां परिचयः स्थास्यति । एतेन खलु विदुषां परिचयेन परस्परं सर्वेषां विदुषामनायासपरिचयः, परस्परं सुदृढः स्नेहः सद्भावश्च सम्भवेत् । चतुर्थे 'विज्ञान-वैभव' नाम्नि स्तम्भे नवीना वैज्ञानिकवार्ताः, आविष्काराश्च संस्कृते सम्यग् विज्ञाता भविष्यन्ति, यस्य खलु विज्ञानस्य साम्प्रतं सर्वाधिका वर्तते संस्कृते आवश्यकता । पञ्चमे **स्वास्थ्य-सुधा**, नाम्नि स्तम्भे आयुर्वेदविषयकाः स्वास्थ्य सम्बन्धिनो विषयाः सन्निवेशिता स्युः । एतास्मिन् स्तम्भेऽपि संस्कृतसंसारस्य परमोपयोगिनो लेखाविचाराश्च संगृहेरन् । षष्ठे 'संस्कृत-समाचाराः' इति शीर्षके स्तम्भे संस्कृत विषयकाः पाठशाला-विद्यालय-सभा- सम्मेलनोत्सवादिसंस्कृतसम्बन्धिनीनां समाचारा-वलीनां संङ्ग्रहो भविष्यति । सप्तमश्च सम्पादकीय-नामा स्तम्भो विदित एव पाठकानाम् ।

एवंसत्यपि पञ्चषाः स्तम्भाः साम्प्रतमप्यशिष्टाः सन्ति । यथा-'समाचार-संग्रहः', 'प्राप्तपत्राणि', 'व्यापारे वर्धते लक्ष्मीः', 'कवि-कीर्तनम्', 'पुस्तक-परिचयः'' इत्यादयः । ग्राहकाणामभिरुचिमालोच्य यथासम्भवं शनैश्शनैस्तदपि सम्पत्स्यते !

एतेषां स्तम्भानां साफल्यं लेखायत्तं भवति । लेखाश्च लेखकैरेव लिखित भविष्यन्ति, तल्लेखक महानुभावानामेव शिरसि विद्यते साफल्यमेतेषाम् । अतः सुप्रभात-लेखका लेखान्नुल्लिख्य प्रेषयेयुः । परमेतदेव निवेदनम्, यत् लेखा नितरामुपयोगिनः, सरलाः, अतिसंक्षिप्ताः लोकहित-करा एव प्रेषणीयाः । अन्यथा वयं प्रकाशनेऽसमर्था भविष्यामः ।

* * * *

## सूचना ।

ये महानुभावाः छात्रमूल्येन १॥) सार्धैकरूप्यकेण सुप्रभातं गृह्णन्ति, अद्यपर्यन्तं ।) आणकचतुष्टयं विशिष्टाङ्कसाहाय्यं न प्रेषितवन्तस्तेषां विशिष्टाङ्कः सुरक्षितः कार्यालये विद्यते । सत्वरं स्वकीयं ।) साहाय्यमाणकचतुष्टयं प्रेष्य स्वीयमङ्कं समासादयन्तु । आणकचतुष्टयं धनादेशेन ( मनीआर्डरसे ) अथवा तन्मूल्याश्चिटिकाः (स्टाम्प) राजेस्टित (रजिस्टर्ड) पत्रेण प्रेषयन्तु । अन्यथा कार्यालयोनोत्तरदायी स्यात् ।

व्यवस्थापकः ।
सुप्रभातकार्यालयः, काशी ।

संस्कृत-साहित्य-समाज-संस्थापकाः ।

तत्सहकारिणश्च ।



(१) महामहोपाध्याय-श्रीदेवीप्रसादशुक्लः, कविचक्रवर्ती । (२) श्रीगिरीश शुक्लः, न्यायाचार्यः, ( सुप्रभात व्यवस्थापकः ) । (३) श्रीकेदारनाथ शर्म्मा सारस्वतः, ( सुप्रभात-सम्पादकः ) । (४) श्रीविन्ध्येश्वरी प्रसाद शास्त्री, ( सूर्योदय-सम्पादकः ) । (५) श्रीगोपाल शास्त्री, ( समाज-मंत्री ) । (६) दामोदर शास्त्री, भिषगाचार्यः । (७) श्रीतारादत्त पन्तः, साहित्याचार्यः, कार्यकर्तारः (८) श्रीमदनगोपाल शर्म्मा ( प्रधानलेखकः ) । (९) श्रीरामदेव द्विवेदः, । (१०) श्रीरामेश्वर शर्म्मा । (११) श्रीविमलेश्वर शर्म्मा, ( सम्पादकीयः कर्मकरः ) ।




विविध-विषय-विभूषितम्, अद्वितीयम्, सचित्रं संस्कृत-मासिक-पत्रम् ।

पञ्चम-वर्षे | सौर—वैशाखः । १९८५ वैक्रमाब्दाः | प्रथम-संख्या




आच्छाद्य शङ्करमनच्छाशयः सदसि कच्छायतिं बुध ! वह,-
न्नच्छान्दसोऽपि परमुच्छास्त्रवाग्जयसि तुच्छान् मदं च भजसे ।
सच्छास्त्रपान्थ ! किमु नेच्छापि ते भवति तच्छासनानुसरणे,
तच्छान्तिमेत्य हृदि गच्छानघं शरणमच्छाङ्कमन्धकरिपुम् ॥

—म. म. स्वर्गीय-रामशास्त्रि तैलङ्गानाम्

*　*　*　*

भिल्ली-धम्मिल्ल-मल्ली-परिमलिनि, दरोत्फुल्ल-काम्पिल्ल-वल्ली-
हल्लीसोल्लास-मल्ले, मरुति सति सरिल्लोल-कल्लोल-वेल्ले ।
झिल्ली-क्षुल्लान् प्रचुल्लांल्लघुरजनिचरांल्लोलयोल्लोठ्य नदं-
ल्लेखानुल्लाघयन्सँल्लघयतु विपदं तल्लजो मर्कटानाम् ।

—श्रीरामावतारशर्म्मणाम्

राधाश्लेषार्द्रा तनुः कृष्ण ! तेऽद्धा
वंशी-हस्ता रोहिणी पाणिपादे ।
दृष्टौ चित्रा शालिनी स्वातिभासा
मूलं भूयान्मामकप्रीतिवल्ल्याः ।

—श्रीगोस्वामिदामोदरलालशास्त्रिणाम्

*　*　*　*

अमन्दानन्दसन्दोह-मन्दिरं सुन्दरं महः ।
अलं कलिमलं लीला-ललितं लघु लुम्पतु ॥

—म. म. श्रीदेवीप्रसादशुक्लकविचक्रवर्तिनाम्

*　*　*　*

अमन्दानन्दसन्दोहनिष्यन्दिमधुरस्वराः ।
पान्तु वाग्देवतास्पर्श-मुदिताः कच्छपीस्वनाः ॥

—श्रीनारायणशास्त्रिणाम् ( खिस्ते )

*　*　*　*

जगदम्बावलम्बाय निरालम्बाय शूलिने ।
जगत्त्रयकुटुम्बाय नमः साम्बाय शम्भवे ॥

—सम्पादकस्य

# शुभाशिषः ।

महामहोपाध्यायस्य पण्डितसम्राजः—श्री प्रमथनाथ-तर्कभूषणभट्टाचार्य-महोदयस्य ।

विविध-विबुधमोदं तन्वतः सत्क्रियाभिस्तम इह भुवि सान्द्रं निघ्नतः स्वोदयेन ।
गहन-विधिरहस्यं कुर्व्वतो व्यक्तमुच्चैर्दिशि दिशि विजयन्तां सुप्रभातस्य भासः ॥

## नूतनवर्षाभिनन्दनम् ।

आयाहि भो नूतन-वर्ष ! हर्षप्रकर्षमाधातुमलं यतस्व ।
तव प्रसादेन सदैव देवः श्री विश्वनाथः सुतरां प्रसीदेत् ॥ १ ॥
सद्भूतिभूमोपचिताऽस्तुभूमिर्भाग्योदयो भूरि भवेत् प्रजानाम् ।
भातु प्रभावप्रभवाऽस्तभीतिर्भोगोपयुक्ता भृत-भावुका श्रीः ॥ २ ॥
उदेतुसन्मङ्गलसम्पदुच्चैरमङ्गलं द्राग्विलयं प्रयातु ।
दरिद्रता नश्यतु, वश्यभावमवश्यमासाद्य महः स्थिरः स्यात् ॥ ३ ॥
दोषा अशेषाः खलुनामशेषा-भवन्तु, भक्तिर्भगवत्युदीयात् ।
पूता मनोरञ्जनहेतुभूता गुणाः प्रभूताश्च समुल्लसन्तु ॥ ४ ॥
आधिर्जनानां हृदयं विहाय कुत्राऽपि यायादथवा प्रणश्येत् ।
व्याधिर्निदानेन निजेन साकं स्वयं समासाद्य भयं म्रियेत ॥ ५ ॥
पापानि सर्वाणि सहैव दुःखैः पलाय्य पातालतलं प्रयान्तु ।
सुखैःसमेतः सुकृतस्य राशिः समेधतामाशु विनाऽन्तरायम् ॥ ६ ॥
लोकोपकारैकपराऽपरागा निश्शेषविद्वेषविकारशून्या ।
शश्वत्समासादित-सुप्रसादा मतिस्सतामस्तु गतिर्गुणानाम् ॥ ७ ॥

—श्रीदेवीप्रसादशुक्लः, कविः
( महामहोपाध्यायः )

## भारतमातृवन्दना ।

हिमवता मुकुटेन विराजिता,
द्विगुणषोडशकोटिसुतान्विता ।
स्मितपराजित-पूर्णसुधाकरा,
जयति भारतवर्ष-वसुन्धरा ॥ १ ॥

अमृतपङ्कज-भास्वरितानना,
छविविनिन्दित-नन्दनकानना ।
अमल कोमल विम्बफलाधरा,
जयति मे सुफला सुजला धरा ॥ २ ॥

महितराघवमाधवमातृका,
विहितवर्गचतुष्टयदातृका ।
अधिगता मुनिभिश्च यतो जनिः,
जयति मे वरदा भरतावनिः ॥ ३ ॥

प्रणतमानव बुद्धिविकाशिनी,
प्रबलराक्षसवंश-विनाशिनी ।
सुमतिदा विशदा भयहारिणी,
जयति मा परमाऽऽमयवारिणी ॥ ४ ॥

सुखद सुन्दर शाद्वल शालिनी,
सुम समूहलसद्‌ गिरिमालिनी ।
बहुनदाऽऽप्रपदीन-कचाचिता,
जयति विश्वजनीन-गुणार्चिता ॥ ५ ॥

श्रुतिशुचिस्मृतिदर्शन हेतवे,
विधुरवीचिभवार्णवसेतवे ।
निखिल वाञ्छितकामदधेनवे,
तव धरित्रि ! नमोऽङ्घ्रिसरोरुहे ॥ ६ ॥

जनित-विष्णु-विरञ्चि-दिगम्बरा,
वितत-शुद्ध-यशोलसदम्बरा ।
ऋषि-महर्षि-निपीत-पयोधरा,
जयति जन्मधरा सुमनोहरा ॥ ७ ॥

सुमहनीयमहामहिमान्विताम्,
विजयिनीं महतीं महितां हिताम् ।
प्रतिपलं कलये हृदि सादरम्,
विबुध-वन्दित-भारतमातरम् ॥ ८ ॥

सुरसरिद्‌ यमुना च सरस्वती,
सुरस सिन्धुनदी च दृषद्वती ।
अगणिताः सरितोऽपि च नर्मदा,
धवलयन्ति पदं तव सर्वदा ॥ ९ ॥

मलयजः पवनः परिपावनः,
सरसिजामृत शीकरवाहनः ।
व्यजनमातनुतेऽनिशमर्चिते,
वपुषि ते हरिचन्दनचर्चिते ॥ १० ॥

पदपरागमतीवशिवङ्करम्,
परिचरन्नयि तेऽम्ब ! निरन्तरम् ।
प्रियजनं जनकं च सहोदरम्,
परिजहामि भजामि च नोदरम् ॥ ११ ॥

जननि ! मन्नयनं भयनाशया,
प्रथममुल्लसितं तव भासया ।
मृतिदिनेऽपि तथा परिपूरितम्,
भवतु भारतभूमि ! निमीलितम् ॥ १२ ॥

न वसु नापि सुखं न सुतानये !
परपदं जगदम्ब ! न कामये ।
चरणमर्चितुमीश्वरि ! तावकम्,
जनुरिदं व्यतिगच्छतु मामकम् ॥ १३ ॥

श्रीविन्ध्येश्वरीप्रसाद शास्त्रिणः

( 'सूर्योदय'-सम्पादकस्य )

# शृङ्गारस्यैकमात्ररसत्वम् ।

लेखकः—

श्रद्धेय-श्रीरामावतारशर्म्मा, एम० ए०, साहित्याचार्यः



यथा भवभूतिना—

"एको रसः करुण एव निमित्तभेदात्
भिन्नः पृथक् पृथगिवाश्रयते विवर्त्तान् ।"

इत्यादौ करुणस्यैव एकमात्ररसत्वं प्रतिपादितम्; तथा भोजेनाऽपि 'शृङ्गार प्रकाशे' [1] शृङ्गाररसस्यैकमात्र रसत्वं प्रतिपादितम् । तथाच शृङ्गारप्रकाशस्योपक्रमे द्वे पद्ये—

शृङ्गार-वीर-करुणाद्भुत-रौद्र-हास्य-
बीभत्स-वत्सल-भयानक-शान्तनाम्नः ।
आम्नासिषुर्दश रसान् सुधियो वयं तु
शृङ्गारमेव रसनाद्रसमामनामः ॥

* * *

वीराद्भुतादिषु च येह रस-प्रसिद्धिः
सिद्धा कुतोऽपि वटयक्षवदाविभाति ।
लोके गतानुगतिकत्ववशादुपेता-
मेतां निवर्तयितुमेष परिश्रमोऽयम् ।

एतत्पद्यद्वयं धर्मदाससूरिणा 'साहित्य-रत्नाकरे समुद्धृतं मया दृष्टपूर्वम् । सम्प्रति तु प्रकाशितस्य शृङ्गारप्रकाशांशस्य भूमिकायामिदमुपन्यस्तम् ।

भोजराजेन स्वसभापण्डितैर्बहवः प्रबन्धा निर्मापिता इति प्रतिभाति । तत्र षट्त्रिंशत् प्रकाशात्मकः शृङ्गार प्रकाशोऽयं महाकविना छित्तपेन निर्मित इति प्रतिभाति। तथाहि—

"अच्छिन्नमेखलमलब्ध-दृढोपगूढ-
मप्राप्तचुम्बनमवीक्षितवक्त्रकान्ति ।
कान्ता-विमिश्र-वपुषः कृतविप्रलम्भ-
सम्भोगसख्यमिव पातु वपुः पुरारेः ॥"

इतीदं शृङ्गारप्रकाशस्य मङ्गलपद्यम्, तच्च मया प्रकाश्यमाने सदुक्तिकर्णामृते छित्तपस्य पद्यत्वेनोपन्यस्तम् । भोजराजात् किञ्चिदेवार्वाचीनः सदुक्तिकर्णामृत-सङ्ग्रहीता छविरः श्रीधरदासः स्व-संग्रहे भोजीयानि पद्यानि भोजीयत्वेनैवोदाजहार। छित्तपादीनां पद्यानि तु तत्तन्नाम्नैवेति शृङ्गारप्रकाशस्य छित्तपप्रणीतत्वेन तत्समये प्रसिद्धो नाभविष्यत्तदाना 'अच्छिन्नमेखलमिति पद्यं तच्छित्तपीयत्वेन व्याहरिष्यत छित्तपश्च सुप्रसिद्धो भोजसदस्य इति "भोजश्छित्तपबिल्हण प्रभृतिभि" रित्यादिश्लोकादवगम्यते । प्रमाणान्तराणि अत्र न विस्तरभयेनोपन्यस्तानि । यथाशृङ्गारप्रकाशरीत्या शृङ्गार एवैको रसः, अन्ये रसास्तु भावमात्राणि । यथा शृङ्गार प्रकाशे—

1—शृङ्गारप्रकाशाख्यो महान् रसग्रन्थः श्रीभोजनिर्मितः साम्प्रतमेव मद्रास-पुस्तकालये समुपलब्धः तस्य प्रकाशनञ्च तत्रैव जायते । तस्य कश्चनांश एव सम्प्रति मुद्रितो मया लेखक महोदयानां सविधे दृष्टः । तद्विषये पुनर्विशेषं व्याख्यास्यामः ।

"रत्यादयो यदि रसास्युरतिप्रकर्षे
हर्षादिभिः किमपराद्धमतद्भिभिन्नैः ।
अस्थायिनस्त इतिचेद्भयहासशोक-
क्रोधादयो वद कियच्चिरमुल्लसन्ति ॥"

शृङ्गारमात्रस्य रसत्वसिद्धान्तश्चात्र सङ्क्षेपेण मया विदुषां विचाराय दिग्दर्शितः। विस्तरार्थिनः शृङ्गारप्रकाशमालोकयन्तु ।

शृङ्गारप्रकाशे बहून्यैतिहासिकवृत्तान्यपि दृश्यन्ते। तद्यथा—कालिदासस्य कुन्तलेश्वरदौत्यादुद्धृतमिदं पद्यम्—

असकलहसितत्वात् क्षालितानीव कान्त्या,
मुकुलितनयनत्वात् व्यक्तकर्णोत्पलानि ।
पिबति मधुसुगन्धीन्याननानि प्रियाणां
त्वयि विनिहितभारः कुन्तलानामधीशः ।

एतत्पद्यं कालिदासेन विक्रमादित्य समक्षमुक्तमासीत् विक्रमेण चैत्तदुत्तरे प्रोक्तम्—

"पिबतु मधुसुगन्धीन्याननानि प्रियाणां
मयि विनिहितभारः कुन्तलानामधीशः ॥"

एवं विकटनितम्बा पूनर्भूरासीदित्यपि शृङ्गारप्रकाशादवगम्यते ।

## अभिभाषणम् । *




श्रीमन्तो विविधविद्याविलासिनो विद्वद्वृन्दारकाः, श्रीवाराणसी-संस्कृत-साहित्य-समाजभाजः, अत्र समागताः साहित्यप्रेमजुषः सभाजनाश्च !

भवद्भिरेतत्सभाध्यक्षपदप्रदानेन नितान्तमहमुपकृतोऽस्मि; विशेषतश्च अनेन काशीस्थ-विद्वज्जन-समागम-सम्पादनेन । अधुना एतदावेदयामि यत् समाजमन्त्रिभिः प्रबद्धं क्रममनुसृत्य दिनद्वयमस्मिन्न् स्थाने अपराह्णे चतुर्थघण्टावादनादारभ्य षष्ठघण्टावादनपर्यन्तमस्माकं कार्यं भविष्यति । अद्यतनकार्यविभागपर्यवसाने च सभाध्यक्षस्थानानुरूपमध्यक्षेन किञ्चिद्वक्ष्यते ।

आदौ शिष्टाचारानुसारेण सर्वविघ्नशान्त्यर्थमस्मत्कार्यसाफल्यसिद्ध्यर्थञ्च श्रीशप्रार्थना सभाजनैर्विधीयताम् ।

श्रीमन्तो महानुभावाः सभाजनाः !

इदानीमध्यक्षस्थानात् यत्किञ्चिदल्पमेव प्रसङ्गाकाङ्क्षितं वक्तुं भवद्भिरनुज्ञा दीयतामित्यभ्यर्थये ।

ॐ नमः श्रीधर्मदत्ताय गुरवे बुद्धिरूपिणे ।

अयं समाजः "संस्कृतसाहित्यसमाज" इति विचिन्त्य संस्कृत-साहित्य-शब्दार्थयोर्मीमांसा यदि क्रियते तर्हि न अकाले अस्थाने वाऽकाण्डताण्डवं स्यादिति मन्ये। सापि कालमर्यादामनुरुध्य समासत एव विधास्यते नतु विस्तरेण इति भवतामतिक्लेशो भविता। तथापि यः कोऽपि श्रमः स्यात् स महानुभावतया भवद्भिः सोढव्य इति प्रार्थ्यते ।

( * संस्कृत-साहित्य-समाजस्य चतुर्थाधिवेशने सभापति पदमलंकुर्वतां श्रीमदाचार्यआनन्दशङ्करबापूभाई ध्रुव [ एम्० ए० एल्एल् बी०, प्रो०—वाइस चांसलर हिन्दू विश्वविद्यालय, काशी ] महोदयानाम् )

तत्र प्रथमं "संस्कृत"-पदार्थविचारे कल्पद्वयं प्रतिभाति—

( १ ) संस्कृतैः—शास्त्रोक्तसंस्कारविशेषैः परिशुद्धैः शिष्टैर्जनैर्या या वाग् भाष्यते सा संस्कृता।

( २ ) अथवा, प्रकृतिरूपाद् वाग्विशेषात् संस्कारं प्राप्य या भाषा समजनि सा संस्कृता।

अनयोः कल्पयोरयं भेदोऽवधारणीयः—यत् प्रथमे कल्पे या संस्कृता भाषा सा न सार्वलौकिकी; किन्तु शिष्टजनमुखस्यैवालङ्कारः। नन्वेवं चेत् संस्कृता वाक् महर्षिणा पाणिनिना "भाषा"शब्देन कथमगादि? लोके च तस्या व्यवहार—इतिकथमुक्तम्? उच्यते। तत्तु तत्कालीनशिष्टजनभाष्यमाणत्वात्, न पुनः सर्वजनसाधारणत्वात्। अतएव तस्या गीर्वाणवाणीति प्रसिद्धिः। तस्मात् संस्कृतप्राकृतयोः सम्बन्धः पौर्वापर्य-निबद्धः। तच्च निबन्धनं बीजाङ्कुरभावसदृशं न भवति, किन्तु एककालावच्छिन्न-संस्कारभावाभावप्रयुक्तभाषाभेदस्वरूपः-इति एके मन्यन्ते।

अस्मिन् मते प्रकृतिः संस्कृतम्, तद्भवं प्राकृतमिति हेमन्द्राचार्यैर्यदुक्तम् तदयुक्तम्। संस्कृतस्य क्वापि प्रकृतिशब्दवाच्यतानुपलम्भात्। अत्र पुनः, अयं भाषाभेदः सर्वथा भाषाद्वयसंसितः। एकस्या एव भाषायाः संस्कारभावाभावमात्रप्रयुक्तः प्रकारभेदो वा इत्यपि विमर्शान्तरम्।

द्वितीयं कल्पं स्वीकृत्य अपरे पुनरेवमाहुः, यत् कस्मादपि सर्वजनसाधारणात् प्राकृतविशेषात् संस्कृतस्य प्रादुर्भावो बीजाङ्कुरन्यायेन। अत्र पुनर्बीजसदृशः स प्राकृत-विशेषः। प्राचीनतमे कस्मिन्नपि समये सर्वत्र न प्रसिद्धा वेदभाषा, अथवा सापि श्रोत्रियजनसंस्तुता भाषा इति अवान्तरो विकल्पः।

प्राकृतविशेषात् संस्कृतस्य बीजाङ्कुरन्यायेन प्रादुर्भाव इति यदुक्तं तस्यायमर्थः। आद्यप्राकृतात् संस्कृतम्, संस्कृतात् पुनरन्यत् प्राकृतमिति बीजाङ्कुरन्यायः। तस्मादेतदपि चिन्तनीयं प्रसज्यते, यद्वररुच्यादिव्याकृताः प्राकृतभाषाः संस्कृतभाषाप्रभवाः, भाषान्तरप्रभवाः उभयप्रभवा वा। एवमपि अपभ्रंशः प्राकृतमात्राज्जातः, तस्य भाषान्तरसम्पर्को वा। अपिच-हेमचन्द्रेण यद्देशीति कथ्यते, तदपि पूर्वोक्तमहाप्राकृतादिभाषाभिः सम्बद्धमसम्बद्धं वा इति वैदुष्यप्रकर्षेण विचारणीयम्। तदपि दुर्बोधमपि विदुषां किमगोचरमिति मनसि निधाय यत्नेनावबोध्यम्। साहित्यसमाजभाजां विदुषां विद्यार्थिनामस्मिन् विषये समीचीना गवेषणा भवेदिति हेतोर्मयाऽस्यां सभायामिदं विद्यास्थानं प्रादर्शि।

अथेदानीं साहित्यशब्दार्थौ विचार्यते। साहित्यशब्दस्य रूढार्थं तु 'साहित्यसंगीतकलाविहीनः, साक्षात् पशुः पुच्छविषाणहीनः' इति हरिवाक्यं स्मारं स्मारं बालोऽपि जानाति। किन्तु कः खलु तस्य यौगिकोऽर्थः? तेन यौगिकार्थेन तस्य रूढार्थस्य कः सम्बन्धः इति तु दुरूहम्। तथापि तदूहगोचरीकर्त्तुं यथामति यतिष्ये। रामादिवद्वर्तितव्यं न रावणादिवत् इति हितेन सहितं स-हित तदेव साहित्यम्। हितोपदेशकं काव्यमित्यर्थः इत्येकं निर्वचनम्। "सकल विद्यास्थानैकायतनं पञ्चदशं काव्यं विद्यास्थानमिति यायावरीयः। गद्यपद्यमयत्वात् हितोपदेशकत्वात्" इति काव्यमीमांसायां राजशेखरोक्तिरिमामेव निरुक्तिं सूचयति, किन्तु; तस्मिन्नेव ग्रन्थे राजशेखरेणान्यदेव निर्वचनं कृतम्। तद्यथा—"शब्दार्थयोः सहभावेन विद्या साहित्यविद्या।" चिरन्तनेन भामहेनाऽपि "शब्दार्थौ सहितौ काव्यम्" इत्युक्तम्।

अथवा तृतीयमेवं स्यात्, यत्, नटाः सूत्रधारेण सहिताः संलापं यत्र कुर्वते, तत् साहित्यं नाटकापरपर्यायम्। नाटकस्य च काव्यविशेषत्वात् अजहल्लक्षणया साहित्यशब्दः काव्यसामान्य प्रतिपादयति। किन्तु; साहित्यशब्दः क्वचिदपि केवलं नाटकार्थं, सहितशब्दः क्वचिदपि काव्यार्थं अदृष्ट इति सर्वत्र ( त्रिष्वपि निर्वचनेषु ) अरुचिबीजम्। शोभनतरनिर्वचनाभावे 'दुर्भिक्ष-भोजन' न्यायेन च त्रिषु मध्ये किमपि स्वीक्रियताम्।

[ अपूर्णम् ]

# इन्द्रजाल-मञ्जूषा ।

लेखकः-श्री पं० मंगलदेव शास्त्री, एम० ए०, पी-एच्० डी०

( १९१२ सने हिन्दीभाषाया अनूदिताऽऽख्यायिका )

'महतीमपि श्रियमवाप्य विस्मयः सुजनो न विस्मरति जातु किञ्चन '



खल्वासीत् साधारणसमितेर्वासरः । प्रधानामात्यप्रमुखा महत्पदमधिष्ठिता लघुपदभाजस्तथान्ये कार्यकर्तारः सर्वेऽप्यासन्नुपस्थिताः । निर्दिष्टमासीद् भूभुजा—"यदद्यानिवार्यः प्रवेशः सर्वसाधारणस्य । यः कोऽपि समेत्यास्थानमण्डपमभिक्षोणिपतिं स्वमनोऽनुरूपमावेदयतु वाञ्छितम् । नहि कश्चन परिचारकोऽधिकरणमण्डपमाविशन्तमवरोद्धुं क्षमः । सर्वोऽपि निजपरितापमभिदधातु । यतो विशां त्राणाय प्रकल्पेऽहम्" इति ।

पराभूतानेकनृपतिमण्डलपरिवृतस्तारागणैरिव भगवान् राकापतिः, गोमेद-हीरकादिरत्नकलापगुम्फितमध्यास्तेस्म हैममासनमतुलवीर्यो महामतिर्महीपतिः । दक्षिणपार्श्वे प्रधानामात्यो वामपार्श्वे च चमूपतिरासन्दीमधितष्ठतुः । अन्येऽपि सानुक्रमं स्वं स्वमासनं भेजिरे ।

यथावारं सर्वेऽपि प्रार्थिनो महीभुजः पुरो निजावेदनमुदीरयामासुः । स च सस्मितमनायासञ्च यथार्थन्यायमनुतिष्ठँस्तांस्तुतोष । शुभेऽहनि तस्मिन् सुबहूनभिनन्दयन्ननेकेषामाशिषां धन्यवादानाञ्च भाजनं बभूव भूपः ।

नातिदूरे नृपासनान्मलिनाम्बरः कश्चिदेको मानवो नरपतेरानने दत्तदृष्टिस्तस्थौ । सोऽपि महीपतेरभिमुखमावेदयितुं साधारणसमितौ किञ्चन समागात्; परमास्थानमण्डपस्याद्दृष्टपूर्वामनेकाभरणपरिच्छदैर्भास्वरां सुषमासम्पत्तिमवलोक्य चकितचकितो नैजमावेदनमपि विसस्मार । नहि क्षितिभर्तृसविधे स्यात; नापि किमपि स प्रार्थितवान् । प्रसङ्गवशाद्धरापतिः प्रधानामात्यं सम्बोध्य ऊचे—"भद्र! जगतो मात्रायां सुगमो निर्वाहाभ्युपायः कस्माऽवगन्तव्यः" इति । प्रधानसचिवः सानुनयं भक्तिपुरस्सरं चाह—"देव! स्त्रियाः" —इति ।

तत्क्षणमेव सवेशे समासीनस्य तस्याऽनिर्णिक्तवाससोऽपावृतमास्यम् । सप्रश्रयं शनैश्चासावादीत्—"सती पतिव्रता च चेद्वर्तते स्त्री-यतस्तस्याः सतीत्वाभावे पत्युरापत्परम्परा अवश्यं भवेयुः" इति । धराधिपतिरप्येतदशृणोत् । मुहुरपि च स सस्मितमन्वयुङ्क्त महामात्यमेव—"आर्य! संसारे किमत्यधिकमुपयुज्यते ?" इति प्रत्युत्तरितं मन्त्रिणा—"देव! दयापाथोनिधे! धनमेवास्मिन् विषयेऽन्यानि वस्तून्यतिशेते" इति ।

भूयोऽपि—"धनं चेत्करगतं भवति, मनुजश्च यदि तदुपयोगरहस्यं वेत्ति । अन्यथा तद्भावाभावौ न विशिष्येते" इति स एव मलिनवासाः शनकैः सान्तस्तोषं प्रौढमुवाच । महीपतिस्तद्वचोभिरतिशयेन तृप्तस्तदभिमुखं सामोदमैक्षत । अनन्तरं च तमात्मसन्निधौ सादरं समाहूय प्रावोचत्—"को भवान् ? किं प्रयोजनञ्चात्र मदन्तिके समागमनम् ? सर्वोऽपि स्वमनोऽनुरूपमस्मत् पुरतो निवेद्य स्ववाञ्छितं लब्धवान्, परं नहि भवता किमपि समुदीरितं साम्प्रतं यावत् । किमत्र निदानम् ?" इति ।

एवमनुयुक्तो नरपतिपुङ्गवेन—"विदधातु परेशोऽरिष्टतातिं भवताम् । देव! वसुन्धरापते! अहमतिदरिद्रः, परं विद्वान्, भवतां राज्याधिवासी ब्राह्मणः, पुस्तकान्येव मे धनम्, निजभार्याहेतोश्चात्रागतं वेत्तु भवान् मामकम्, सा हि मे प्राणेभ्योऽपि प्रेयसी, धर्माचारवती, सती, भार्या । सार्द्धं तया सानन्दं जीवनकालकला अतिवाहयतो निजपुस्तकस्वाध्याये दिवानिशं रममाणस्य धर्म्यां साध्वीमवस्थां

परिषेवमाणस्य नाथ यावत् कदाचिदपि अवकाशं लब्धवती मे मानसे वित्तैषणा लौकिकसुखैषणा वा । गतवासरात् सा तीव्रेण कठिनामयेन ग्रस्ता, न हि मदन्तिके पानभोजनाय किञ्चित्, न चाप्यौषधपरिषेवणसामर्थ्यम् । अतो भवतां सविधमुपस्थितोऽस्मि, ततः साहाय्य-वितरणेन मामनुगृह्णातु देवः । स्थापयतु च परलोकेऽपि साम्राज्यम् । सन्ततं पुनर्निजविद्यया बुद्ध्या च भवतः सेवायां सन्नद्धो भविष्यामि । अग्रे देवः प्रमाणम् । " —इति एवं स सविनयमावेद्य विरराम ।

क्षितिपतिस्तस्य सूनृतां वाचं निशम्य तदानने दृशं पातयामास । प्रख्यापयतः स्म हि तस्य चक्षुषी अनुपमं तद्वैशारद्यम् ।

अथ महीपतिः प्रधानामात्यमादिदेश—" अद्य प्रभृति इममहं स्वपरिषदः सभास्तारपदे नियोजयामि । भवद्भिश्चैतन्निखिला आवश्यकताः सम्पूरणीयाः " इति । अचिरादेव नृपादेशमन्वतिष्ठत् सचिवः । समुपस्थितो भार्यां चिकित्सितुं तद्गेहेऽगदङ्कारः । सा चाचिरादेव निरामयत्वं भेजे । स चापि मनीषी विप्रो नियमेन राजपरिषदं सभास्तारपदेनालञ्चकार । ततः प्रभृति न खलु कदाचित् सोऽदृश्यत पूर्वमिव मलिनाम्बरः । परमासीदच्छश्लक्ष्णवासाः । तथापि स पूर्ववदेव पुस्तकालोचन-निरतोऽभूत् । राजपरिषत् कार्याल्लब्धावकाशस्तेष्वेवासीत् सततं व्यासक्तमनाः ।

स हि क्षमाया क्षमया, धैर्ये च हिमवतः सदृशः; परमभागवतः समेषामचिरादेव समादरभाजनं बभूव । महीपतिश्चाविरतं समादरेण तं सुबहु सत्कृतवान् । तस्य गेहिन्यपि यथापूर्वं दारिद्र्यावस्थायां देवीभावनया तं समर्च्चयामास; तथैवेदानीमपि सम्पत्तिसद्भावेऽपि तं महात्मभावनया सम्भावयामास । नूनमैश्वर्यसम्पदायामपि पूर्ववदेव सहजसरलत्याऽपरिवर्तितन्महस्तिष्कस्य तस्य जीवनयात्रायां केवलं शरीरवसनेष्वेव समदृश्यत परिवृत्तिलवो न पुनराचारेषु स्वभावेषु वा । तथा खल्वेषोऽत्युदारैः स्वगुणैर्नरपतेर्मनो जग्राह यत् क्षोणिपतिरेतस्य निखिलविद्यासु दाक्षिण्यम्, सकलकलासु च वैचक्षण्यमालोक्य निरतिशयं प्रसन्न उत्तरोत्तरे पदे स्थापयन् क्रमेणामात्यपदे नियोजितवान् । समासाद्य तमधिकारं सततमात्मकृत्यस्य सत्यभावेन तत्प्रवणतया चानुष्ठानेन समधत्त पदमाशु स प्रजाजनचेतःशिलापट्टेषु ।

राज्ञोऽन्येऽधिकारिणः समीक्ष्य तस्याभ्युन्नतिं दिने दिने चाभिवृद्धिमीर्ष्या कलुषितचेतसोऽचिन्तयन्—अहो, दरिद्र एवं गुरुपदमारूढोऽयमस्मानपि शास्तीति ।

आश्चर्यम्, अपरित्याज्यो हि दुःस्वभावो दुर्मतीनाम् !!!

ते हि तद्विरुद्धं कर्तुमुद्युक्ता मिथो मन्त्रयाञ्चक्रिरे । अन्ततस्तेषामेको रहसि कदाचन लब्धावसरो नरपतिमेवमुदीरयामास "क्षमापते ! देव ! अयमतीव मायिको विप्रः । इन्द्रजालेन छलेन वशीकृतो भवान् । एवं हि जनप्रवादः—यद्भवदभिमुखमागमनात्पूर्वमयं नियतमेव निजगेहप्रकोष्ठे प्रविशति । स च सततमनयावृतद्वारको वर्तते । तत्रास्ते पुनरेका रजतमयी लघ्वी मञ्जूषा, इन्द्रजालमयी च सा । तामुद्घाट्य किञ्चित्तान्त्रिककृत्यमनुष्ठायैवायं भवतामभिमुखमायाति, इति । किञ्च नाभविष्यद्यदि स्वयं मायावी; कथंकारमन्यथा झटित्येवामात्यपदे प्रारोढुं प्राभविष्यत् । देव समवहितैर्भाव्यं भवद्भिः । नहि जातु एतादृशो दरिद्रो विशिष्टं कारणमन्तरा सहसा एतामवस्थामाप्तुं शक्नोति । नूनमेतस्या मञ्जूषाया एव विलसितम्, यद्भवानप्येतद्वशः समजनि । झटित्येवायममात्यपदमारूढः—न ज्ञायते किमग्रेभावि ? अतो मायामञ्जूषां प्रति सततमेव सावहितस्तिष्ठतु भवान्" इति ।

एवमाकर्ण्य तस्य वाग्जालं भूपः, प्रथमन्तु सर्वमेतज्जाड्यहेतुकं वा ईर्ष्याकारितं वा इत्येवामन्यत; परं यदानेकैरधिकारिभिः स्ववंशसम्भूतैरपि च बन्धुभिर्बहुवारमनेकश एवं भणितस्तदा कश्चित्सन्देहलवस्तस्मिन् विषये तस्य मनसि प्रादुर्भूतः सत्यमेवोच्यते:—

**सुजनानामपि हृदयं पिशुनपरिष्वङ्गलिप्तमिह भवति ।**
**पवनः परागवाही रथ्यासु वहन् रजस्वलो भवति ॥**

[ अपूर्णम् ]

# आयुर्वेदस्य क्रमिक ह्रासः ।

लेखकः—
डा० गणनाथ सेन महोदयः, एम्० ए०, एल० एम्० एस्०
महामहोपाध्यायः, विद्यानिधिः, सरस्वती



इह खलु क्रमेण दुर्दैववशाद्धीयमाने चिरन्तनवैदिकाचारगौरवे, क्षीयमाणज्योतिषि बौद्धदुर्दिनाच्छन्ने च भारतप्रभावदिनकरे प्रादुरभूवन्नकालवज्रनिर्घाता इव शक-हूण-यवनादिजातीनामुत्पाताः श .धा ज्ञानार्ज्जनविघ्नभूताः । तेष्वाद्य उत्पातो भारताक्रमणमलिकसन्दराख्येन (अलेक्जेण्डर) ग्रीकभूपतिना । स हि महाबलः परःसहस्र चतुरङ्गसेनासमृद्धिः खीस्तपूर्वसप्तविंशत्यधिकत्रिशतमिते वर्षे ( 327 B. C.—अर्थात् प्रायः सपादद्विसहस्रवर्षेभ्यः प्राक् ) राहुरिव करालो भारतसूर्यमग्रसीत् । तदाक्रमणजन्ये च महति विप्लवे विध्वस्तप्राय आसिन्धुपञ्चनदावधिर्महादेशो येन गृहदाहदुर्भिक्षादिना सहस्रशो विनष्टाः प्रजाः, शतशः प्रणष्टानि च ग्रन्थरत्नानि । प्रतिनिवर्त्तमानेन च तेन ग्रीकभूपतिना तत्तत्प्रदेशशासनाय विनियुक्तः सेल्युकसाख्यो ग्रीकवीरः, स्वदेश प्रापिताश्च केचन भारतीया ग्रन्थाः विशेपतश्चचिकित्साग्रन्थाः भारतीयचिकित्सानैपुण्यविलोकनविमुग्धेन चेतसा । ततो मगधाधिपेन महाराजचन्द्रगुप्तेन परा[illegible]तोऽसौ सेल्युकस्वीरः सन्धाय प्रतिनिवर्त्तमानोऽपि भारतीयविद्यार्ज्जनाय मेगास्थिनिसाख्यं ( मेगास्थनीज ) ग्रीकभिषजं चन्द्रगुप्तसदसि पाटलिपुत्रे स्थापयाम्बभूव । तदेतदखिलं भारतीयज्ञानालोकस्य यावनदेशप्रचारस्य द्वारमभूदिति पुरावृत्तविदां वार्त्तया सुप्रतिपन्नं चक्षुष्मताम् । न च शंक्यम्—ग्रीसदेशीयज्ञानत एव भारतस्यासीद् विज्ञानसमृद्धिरिति । न हि मुष्टिमेयैर्विताड़ितावशिष्टैश्च ग्रीकसैनिकैः शिक्ष्यन्ते स्म भारतीया ज्ञानर्द्धिसमृद्धाः सुधियः, न च सत्येवं ग्रीसदेशीयैरैतिहासिकैस्तथा नाभविष्यल्लिखितम् । दर्शिताश्चास्माभिरनेकधाऽन्येऽपि भूतार्थप्रतिपादका हेतवः ।

तत. प्रशान्तप्राये नन्दकुलधूमकेतोर्महाराजचन्द्रगुप्तस्य शौर्येण ग्रीकाख्ययवनानां [illegible]भावे चन्द्रगुप्तस्य तत्सूनोर्बिन्दुसारस्य च राज्यावसाने क्रूरप्रकृतिरशोकनामा बिन्दुसारपुत्रो राजवंश्यान् बहुधा विनिपात्य सिंहासनमारुरोह ( 264. B. C. ) । तेन च क्रोधभयानकेन 'चण्डाशोक' इति ख्यातिं गतेन कलिंगेषु वर्षत्रयं सुमहान् युद्धविप्लवः समारब्धस्तेन लक्षशो विनष्टाः प्रजाः, न किमुत शतशो ग्रन्थरत्नानि ? ततोऽसौ उपगुप्ताख्येन बौद्धाचार्येणोपदिष्टो बौद्धधर्ममग्रहीत, प्रसिद्धश्चानन्तरं धर्मिष्ठो भवन् 'धर्माशोक' इति बौद्धेषु । प्रचारितश्च तेन नानादिगन्तेषु प्रेषितैर्बौद्धश्रमणैश्चीन-ग्रीसादिसुदूरदेशेषु बौद्धानां धर्मो ज्ञानालोकश्च भारतीयः । आयुर्वेदस्य पुनस्तदानीं किञ्चिन्मन्दप्रभोऽपि परहितव्रतैर्बौद्धश्रमणैरुपासितश्चीन-यवनादिदेशेषु प्रचारविशेषं लेभे । तथापि राजाज्ञया शवच्छेदादिनिषेधात्ततःप्रभृति शारीरशास्त्रस्यावनतिरेवाभूत, नष्टप्रायशारीरस्य च वैद्यकस्य कथङ्कारं समुन्नतिः ?



२

ततो विनष्टपराक्रमे मौर्यवंशे ( 183. B. C. ) पार्थिनामानो ग्रीकयवनाः शकाख्यबर्बराश्च पुनःपुनर्भारत-माक्रम्य आसिन्धु-साकेतपुरावधिप्रदेशेषु निरन्तरं विप्लवं जनयामासुः। तदा मिलिन्दाख्यो यवनः पञ्चनदप्रदेशं बुभुजे, स च नागार्जुनेन बौद्धधर्मे उपदिष्ट इति मिलिन्दप्रश्नीया कथा बौद्धानाम्। मगधेषु च तदैव पुष्पमित्रः शुङ्गवंश्यो मौर्यवंश्यं बृहद्रथं विनाश्य राज्यमग्रहीत्, विताडितश्च तेन मिलिन्दाख्यो यवनः साकेतपुरीं रुन्धानः। भगवान् पतञ्जलिश्च तदानीन्तन एवेति ऐतिहासिकाः।

एवञ्च मनाक् प्रशान्ते विप्लवे चरकापरपर्यायेग तेन भगवता पतञ्जलिना प्रतिसंस्कृता विशीर्णप्राया अग्निवेश-संहितेति प्रागदर्शयाम। बौद्धाचार्येण नागार्जुनेन च तस्मिन्नेव काल सुश्रुतसंहिताऽपि प्रतिसंस्कृतेति केचित्। अमुष्य च प्रायो वर्षसहस्रद्वयी समतीता वृत्तान्तस्य।

अथ पुनः पुनः शकजातीयानामाक्रमणेन क्षीणदीनबलेषु सकलराजकेषु कुशाणवंशीयः कनिष्कनामा महाप्रतापः शक-नरपतिराहिमाद्रिविन्ध्यपर्यन्तं भारतस्य उत्तरपश्चिमार्द्धं बहुभिर्युद्धैर्जिगाय। तस्य शकनरपतेरतीताब्दाश्च साम्प्रतं १८३५ संख्याः। परास्ताद्वर्षशतत्रयं कथञ्चिदिव प्रशान्ता रणलीला। अस्मिंश्चावसरे चरकसंहितापूरकः सम्बभूव काश्मीरेषु दृढवलाचार्यः। ततो हूणैः काम्बोजीयैश्च पुनर्भारतमाक्रम्य शलभैरिव शतकोटिसंख्यैर्वर्षशतं समारब्धो विप्लवः सुमहान्। हूणाश्च शका एव भिन्नप्रान्तीयाः इति केचित्। तांश्च सर्वान् मालवाधिपो विक्रमादित्यो यशोधर्मदेवाख्यो महता शौर्येण विजित्य शकारिसंज्ञां लेभे, विस्तारयामास च सुमहत् साम्राज्यमुज्जयिनीत आ-हिमाद्रिमूलम्। ततश्च प्रभृति (खीस्तीय ५३३ अब्दतः—सर्वथा विताड़ितेषु शकहूणादि-बर्बरेषु सार्द्धचतुःशतवर्षाणि पञ्चशतवर्षाणि वा कथञ्चित् प्रति-ष्ठिता शान्तिः। विक्रमादित्यश्चायं कालिदासादिनवरत्नोपा-सितो विद्याब्धिकर्णधार इति प्रख्याप्यते पुरावृत्तवेदिभिः। सोऽयं सम्वत्सर प्रवर्त्तको विक्रमो न वेति नास्मद्विचार्यम्।

अत्र च सार्द्धचतुःशतवर्षान्तः पञ्चशतवर्षान्तर्वा विक्रमा-दित्यवंश्येषु भारतं शासत्सु पुनरपि समुद्भासते स्म म्लान-ज्योतिरपि भारतीयज्ञानसमृद्धिः। अत्रैव खल्वाविर्वभूवुर्वि-क्रमकाले कालिदासामरसिंह-वररुचि वराहमिहिराद्या विद्वांसः, ततश्च परं क्रमेण दण्डि-बाणभट्ट-भवभूत्याद्यः केचन कवयः आर्यभट्ट-ब्रह्मगुप्तादयो ज्योतिर्विदश्च। स च भगवान् शङ्कराचार्योऽपि खीस्तीयनवमशतके प्रादुर्भूतः एतत्काला-भ्यन्तरीण एव। आयुर्वेदे च एतत्समयान्तरेव प्रादुरासीद् वाग्भटाचार्यो नाम अष्टाङ्गवैद्यकसंग्रहीता, वृन्दमाधवादयश्चा-परे संग्रहकाराः, जेज्जट-गयदास-भास्कर-ब्रह्मदेवाद्या वैद्यक-व्याख्यातारश्च। चक्रपाणिदत्तस्तु वङ्गेषु नयपालनृपतेः प्रियभि-षगासीदिति तदुक्त्या ज्ञायते, नयपालकालश्च खीस्तीय १०४०—१०६० वर्षाणि। तस्माद् भारतीयविद्यानां पुन-रभ्युदयकालस्य शेषतः प्रादुरासीद् वैद्यकाचार्यश्चक्रपाणिः। डल्लनाख्यः सुप्रसिद्धसुश्रुतटीकाकारश्च चक्रपाणेः समकालीनः किञ्चित्पूर्वतनो वा।

मालवराज्याधिपो नानाशास्त्ररसिकः प्रसिद्धतमो भोज-नरपतिश्च एतत्कालान्ते खृ० १००६ अब्दे सम्बभूवेत्यै-तिहासिकाः। मालवदेशश्च विन्ध्याद्रिश्रेणिरक्षितो नाभूद् महम्मदीयाक्रमणविषयस्तदानीम्।

अथ पुनर्भारतीयानां मन्दभाग्यवशात् प्रववृते महम्मदी-यानां घोराक्रमणप्रवाहः। तत्राद्यमाक्रमणं महम्मद-बिन्-कासिम-कृतं सिन्धुदेशेषु ( खी० ७१२ वर्षे श्रूयते। ततः परं यदा एकादशशतके गान्धारप्रान्तीयाद् गज्‌निनगराद् गतेन दुर्द्धर्षेण महम्मुदाख्येन पापिष्ठेन बहुसहस्रदुराचारसैनिक-सहायेन पुनः पुनराक्रम्य लुण्ठिताः सोमनाथपत्तनादिषु भारतीयसम्पदः, कुट्टितास्तीर्थस्थानेषु देवमूर्त्तयः, व्यापादिताः सहस्रशो ब्राह्मणाः, निर्दग्धाश्च प्रतिदिनं शतशो गृहाः, तदा सर्वथा धनजनधर्मरक्षणव्याकुलैः परित्यक्तो नवीनज्ञानार्ज्जन-प्रयत्नो लोकैः। न विद्मः—कियन्ति नाम तदा ततः प्रभृति च भस्मीभूतानि लुप्तावशिष्टानि प्राचीनग्रन्थरत्नानि!!

ततोऽनुपदमेव सुघोरकर्मणा घोराख्येन महम्मदेन स्वदेश-द्रोहिणो जयचन्द्राख्यस्य कान्यकुब्जाधिपस्य साहाय्या समास्कन्द्य पातिता क्षत्रकुलसूर्यस्य देहलीपतेर्महाराजपृथ्वी-राजस्य राज्यश्रीः (खीस्तीय० ११९१)। देहलीराजधान्याः

छायापि तत्कीर्त्तिस्तम्भमन्दिर-भग्नावशेषास्तत्तत्कुकृत्यसाक्षि-भूताः । ततश्च दशवर्षाभ्यन्तरत एव महम्मदीयैर्दुर्दैवैर्निर्जिता समया आर्यावर्त्तभूमिर्मालव-दाक्षिणात्यवर्जम् । मालव-दक्षिणात्ययोस्तु 'अल्तामास' इत्याख्येनतद्दासपुत्रेण, 'अलाउद्दीन' इत्याख्येन च तत्परवर्तिना महम्मदीयेन खीस्तीयत्रयोदशशतकेऽभूदाक्रमणम् । तयोश्च कुकृत्यशतैर्भारतदक्षिणार्द्धस्था अपि विध्वस्तप्रायाः प्रायेण सर्वा एवाऽर्यकीर्त्तयः । उज्जयिनीस्थानि महाकालमन्दिरादीनि तु—अल्तामास इत्यनेनैव विध्वस्तानि ।

वङ्गेषु तु महम्मदीयाक्रमणाद् दूरतरं स्थितेषु, खीस्तीयसप्तमशतके वा निदानसंग्रहकार इन्दुकरात्मजो माधवस्ततश्च परम् एकादशशतके चक्रपाणिर्नाम नयपालराजस्य वैद्यवरः प्रादुर्बभूव । ततो द्वादशशतके त्रयोदशशतके वा किञ्चित् प्रवृत्तेऽपि मुसल्मानाक्रमणे विजयरक्षित—श्रीकण्ठदत्ताभ्यां टीकाकाराभ्यां पुनरपि किञ्चित् समुद्दीपितं वैद्यकज्योतिः । तयोश्चान्तिके तदानीमप्यासन्ननेके प्राचीनवैद्यकग्रन्था इति तदुद्धृतप्रमाणशतैरनुमीयते । ततश्च हन्त महम्मदीयैः कपटनीत्या निर्जिता वङ्गराजलक्ष्मीरपि ।

ततश्चत्रयोदशशतकमध्यभागे 'चेङ्गिज्खान्' इत्याख्येन मुगलजातीयमहादस्युना पुनरपि विलुण्ठिता भारतीयाः सम्पद आ-हिमाद्रिमध्यदेशपर्यन्तम् । नृशंसाधमेन च तेन बहुलक्षनरघातकेनानुष्ठितान्यतिघोराणि कुकृत्यानि । ततः परावृत्तेऽपि चेङ्गिज्खानाख्ये मुगले पुनः पुनः समागतैर्मुगलैः सह पाठाननरपतीनां प्रावर्तत चिराय दारुणा रणलीला बहुजनपदध्वंसिनी । अन्तरा च 'तैमूरलङ्ग'ख्यो घोरकर्म्मा मुगलदस्युराजः खीस्तीयचतुर्दशशतकान्ते समापतितो मासद्वयं यावदप्रतिहतप्रसरो लक्षशः प्रजा विनिहत्य, प्रज्वाल्य च तद्गृहान् विलुण्ठ्य च तत्समृद्धीः समग्रमार्यावर्त्तं हाहाकारमयमकरोत् ।

दाक्षिणात्येत्वेवंविधेऽपि समये वीरबुक्को नामाऽभून्महाविक्रान्तो नरपतिर्येन विजयनगरराज्यमधितिष्ठता न केवलं सुरक्षिता दाक्षिणात्यराज्यश्रीरेव किन्तु भगवता मत्स्यावतारेणेव समुद्धृता व्याख्यापिताश्च वेदाः स्वसभासदः सायणमाधवादीन् प्रोत्साह्य । शार्ङ्गधरो नाम स्वसंहिताख्यवैद्यकसंग्रहकारश्च दाक्षिणात्ये एतत्कालाभ्यन्तर एव समभूदिति शार्ङ्गधरपद्धत्यां निर्दिष्टेन कालेन ( सं० १४२० ) प्रतीयते ।

अथ षोडशशतकारम्भे बाबराख्येन मुगलराजेन विजितेषु पाठानराजकेषु मुगलराज्याधिकारः प्रववृते । ततः कतिपयवर्षाणि बाबरपुत्रो हुमायूनो दिग्विजयविप्लवं समारेभे, शेरशाह इत्यनेन वङ्गेषु पराजितोऽसौ क्रमादपहृतसिंहासनश्चाभूत् । अन्तरा च मुगल-पाठानानां सुदुर्द्धर्षाणां युध्यमानानां संघर्षेण महानभूत् प्रजाविध्वंसः षोड़शवर्षाणि । ततः षोड़शवर्षान्ते पुनर्मुगलराज्यं प्रतिष्ठाप्य उपरते हुमायूने तत्पुत्रः प्रथितनामा अकब्बरशाहाख्यो नरपतिर्बाहुबलेन सिंहासनमध्यास्य विजितवान् प्रायः समग्रमपि भारतं वर्षम् ।

ततः सुप्रतिष्ठितायां शान्तौ नानाविद्यारसिकोऽसौ नरपतिर्बहुधा समादृत्य भारतीयान् विदुषः शास्त्राणि च, "दिल्लीश्वरो वा जगदीश्वरो वेति" महतीं यशोगाथामर्ज्जयाञ्चकार । ईदृशे च समयेऽभूवन् तानसेनाद्या भारतीयसङ्गीताचार्या, टोडरमल्लाद्या राजनीतिकोविदाः, अपरे च केचिन्नानाशास्त्ररसिका विद्वांसः । अस्मिन्नेव च काले षोड़शशतकपरार्द्धे वा कान्यकुब्जेषु प्रादुर्बभूव भावमिश्राख्यः प्रसिद्धवैद्यकसंग्रहकारः ।

ततोऽकब्बरशाहानन्तरं तत्पुत्रे जहाङ्गीरबादशाहे राज्यं भुक्त्वा उपरते जहाङ्गीरपुत्रो शाहजहान् नरपतिर्भारतसाम्राज्यं बुभुजे । स चासौ देहलीदुर्ग-ताजमहलादिनिरमापयत् स्थापत्यादिनानाकलाप्रियः सुप्रसिद्धकीर्तिरद्यापि । तद्राज्यकाले च भट्टोजिदीक्षित-जगन्नाथपण्डितराजादीनां, समनन्तरञ्च नागेशभट्टादीनां प्रादुर्भाव इत्यैतिहासिकाः ।

ततः अवरङ्गजेवनामा शाहजहानस्य कनिष्ठपुत्रः कपटशतेन स्थविरं पितरमवरुध्य भ्रातॄंश्च हत्वा राज्यमधिचक्रमे । ततश्च पुनः प्रावर्त्तत यतस्ततः सुमहानार्य्यकीर्तिध्वंससंरम्भः । तेन हि 'हिन्दु'नाम द्वेषिणा विनाऽपि क्रोधकारणं शतशश्चूर्णीकृतानि देवमन्दिराणि, निर्दग्धा सहस्रशो ग्रन्थराशयः व्यापादिताश्च बहुशः स्वधर्म्मनिष्ठाः प्रजा नानाविधमिषशतेन । एवञ्च भूयः कथञ्चिदुज्जीवितप्रायाऽपि शोच्यां दशा-

माजगाम पुनरपि भारतीया विद्यासमृद्धिः । आयुर्वेदश्च यावनवैद्यैर्हतसर्वस्वस्ततः प्रभृति कथञ्चित् प्राणिति स्म ।

सोऽयमायुर्वेदस्य,—अथवा समस्तभारतीयविज्ञानदिनकरस्य—अपराह्णकालः, नूनं वा सन्ध्यारम्भ एव । तादृशे च काले प्राचीनविज्ञानारुणरागसंग्रहणपरा एवाभूवन्नाचार्य्या इत्यपि भागधेयमेव भारतस्य । नवीनविज्ञानाविष्करणी तु प्रतिभा न समुन्मिमेष तादृश्यराज्यविप्लवैकार्णवीभूते भारते इति किमत्र विस्मयपदं नाम ?

एवंविधे च काले महाराष्ट्रवीरैः शिवाजीप्रमुखैः पुनरपि धर्म्मसाम्राज्यस्थापनाय समारब्धः सुमहान् प्रयत्नो लब्धश्च कथञ्चित् साफल्यमपीति चिराय स्मरणार्हम् । परं तत्परवर्त्तिभिर्महाराष्ट्रराजकैः परस्परं विवदमानैः प्रकामं विलुण्ठनपरैश्च निर्मूलिता स्वल्पेनैव कालेन महाराष्ट्रसाम्राज्यस्थापनस्याऽऽशा-लता । तथापि पुण्यश्लोकानां शिवाजी-राजारामादीनां सुकृतप्रभावादद्यापि इन्दौर-बड़ौदा-ग्वालियरादिराज्येषु सावशेषं महाराष्ट्रज्योतिरिति महदिदं हर्षस्थानं भारतीयानाम् ।

अथ दुर्व्विषहपापभाराक्रान्ते मुगलसाम्राज्ये, अवरङ्गजेबराज्यावसाने ( खी० १७०७ ) अतिदुर्बलप्रभावेषु तत्पुत्रपौत्रादिषु पुनरपि 'नादिरशाह' इत्याख्येन महादस्युना नवधा देहलीराजधानीमाक्रम्य महती संहारलीला प्रवर्त्तिता ( खी० १७३९ ) । ततश्च पुनर्नववर्षान्ते 'अहमदशाह अब्दली'— इत्याख्येन दुर्द्धर्षदस्युना चतुर्द्धा विलुण्ठितानि देहलीमथुरादीनि नगराणि, अनुष्ठितानि च पुनःपुनस्तानि तानि गृहदाहादिकुकृत्यानि ।

ततः सदयहृदयेन वेधसा एतावतीभिरत्याचारपरम्पराभिरपि अविनश्यन्तीमिव भारतीयविद्यासमृद्धिमाकलयता तद्रक्षणाय सम्प्रेषिता उदारहृदयाः श्वेतद्वीपपुरुषा ब्रिटिशनामानः । तैश्च वाणिज्यार्थमागतैरपि भारतीयप्रजानां दुर्द्दशाविमोचनार्थमिव क्रमात् वङ्गेषु च दाक्षिणात्ये च राज्यभित्तयो निर्म्मिताः, स्थापितञ्च वर्षशतेन बहुरक्तपातं विनैव सुमहत् साम्राज्यमखिलभारतव्यापि । ततः ( खी० १८५७ वर्ष ) प्राप्तेऽपि सैनिकविद्रोहकृते विप्लवे गुणलुब्धेव राज्यश्रीर्न मुमोच तेषामेवाङ्कारोहणसुखम् । ततः प्रभृति क्रमात् सुप्रतिष्ठायां शान्तौ सुरक्षिते च प्रजालोके, प्रतिदिनमादीप्यते भारतीयं ज्ञानज्योतिः । न च स्वयं सुविमलज्ञानाधिकारिणोऽपि प्रकामं नोत्साहयन्ति राजपुरुषाः सम्प्रति सर्व्वा अपि भारतीया विद्याः—इति सर्व्वथा धन्यवादार्हा एते भारतीयानाम् ।

सोऽयमेतावानतिदारुणोऽपि सम्प्रति प्रायशविधिर्वैद्यकविद्यायाः ( प्रत्युत सर्व्वार्य्यविद्यानां ) ध्वंससमयः । अथेदानीमेतत्कालान्तः प्रादुर्भूतानां वैद्यकाचार्य्याणां कालनिर्णये हेतवः केचिदुपन्यस्यन्ते प्रसङ्गात् संक्षेपेण ।

तत्र चरकदृढबलयोः कालो निर्णीतपूर्वः । वाग्भटश्च दृढबलस्यावरज एव न पूर्वजः, इति निश्चयोऽस्माकम् । यतो वाग्भटेन अष्टाङ्गसंग्रहशेषे दृढबलीयकल्पस्थानमेव गद्यमयेन वचसाऽनूदितं, अष्टाङ्गहृदये "ऋषिप्रणीते प्रीतिश्चेत्" इत्यादिवचनेन स्पष्टं लक्षितञ्च दृढबलकृतं चरकापूरणम् ।

सुश्रुतसंहितायाः प्रतिसंस्कारस्तु चरकसंहितारचनादनन्तरजः प्रतिभाति । दृश्यन्ते ह्यत्र बहुधा चरकीयाः पाठाः, विशयसन्निवेशक्रमश्च साधीयान् । तत्र दिङ्मात्रमुदाह्रियते—

चरके—"सूक्ष्माणि हि दोष-भेषज-देश-काल-बल-शरीराहार-सात्म्य-सत्व-प्रकृति-वयसामवस्थान्तराणि यान्यनुचिन्त्यमानानि विमलविपुलबुद्धेरपि बुद्धिमाकुलीकुर्य्युः किं पुनरल्पबुद्धेः ।" ( च० सूत्र० १९ अ० ) इति । सुश्रुते— "सूक्ष्मा हि द्रव्य-रस-गुण-वीर्य-विपाक-दोष-धातु-मलाशय-मर्म-शिरा-स्नायु-सन्ध्यस्थिगर्भसम्भवद्रव्यसमूहविभागाः । * * ये विचिन्त्यमाना विमलविपुलबुद्धेरपि बुद्धिमाकुलीकुर्य्युः किं पुनरल्पबुद्धेः । (सु० सूत्र० ४ अ०) इति ।" पुनः सुश्रुते कासाधिकारे—"अतिव्यायामभाराध्वयुद्धाश्वगजविग्रहैः" रित्यारभ्य "कुपिताः क्षयजं कासं कुर्य्युर्देहक्षयप्रदम्"—इत्यन्तः सन्दर्भः ( सु० उत्तर० ५२ अ० ) चरकीयकासाधिकाराद् गृहीतः ( च० चिकि० १८ अ० ) । सुश्रुतीय ऋतुचर्याध्यायश्च ( सु० सू० ६ अ० ) चरकीयकालविभागानुवादपुरःसरमारब्धः । सुश्रुतप्रतिसंस्कर्त्ता चासौ न माध्यमिकाचार्य्यो नागार्ज्जुनो भवितुमर्हति तन्नाम्नः प्रसिद्ध-

बौद्धाचार्य्यस्य चरकसमकालीनत्वात् । न हि समकालीनानामाचार्य्याणां वचांसि यथावद् गृह्यन्ते प्रसिद्धैराचार्य्यैर्विनैव तन्नामग्रहणम् । अथासौ कश्चनान्यो बौद्धाचार्य्यो नागार्जुनाख्यः स्वीक्रियते तदवरजः सुश्रुतप्रतिसंस्कर्त्तेति, तथास्तु,—का क्षतिः ?

अथ वाग्भटकालनिर्णये त्रयो हेतव उपलभ्यन्ते । तत्र इत्सिङ्गाख्येन चैनिकपरिव्राजककृतः "अष्टाङ्गवैद्यकसंग्राहको नवीनाचार्य्यः" इत्यादिनिर्द्देशो दर्शितपूर्वः प्रथमो हेतुः । तेन ख्रीस्तीयपञ्चमशतकारम्भे वाग्भटकालोऽस्माभिः स्थापितः । अथ चक्रपाणिडल्लनादिभिः प्रायो वर्षसहस्रपुराणैराचार्य्यैर्वाग्भटपाठोद्धारो द्वितीयो हेतुर्य्येन तत्कालादपि बहुपुराणः ( अन्यूनपञ्चशतवर्षप्राक्तनः ) सम्भाव्यते वाग्भटसमयः । महम्मद-विन्-कासिमकृतं (ख्रीस्तीयाष्टमशतकारम्भे) सिन्धुदेशाक्रमणं तृतीयो हेतुर्येन तत्पूर्वतन एव स्यात् सिन्धुदेशजो वाग्भट इति प्रतीतिः । न हि तदारभ्य प्रवृत्ते सिन्धुराजविप्लवे कथमपि अष्टाङ्गसंग्रहाष्टाङ्गहृदयाख्ययोर्महाग्रन्थयोर्निर्म्माणं सम्भवति नाम । यत्तु अष्टाङ्गसंग्रहकारो वाग्भटः अष्टाङ्गहृदयकाराद् वाग्भटाद् भिन्न इति कस्यचित् पाश्चात्यविदुषो मतम् तत् सर्वथा निर्म्मूलमतिविस्मयकरञ्च नः । ग्रन्थद्वयस्य सर्वत्रैव भाषासादृश्यात्, क्वचिदपि मतभेदस्यादर्शनाच्च । वाग्भटेन हि महान्तं ग्रन्थमष्टाङ्गसंग्रहाख्यं विरचय्य तत्संक्षेपो "हृदयमिव हृदयमेतत्" निरमायीति स्वयमेवाभिहितं तेन सुस्पष्टया गिरा ग्रन्थसमाप्तौ

'रसरत्नसमुच्चय' कारो वाग्भटस्तुबहुपरतनः कश्चन भिन्न एवाचार्य्यस्तुल्यनामा । यतः समुद्रवद् गम्भीरे अष्टाङ्गसंग्रहेऽपि न लभ्यते रसतन्त्रोक्तविषयाणां रससंस्कारादीनां गन्धोऽपि, लभ्यन्ते च समुच्चये प्राचीनवाग्भटापेक्षया भृशमवरजानां सोमदेव-गोविन्दभगवत्पादादीनां ग्रन्थेभ्यः पाठोद्धाराः । तत्र सोमदेवग्रन्थात् समग्रं रसपरिभाषाप्रकरणं गृहीतं रसरत्नसमुच्चये ( र० र० स० ९ अ० ) । गोविन्दभगवत्पादकृताद् रसहृदयतन्त्रात्तु गृहीतानि—"सुकृतफलं तावदिदम्" इत्यादीनि "भ्रूयुगमध्यगतं यत्"—इत्यादीनि च कानिचित् पद्यानि । गोविन्दभगवत्पादाश्च भगवतः शङ्कराचार्य्यस्य गुरव इति प्रसिद्धा एव नान्ये इति सुप्रतिपादितं विद्वद्वरैः श्रीमद् गुरुनाथ त्र्यम्बक काले इत्येतैः रसहृदयोपोद्घाते । न च शंक्यं-कथं तर्हि "सूनुना सिंहगुप्तस्ये"ति रसरत्नसमुच्चयादौ परिचय इति, यतो बहुषु हस्तलिखितग्रन्थेषु "सूनुना सङ्गुप्तस्ये" त्येव पाठः साधीयान् दृश्यते । तेन "सिंहगुप्तस्ये"ति पाठः कस्यचित् पण्डितम्मन्यस्य संशोधनप्रसूतो मन्तव्यः । असौ च रसतान्त्रिको वाग्भटः ख्रीस्तीयत्रयोदशशतके प्रादुरासीदिति डा० प्रफुल्लचन्द्ररायस्य मतं युक्तियुक्तमेव ।

अथ माधवकरो नाम प्रसिद्धवैद्याचार्यो निदानकार इन्दुकरात्मजो वङ्गेषु प्रादुरासीदिति सुप्रथिता किंवदन्ती । कर इत्युपाधिश्चास्य वङ्गीयतां स्फुटं व्यनक्ति । स च वाग्भटादवरजः, निदाने "निदानं पूर्वरूपाणि"—इत्यादि "तत्प्रकोपस्य तु प्रोक्तं विविधाहितसेवनम्"—इत्यन्तस्य समग्रसन्दर्भस्यान्येषाञ्च वाग्भटपद्यानां बहुधा ग्रहणात् । वृन्दचक्रपाण्योः पूर्वजश्च सः, ताभ्यां स्व-स्व-चिकित्सासंग्रहयोः "गदविनिश्चयो" क्तक्रमेण चिकित्सोपदेशात् । चक्रपाणिश्च ख्रीस्तीयैकादशशतकमध्यभागे वङ्गभूमिमलञ्चकारेति सहेतुकमवोचाम, स च वृन्दकृत-"सिद्धयोगा" ख्यग्रन्थमुपजीव्य स्वकीयं चिकित्सासंग्रहं रचयाम्बभूवेति तदुक्त्या चक्रपाणेरन्यूनवर्षशतद्वयेन प्राक्तनः स्याद् वृन्दः । तेनासौ वृन्दाचार्य्यो नवमशतकेऽभूदिति उन्नीयते । माधवश्च तत्पूर्वजः ख्रीस्तीयसप्तमशतके सम्भूवेति सम्भाव्यते । इतश्च अष्टमशतके "हरूण उल् रसीद" समये माधवीयनिदानस्य पारस्यभाषानुवादोऽभूदित्यैतिहासिकवार्त्तयाऽपि तत्पूर्वज एव माधवः पर्य्यवस्यति । तस्माद् वाग्भटपरवर्त्तित्वाच्च सप्तमशतके किञ्चित्पूर्वं वा माधवप्रादुर्भावः सिध्यति । माधवकरश्चासौ रुग्विनिश्चयाख्यनिदानग्रन्थप्रणेता रत्नमालाख्यद्रव्यगुणकारश्चेति प्रसिद्धिः । डल्लनादिनिर्दिष्टः सुश्रुतटिप्पणकारः श्रीमाधवस्तु भिन्न एवस्यात् इति प्रतिभाति, तस्य कुत्रापि माधवकर इति निर्द्देशादर्शनात् ।

सायणापरनामा वेदभाष्यकृन्माधवाचार्य्यस्तु माधवकरात् सर्वथा भिन्नः पूर्वोक्तहेतोः, वर्षपञ्चशत्या तदवरजश्चेति तयोरभेदः कथमपि न शङ्कनीयः ।

डल्हणो नाम सुप्रसिद्धः सुश्रुतव्याख्याता तु चक्रपाणेः समकालीनः समीपकालीनो वेति शक्यं निश्चयेन वक्तुम्, यतोऽसौ सहनपालदेवनृपतेर्वल्लभमात्मानं ख्यापयामास । पालनरपतयः खल्विह भारते ख्रीस्तीयदशमैकादशशतकयोरेव मगधेषु गौड़ेष्वन्यत्र च प्रादुर्बभूवुः । तत्र नयपालनृपतेर्गौड़ाधिपस्य वैद्योऽभूत् चक्रपाणिरिति तदुक्त्या ज्ञायते, तत्पूर्वजस्य "पाल" वंशीयनृपस्य नृपद्वयस्य वा नाम न सम्यङ्निरूपितमद्यापि तदूर्ध्वाधस्तनास्तु नारायणपालाद्यो नरपतयः सुविदितनामान इतिहासविदाम् । तत्स्वर्णकालजाश्च 'गया'-'भागलपुरा' दिस्थानेषु कृतराज्या गोविन्दपालदेव-मदनपालदेवाख्या भूपतयः "पालदेवा" स्तत्संज्ञा इत्यपि सम्प्रत्येवाऽविष्कृतं ताम्रशासनाद्युद्दङ्कनेन । तस्मादुच्यते चक्रपाणेः समकालीनः समीपकालीनो वाऽभूद्डल्हन इति । डल्हन-चक्रपाणिभ्याञ्च लभ्यमानसुश्रुतटीकयोस्तत्प्रणीतयोः क्वचिदपि परस्परस्य नाम न गृहीतं, गृहीतानि तु डल्हनेन जेज्जट-गयदासब्रह्मदेवादीनां नामानि । तस्मादितोऽपि तयोः परस्परप्रतिद्वन्द्विता शङ्क्यते । तदेवं ख्रीस्तीयदशशतकशेषार्द्धे एकादशशतकपूर्वार्द्धे वा समभूद् डल्हन इति नः प्रत्ययः ।

चक्रपाणिकालश्च ख्रीस्तीयैकादशशतकमध्यभाग इति सर्व्ववादिसम्मतः सिद्धान्तः पूर्वोक्तहेतुः ।

विजयरक्षितस्तु निदानटीकामुखे चक्रपाणिनामतो निर्दिदेश, श्रीकण्ठश्च तच्छिष्य एव । कालश्चानयोस्त्रयोदशशतकस्य द्वितीयः पादः, आतङ्कदर्पणाख्य-निदानटीकाकृता वाचस्पतिना त्रयोदशशतकमध्यजेन तन्निर्देशात । कृतश्च विजयरक्षितेन योगरत्नमालाकारस्य गुणाकरस्य मतोद्धारः । योगरत्नमालाकारकालश्च त्रयोदशशतकस्याद्यः पादः,—इत्यपि हेतोः स एव निश्चयः । तदेतत् सर्वं साधु निर्णीतं डा० हर्नलि इत्याख्येन पाश्चात्यविदुषा ।

अरुणदत्ताख्यः प्रसिद्धवाग्भटटीकाकारस्तु त्रयोदशशतकस्य प्रथमे पादे समभूदित्यपि तत्कृत एव निर्णयः ।

शार्ङ्गधरसंहितादिग्रन्थकारः शार्ङ्गधरस्तु चतुर्दशशतकस्य प्रथमार्द्धे प्रादुरासीदिति शार्ङ्गधरपद्धतिप्रस्तावनायां लिखितेन परिचयेन समुन्नेयम् ।

शिवदाससेनो - नाम चक्रसंग्रहस्य चरकसंहितायाश्च प्रसिद्धटीकाकारस्तु अरुणदत्त-श्रीकण्ठदत्तयोरर्वाचीनः, गौड़ावनीपालाश्रितभिषग्वरस्य सुतः, इति कृत्वा वङ्गदेशीयवैद्यब्राह्मणः पञ्चदशशतकीयश्च प्रतीयते । गौड़ावनीपालश्चासौ महम्मदीय एव स्यादिति तत्प्रदत्तपरिचयभङ्ग्या ऐतिहासिकविचारेण च समुन्नेयम् ।

भावमिश्रस्तु शार्ङ्गधरवङ्गसेनयोरवरजः कान्यकुब्जश्च—इत्यत्र नास्ति संशयः, यतोऽसावनयोः पाठानुद्धरति स्वग्रन्थे भावप्रकाशाख्ये, निर्दिशति च परिचयं स्वकीयं तत्रैव । किञ्च तत्र फिरङ्गरोगस्य वर्णनात् षोड़शशतकस्य प्रथमपादार्वाचीनोऽसौ निश्चीयते । फिरङ्गरोगो हि प्रथमं पोर्तुगीजाख्यफिरङ्गीयैस्तस्मिन्नेव काले स्वाङ्गसम्पर्केण भारतीयपण्याङ्गनासु प्रसारितः--इति सुप्रथितेयं वार्त्ता । चोपचीन्यहिफेनादीनां गुणाख्यानञ्चास्य नवीनतां व्यनक्ति ।

वङ्गसेनस्तु शार्ङ्गधरभावमिश्रयोर्मध्यस्थे समये समभूत् । स च वङ्गदेशीय एव संग्रहकारः सेनोपाधिश्चास्य वङ्गीयवैद्यब्राह्मणतां तत्संग्रहस्तु जीर्णप्रतिसंस्कृता अगस्त्यसंहितैवेति स स्वयमेवाह । त एते वैद्यकापराह्णकालसम्भवा अतिप्रसिद्धवैद्यकाचार्य्याः यैः खल्विह संग्रहैकव्रतैः समूहिताः परमयत्नेन हीयमानदीप्तेरायुर्वेदभास्करस्य ज्योतिश्छटाः । राज्यविप्लवसमये च तावदेवाभूत् पर्य्याप्तमित्यकामेनापि स्वीकरणीयं बुद्धिमता । तथाप्यत्र सर्व्वथा विलुप्तप्रायाणि न केवलमसंख्येयप्रायाणि प्राचीनार्षतन्त्राणि किन्तु कायचिकित्सावर्जं सर्वाण्यप्यायुर्वेदाङ्गानीति सशोकं स्मर्त्तव्यं नाम । किञ्चात्र कथं कथमपि भ्रियमाणस्यास्य कायचिकित्साङ्गमात्रस्यापि प्रधानपूर्वाङ्गम्—शारीरविद्या वनौषधिविद्या चेति विद्याद्वयं विलुप्तप्रायमेव । तत्राप्याद्या शारीरविद्या तु साम्प्रतमशरीरिण्येव प्रायः संवृत्तेति हन्त को नाम सहृदयो नात्र दीर्घं निःश्वसिति ? कश्च वा इदानीं समर्थः सम्प्रति सुप्रतिष्ठितशान्तिके देशे विद्योत्साहिषु च महानुभावराजकेषु पुनरपि समग्रभारतशरण्यमिदमायुर्वेदशास्त्रं तया संवर्द्धयितुं न प्रयतेत विपद्येत वा दुर्दैवहतकप्रापितामायुर्वेदस्याऽपूर्णतां परैर्विहस्यमानाम् ?

## पण्डितेभ्यः प्रार्थनम् ।

वाराणसेयाः सुधियः स्वधर्मा-
वने करिष्यन्ति न चेत्प्रयत्नम् ।
सनातनी तर्हि सुनीतिरीतिः
पातालमूलं खलु यास्यतीह ॥ १ ॥
सनातनोऽयं सुखदः स्वधर्मो
ह्रासं व्रजत्याकुलतामुपेत्य ।
वाराणसेयः समुपेक्षते तं
विद्वज्जो हा किमिदं न दुःखम् ॥ २ ॥
सनातनो वृद्धतमो वृषोऽयं
त्रिभिर्विलूनैर्विकलः पदैर्हा ।
वाराणसेयैः समुपेक्ष्यते चेद्
बुधैस्तदा काऽस्य गतिर्भवित्री ॥ ३ ॥
महम्मदीयैर्बहु हन्यमान-
स्तथेशवीयैर्विनिपात्यमानः ।
अन्यैश्च कैश्चित्परिपीड्यमानो
वृद्धो वृषः कं शरणं श्रयेत ॥ ४ ॥
वाराणसेयान्विदुषः शरण्यान्
समाश्रितो वृद्धतमो विपन्नः ।
सनातनः संप्रति धर्म एष
स्वं जीवनं नो विजहाति नूनम् ॥ ५ ॥
सनातनं धर्ममिमं निषेव्य
वाराणसेया विबुधाः प्रतिष्ठाम् ।
लोके लभन्ते यदि तर्हि किन्तैः
सर्वात्मनाऽयं न सुरक्षणीयः ॥ ६ ॥

म० म० देवीप्रसाद शुक्लः कविचक्रवर्ती

## स्थानासनाभ्यां विहरेत् ।

लेखक—श्रीगङ्गानाथ झा शर्म्मा, एम० ए०, डी० लिट्०
महामहोपाध्यायः ।
[ वाइस चान्सलर—प्रयाग—विश्वविद्यालय ] ।

समुद्रयात्राविचारप्रकरणे बौधायनीये धर्म सूत्रे उपलब्धमेतद्वाक्यम्—'समुद्रसंयानम्...... ....एषामन्यतमत् कृत्वा चतुर्थकालामितभोजिनः स्युरपोऽभ्यपेयुः सवनानुकल्पम् । स्थानासनाभ्यां विहरन्त एते त्रिभिर्वर्षैस्तदपहन्ति पापम्' इति । (२।१।४१)।

समुद्रयातुः प्रायश्चित्तमत्रोच्यत इति स्पष्टम् । परन्तु 'स्थानासनाभ्यां विहरन्तः' इत्यस्य कोऽर्थः । वर्षत्रयपर्यन्तं स्थानासनाभ्यामवस्थानं सर्वथाऽसम्भवम् । असम्भवं च प्रायश्चित्तं न कुत्रापि शास्त्रकारैरुपदिष्टम्—इत्येवं सन्दिहानेन मया ग्रन्थान्तरेषु स्थानासनविहारस्य तात्पर्यगवेषणा कृता । समुपलब्धश्चैतादृशः प्रयोगः कतिपयग्रन्थेषु ।

(१) पद्मपुराणे वानप्रस्थधर्मप्रकरणे—'स्थानासनाभ्यां विहरेत न क्वचिद् धैर्यमुत्सृजेत्' इति (आदिखण्डे ५८ । २६)।

(२) याज्ञवल्क्यस्मृतौ (३।५१)—'स्थानासनविहारैर्वा योगाभ्यासेन वा तथा (दिनं नयेत्)' इति ।

अत्र मिताक्षरा—

'स्थानासनरूपैः विहारैः । कश्चित्कालं स्थानं कश्चित्कालमुपवेशनमित्येवं दिनन्नयेत्'—इति ।

मनुस्मृतौ—

( २ । २४८ )—'एतेष्वविद्यमानेषु स्थानासनविहारवान्' इति ।

तत्र मेधातिथिः—

स्थानासन एव विहारः तद्वान् । कदाचित् तिष्ठेत् कदाचिदासीत-एवं विहरेत् । अन्ये तु मन्यन्ते-स्थानाय स्वस्तिकादिना यदासनं ध्यानकाले तत् 'स्थानासनं,' विहारोऽन्यो भिक्षाचरणादिः इति ।

सर्वज्ञनारायणस्तु—

'स्थानम्' ऊर्ध्वावस्थानं नियतं, 'आसनं' उपवेशनं नियमेन, 'विहारो' भ्रमणम्—इत्येतैस्तयो विशेषग्रहणम् ।

( ४ ) पुनर्मनुस्मृतौ—

( ६ । २२ )—'स्थानासनाभ्यां विहरेत्' इति । तत्र मेधातिथिः—'स्थानासनाभ्यां' दिने, रात्रौ तु केवलस्थण्डिलशायितां वक्ष्यति—इति ।

( ५ ) पुनर्मनुस्मृतौ—

( ११ । २२४ )—'स्थानासनाभ्यां विहरेदशक्तोऽधः शयीत वा' इति ।

तत्र मेधातिथिः—

उत्थित आसीन उपविष्टोऽथवा न क्वचिन्निषीदेत् । अशक्तौ अधः शयीत, न पर्यङ्के इति ।

( ६ ) मनुस्मृति द्वितीयाध्यायगत १०२-१०३ श्लोकावधिकृत्य मेधातिथिनोक्तम्—

अत्र स्थानासने एवोपात्ते इति । श्लोकाविमौ च—

पूर्वां सन्ध्यां जपंस्तिष्ठन् नैशमेनो व्यपोहति ।
पश्चिमां तु समासीनो मलं हन्ति दिवाकृतम् ॥
न तिष्ठति तु यः पूर्वां नोपास्ते यस्तु पश्चिमाम् ।
स शूद्रवद् बहिष्कार्यः सर्वस्माद् द्विजकर्मणः ॥ इति

अस्माच्च सन्दर्भाज्ज्ञायते यत् स्थानासनशब्दगतं स्थानं' प्रातस्सन्ध्याङ्गजपपरम् 'आसनं' च सायं सन्ध्याङ्गजपपरमिति ।

गौतमीये धर्मसूत्रे—

( २६ । १ । ६ )—'अथातः कृच्छ्रान् व्याख्यास्यामः ...............तिष्ठेदहनि रात्रावासीत'—इति तत्र च भाष्यम्—'भोजनाद्यविरुद्धेषु कालेषु अहनि तिष्ठेत् रात्रावासीत । एवं च निद्राया अवश्यम्भावित्वात् आसीन एव निद्रां सेवेत—इति ।

( ८ ) विष्णुधर्मसूत्रे—

( ४६ । १ । ४ )—'कृच्छ्राणि भवन्ति । दिवा स्थितस्तिष्ठेत् रात्रावासीनः । कर्मणोऽन्ते पयस्विनीं दद्यात्,—इति ।

( ९ ) वशिष्ठधर्मसूत्रे—

( २५ । ५ )—'व्रतरूपाणि ··· स्थानासनशीलः इति । तत्र टीकाकारः—'स्थान एव आसनं स्थितिः यस्य स वृथा भ्रमणवर्जीत्यर्थः' इति ।

एतेषां वाक्यानां पर्यालोचनया स्थितमेतत् यत् बौधायनोक्तं प्रायश्चित्तं कृच्छ्रव्रतरूपमेव स्थानासनपदेन विवक्षितमिति ।



१. परमगुरवः श्रीराजारामशास्त्रिमहोदयाः



२. महामहोपाध्याय-श्रीबालशास्त्रिमहोदयाः



३. श्रीमदाचार्य-दामोदरलाल गोस्वामिमहोदयाः



४. महामहोपाध्याय-डा० गङ्गानाथझा-महोदयाः

# विवाहसम्बन्धे विचारः ।

लेखकः—

देशपूज्यो महामान्यो श्रीमदनमोहन मालवीय महोदयः



सर्वं प्रदेशीयानां ब्राह्मणानां क्षत्रियाणां वैश्यानां च स्वसमानजातीयैः प्रदेशान्तरीयैः सहोद्वाहसम्बन्धः शास्त्रमर्य्यादामतिवर्त्तते-ऽनुवर्त्तते वेति विचारे सवर्णाविवाहः सर्वासु स्मृतिषु प्रशस्तत्वेन कीर्त्तितः । तथाहि स्मृतिचन्द्रिकायां संस्कारकाण्डे कन्यालक्षणप्रकरणे—" साच (=कन्या च ) सवर्णैव ग्राह्या । यदाह व्यासः—

ज्ञात्वा समुद्वहेत्कन्यां सवर्णां लक्षणान्विताम् ।

मनुरपि "सवर्णाग्रे द्विजातीनां प्रशस्ता दारकर्म्मणि ।"

मिताक्षरायामाचाराध्याये विवाहप्रस्तावेऽपि " सवर्णः श्रोत्रियो वरः ( याज्ञवल्क्यस्मृतौ १, ५५ ) इत्यनेन सवर्णा मुख्या दर्शिता " इति । " सवर्णा पुनः सर्वेषां मुख्या स्थितैव " इति च वर्णितम् ।

सवर्णाग्रे द्विजातीनां प्रशस्ता दारकर्म्मणि ' इति मनुवचने " सवर्णा समानजातीयेति " मेधातिथिव्याख्यानम् ।

कुल्लूकेनापि " ब्राह्मणक्षत्रियवैश्यानां प्रथमे विवाहे कर्त्तव्ये सवर्णा श्रेष्ठा भवतीति " व्याख्यातम् ।

याज्ञवल्क्यस्मृतावाचाराध्याये ५७ तमश्लोकव्याख्यावसरेऽपरार्केण "सवर्णा पुनश्चतुर्थी मुख्या स्थितैवेति" स्वाभिप्रायः सुस्पष्टमाविष्कृतः । अत्र सवर्णायाश्चतुर्थीत्वं युगान्तरेऽसवर्णभार्य्याया अभ्यनुज्ञातत्वेन तदपेक्षया बोध्यम् ।

माधवाचार्य्येण पराशरभाष्ये आचारकाण्डे लिखितम्—

"उद्वहनीया कन्या द्विविधा । सवर्णा चाऽसवर्णा च । तयोराद्या प्रशस्ता । तदाह मनुः—

सवर्णाऽग्रे द्विजातीनां प्रशस्ता दारकर्म्मणि ।

कामतस्तु प्रवृत्तानामिमाः स्युः क्रमशोऽवराः ॥ इति ।

अग्रे स्नातकस्य प्रथमविवाहे । दारकर्मणि अग्निहोत्रादौ धर्मे । सवर्णा वरेण समानो वर्णो ब्राह्मणादिर्यस्याः सा । यथा ब्राह्मणस्य ब्राह्मणी, क्षत्रियस्य क्षत्रिया, वैश्यस्य वैश्या, प्रशस्ता । धर्मार्थमादौ सवर्णामुद्वाह्य पश्चाद्रिरंसवश्चेत्तदा तेषामवराः हीनवर्णाः इमाः क्षत्रियाद्याः क्रमेण भार्य्याः स्मृताः । तथा च याज्ञवल्क्यः—

तिस्रो वर्णानुपूर्व्येण द्वे तथैका यथाक्रमम् ।

ब्राह्मणक्षत्रियविशां भार्य्या स्वा शूद्रजन्मनः ॥ इति ॥

मनुरपि

शूद्रैव भार्य्या शूद्रस्य सा च स्वा च विशः स्मृते ।

ते च स्वा चैव राज्ञः स्युः ताश्च स्वा चाग्रजन्मनः । इति ।

युगभेदेन व्यवस्था च स्मृत्यन्तरे स्पष्टीकृता—

असवर्णासु कन्यासु विवाहश्च द्विजातिभिः । इत्यादिकमनुक्रम्य "कलौ युगेत्विमान् धर्मान् वर्ज्यानाहुर्मनीषिणः । इत्युपसंहारात् ।" इति ।

एवं च कलियुगे असवर्णायाः पाणिग्रहणं प्रतिषिद्धम् तथा सवर्णाया विवाहो निरवद्यत्वेन सर्वथा निर्बाधः । सर्वप्रदेशीयाश्च ब्राह्मणाः परस्परं समानवर्णास्तेषु विभिन्नप्रदेशीयत्वेऽपि सजातीयेभ्यः कन्याया दानं प्रतिग्रहश्च न शास्त्रविरुद्ध इति पर्य्यवस्यति ।

ननु

भार्य्याः सजात्याः सर्वेषां धर्मः प्राथमकल्पिकः ।

इति वीरमित्रोदयधृतयमवचनेन समानजातीया एव विवाह्या इति प्रतीयते ।

सारस्वताः कान्यकुब्जा गौडमैथिलकोत्कलाः ।
पञ्च गौडा इति ख्याता विन्ध्यस्योत्तरवासिनः ॥
कर्णाटाश्चैव तैलङ्गा गुर्जरा राष्ट्रवासिनः ।
अन्ध्राश्च द्राविडाः पञ्च विन्ध्यदक्षिणवासिनः ॥

इति आनन्दभट्टकृतवल्लालचरिते शब्दकल्पद्रुमे वाचस्पत्ये च समुद्धृतायां स्कन्दपुराणीयवचनाभ्यां सारस्वतत्वादयो ब्राह्मणत्वावान्तरजातयः । यथा गोपत्वादयः शूद्रत्वावान्तर जातय इति प्रतिभाति । एवं सति यथा गोपनापितयोः समानेऽपि शूद्रत्वे अवान्तरजातिभेदात् परस्परमुद्वाहसम्बन्धो न भवति तथा सारस्वतकान्यकुब्जादीनामपि ब्राह्मणत्वे समानेऽपि परस्परमवान्तरजातिभेदादुद्वाहो नैव भवितुमर्हति । इदानीन्तनानां शिष्टानां व्यवहारोऽपि तादृशो दृश्यत इति चेत् ।

अत्र समाधीयते—

गोपनापितादीनां सत्यपि समाने शूद्रत्वे जन्मकर्मभ्यामवान्तरजातिभेदः शास्त्रमर्य्यादयाऽवगम्यते । तथाच पराशरः—

शूद्रकन्यासमुत्पन्नो ब्राह्मणेन तु संस्कृतः ।
संस्कारात्तु भवेद्दासः असंस्कारात्तु नापितः ॥
क्षत्रियात् शूद्रकन्यायां समुत्पन्नस्तु यः सुतः ।
स गोपाल इति ज्ञेयः । इति—
( प० स्मृ० प्र० का० ११, २२—२३ )

याज्ञवल्क्याचाराध्याये १, १६६ तमश्लोकव्याख्यानावसरे मिताक्षरायामप्युक्तम् ।

"गोपालो गवां पालनेन यो जीवति । नापितो गृहव्यापारकारयिता ।" इति ।

सारस्वतकान्यकुब्जादीनां ब्राह्मणानां पुनः सरस्वतीतटादिदेशविशेषवासनिबन्धनः संज्ञाविशेषो नतु वास्तवजातिभेदप्रयोजको जन्मकर्मभेदोऽस्ति । सर्वदेशीयानामेव ब्राह्मणानां वात्स्यगौतमवसिष्ठभरद्वाजप्रभृतय ऋषयो वंशप्रवर्त्तकाः समाना एव । तेषां संस्काराश्च समानाः कर्म्माण्यपि यजनयाजनादीनि शास्त्रविहितानि समानानि । एवं च सारस्वतादिषु तेषां पूर्वजानां जन्मदेशद्योतकसंज्ञाभेद एव नावान्तरजातिभेद इति पर्य्यवसितम् । तथाच सर्वदेशीयानां ब्राह्मणादीनां भिन्नदेशीयैः सजातीयैः स्वान्तर्गणाप्रविष्टैः ब्राह्मणोचितपदाचारसंपन्नैः सारस्वतकान्यकुब्जादिभिः शास्त्रोक्तसमानगोत्रप्रवरादिवर्जनपुरःसरं परस्परं विवाहसम्बन्धः सर्वथा धर्मशास्त्रानुमोदित एवेति प्रतिभाति । कालविपर्ययराज्यविपर्ययजन्यदोषैर्पीडिताः द्विजाः स्वल्पकालेन विभिन्नप्रदेशप्राप्तिप्रयोजकानां यानादीनामभावेन च दूरदेशेषु सम्बन्धं नाचरन्ति स्म । तदनुसारेण गतानुगतिकन्यायेनाद्युनातना अपि सारस्वतकान्यकुब्जादयो ब्राह्मणाः परस्परं परिणयनसम्बन्धं नैव कुर्वन्तीति न तेन—

"स्नात्वा समुद्वहेत्कन्यां सवर्णां लक्षणान्विताम्"
"उद्वहेत द्विजो भार्यां सवर्णां लक्षणान्विताम्"

इत्यादि विधिवाक्यस्थं सवर्णापदं सङ्कोचमर्हति । सङ्कोचानुकूलश्रुतिस्मृत्योरभावे व्यवहारस्य निर्मूलत्वेन तेन विधिसङ्कोचस्यान्याय्यत्वात् । श्रुतिस्मृत्यविरोध एव शिष्टाचारः प्रमाणं नान्यथा । यदुक्तं भट्टपादैस्तन्त्रवार्त्तिके शिष्टाचाराधिकरणे ।

शिष्टं यावत् श्रुतिस्मृत्योस्तेन यत्र विरुध्यते ।
तच्छिष्टाचरणं धर्मे प्रमाणत्वेन गम्यते ॥
यदि शिष्टस्य कोपः स्याद्विरुध्येत प्रमाणता । इति ।

ईदृश्यां स्थितावपि "समानशीलव्यसनेषु" इति न्यायेन स्वसदृशाचारेष्वेव कुलादिषु कृतः परिणयादिसम्बन्धः सुखोदर्को भवतीति स्वानुकूलसांचारादिकं सम्यगनुसन्धाय सम्बन्धो विधेयः । यद्यपि सारस्वतकान्यकुब्जादीनां ब्राह्मणानां देशान्तरीयैर्ब्राह्मणैरुद्वाहसम्बन्धः कर्त्तव्य एवेति नियमो नास्ति हेत्वभावात् तथापि येभ्य एतादृशः सम्बन्धो रोचते तैरीदृशि सम्बन्धे कृतेऽपि मुनिवचनविरोधो न भवतीति प्रतिभाति ।

# कामशास्त्रीयो ग्रन्थविस्तरः ।

ले०—रामचन्द्रशास्त्री, कुशलः ।

[ कामस्य स्वरूपादिनिरूपणं "कामः" इति शीर्षकेण निबन्धेन प्राक् कस्मिश्चित् सुप्रभाताङ्के विहितम् । साम्प्रतं कामशास्त्रीयं ग्रन्थविस्तरमधिकृत्य किञ्चिल्लिख्यते ।]

इतरसूक्ष्मविषयाणामिव कामस्यापि यादृक् सूक्ष्मं विशकलनं गम्भीरं मननं च नः पूर्वैरात्मविदां वरिष्ठैर्महर्षिभिः कृतम्, न तादृगब्धिधरणिमण्डलं केनापि कर्तुं पार्यते । आर्यशास्त्रकारैर्य एव विषयो विवेक्तुमुपात्तः स तथा निपुणं गम्भीरं विशदं चाऽनुसंहितो यथा स्वतन्त्रशास्त्ररूपतां गमितः । "कन्दुकतन्त्रम्" अत्र रमणीयं निदर्शनम् । केवलं कन्दुकक्रीडनमधिकृत्य तद्भेदप्रभेद—तत्प्रयोग परिपाटीप्रभृतेस्तथा वैशद्येन परिकल्पना कृता ; यथा कन्दुकतन्त्राख्यं पृथगेव शास्त्रं सम्पन्नम् । कामस्तु पुरुषार्थान्यतमः इति तन्निरूपण-परिकल्पनायाः शास्त्रत्वं सुव्यवस्थितमेव । तदिदं कामशास्त्रमपि पुरुषार्थप्रतिपादकतया धर्मशास्त्रादीतरशास्त्रसमकक्षम् । नह्येतज्ज्ञानमन्तरेण कामाख्यतृतीयपुरुषार्थसार्थकीकरणं संभवि ।

अतएव आदौ तावत् सकलज्ञानविज्ञाननिधिना भगवता वेदेनैव जगतां हिताय कामशास्त्रीयो विषयः सूत्ररूपेण प्रकटीकृतः । तथाहि—

"कामस्तदग्रे समवर्तताधिमनसो रेतः प्रथमं यदासीत् ।" "स तपस्तप्त्वा मैथुनमैच्छत्" "सोऽनुवीक्ष्य नाऽन्यदात्मनोऽपश्यत् । स वै नैव रेमे । तस्मादेकाकी न रमते । स द्वितीयमैच्छत् । सहैतावानास यथा स्त्रीपुमांसौ संपरिष्वक्तौ । स इममेवात्मानं द्वेधाऽपातयत् । ततः पतिश्च पत्नी चाऽभवताम् । तस्मादिदमर्धबृगलमिव स्व इति ह स्माह याज्ञवल्क्यः । तस्मादयमाकाशः स्त्रिया पूर्यत एव तां समभवत्ततो मनुष्या अजायन्त ।" ( बृहदा० उप० )

" उपोप मे परामृश मा मे दभ्राणि मन्यथाः । सर्वाऽहमस्मि लोमशा गान्धारीणामिवाविका ॥"

"जायेव पत्य उशती सुवासाः ।"
यस्यामुशन्तः प्रहराम शेफम् ॥" ( ऋग्वेद )

" योषा वाव गौतमाग्निस्तस्या उपस्थ एव समिद् यदुपमन्त्रयते स धूमो योनिरर्चिर्यदन्तः करोति तेऽङ्गारा अभिनन्दाः स्फुलिङ्गाः ॥ तस्मिन्नेतस्मिन्नग्नौ देवा रेतो जुह्वति ।" ( छान्दोग्योपनिषद् )

" योनिरुदूखलं…शिश्नं मुसलम् ।"

"अरत्निमात्राद्धि वृषा योषामुपशेते ॥"

"पश्चाद्वै परीत्य वृषा योषामधिद्रवति तस्यां रेतः सिञ्चति ।" ( शतपथ ब्राह्मणे )

"तस्मात् पुमान् दक्षिणतो योषामुपशेते ।"

—जैम० उप

"ता उभौ चतुरः पदः संप्रसारयाव स्वर्गे लोके
प्रोर्णुवाथां वृषा वाजी रेतोधा रेतो दधातु"

इत्यादि ( यजु० २३।२० )

ततो भगवन्तं वेदमुपजीव्य प्रजापतिना ; तमनु नन्दिश्वेतकेतुबाभ्रव्यादिभिराचार्यैः साक्षात्कृतसूक्ष्मातिसूक्ष्मतत्त्वैः सुपरिकल्प्य प्रोक्तं 'कामशास्त्रम्' सुबृहच्छास्त्ररूपतां प्राप्तम् । तदेव कालक्रमेणा-

स्सन्नकल्पतां गतं दृष्ट्वा मल्लनागाख्यो * वात्स्यायनमुनिः संक्षेपेण सप्तभिरधिकरणैः प्रति संस्कृतवान्। ततस्तदुपजीव्य तदा तदोपलभ्यमानानितरप्रबन्धांश्चाश्रित्य विद्वद्भिः परःशताः कामागमग्रन्था निरमीयन्त। तत्र इतरशास्त्राणामिव कामशास्त्रस्यापि भूयांसः प्रबन्धाः करालकालकवलं प्राप्ताः। अवशिष्टाः प्रकाशिताः, अप्रकाशिताः, (तत्तद्ग्रन्थेषु नामग्राहमुदाहृताश्च) ये उपलभ्यन्ते, तेषां नामानि अधस्तात् प्रकाश्यन्ते-

(१) कामसूत्रम्—श्रीवात्स्यायनमुनिकृतम्, अयत्वे सकलकामागमस्य मूलभूतं मौलिभूतञ्च।

अनूदितमिदं यूरोपीयभाषास्वपि। अस्य यशोधरकृता जयमङ्गला भास्करनृसिंहकृता वृत्तिश्चेति टीकाद्वयं वर्तते।

(२) रतिरहस्यम्—श्रीकोक्कोकपण्डितकृतम्, श्रीकाञ्चिनाथकृतरतिरहस्य-दीपिका टीकायुतम्, रामचन्द्रसुधेन्द्रकृतरतिरहस्य-प्रकाशिकाटीकायुतं च। कामसूत्रादनन्तरमस्य स्थानम्। भारतीयकामागमसाहित्ये द्वितीयं पदमलङ्करोति ग्रन्थरत्नमिदम्। एतत्कर्तुः—श्रीकोक्कोकपण्डितस्यैव नाम्ना साधारणजनेषु कामशास्त्रस्य "कोकशास्त्रम्" इति संज्ञा प्रचारमापन्ना। यूरोपीयभाषास्वप्यस्यानुवादो जातः।

(३) नागरसर्वस्वम्—बौद्धभिक्षुणा श्रीपद्मश्रिया विरचितम्, अनेकैः कामसूत्रादिष्वनुपलभ्यमानैर्विषयैरनुगतम्, नेपालराज-श्रीजगज्ज्योतिर्मल्ल-कृतटीकया, श्रीतनुसुखरामत्रिपाठिकृतटिप्पण्या च सहितम्।

(४) पञ्चसायकः—श्रीज्योतिरीश्वरकविशेखरविरचितः। अस्याप्येका "पञ्चसायकविवृति" नाम्नी टीका विद्यते।

(५) अनङ्गरङ्गः—श्रीकल्याणमल्लकृतः। अस्यापीङ्ग्लिशभाषायामनुवादो जातः।

(६) शृङ्गारदीपिका—श्रीहरिहरकृता रतिरहस्यापराख्या (अन्तिमपरिच्छेदद्वयमपहाय सम्पूर्णा मुद्रिता)।

(७) रतिशास्त्रम्—श्रीनागार्जुनकृतम्।

(८) रतिमञ्जरी—श्रीजयदेवकृता।

(९) कन्दर्पचूडामणिः—श्रीवीरभद्रदेवनृपतिकृतः (अयं श्रीरीवांनरेशाज्ञया १६०८ ख्रिस्ताब्दे भाषानुवादसहितः प्रकाशितोऽभूत)। अस्यैकं संस्करणं (मूलमात्रं) बम्बईतः "आयुर्वेदग्रन्थमालायाम्" प्रकाशितम्, अपरंच मोतीलाल बनारसीदास (पञ्जाब-संस्कृत-पुस्तकालय, सैदमिट्ठा बाजार, लाहौर) इत्यतयोरनुरोधात् विस्तृतटिप्पण्या सहितं मया संपादितम्।

(१०) रतिरत्न—प्रदीपिका—मैसूरराजश्रीदेवराजकृता।

*मल्लनाग इति सांस्कारिकी संज्ञा, वात्स्यायन इति गोत्रनाम। "कामसूत्रविन्यास इव मल्लनागघटितः" इति वासवदत्तायां विन्ध्यगिरिवर्णने श्लेषः। "मल्लनागेन मुनिविशेषेण पक्षे गजविशेषेण, घटितो रचितो युक्तश्च। "मल्लनागोऽभ्रमातङ्गे वात्स्यायनमुनावपि" इति विश्वः।" इति दर्पणाख्यायां तट्टीकायां शिवरामः।

(११) कुट्टिनीमतम्—श्रीदामोदरगुप्तकृतम् ।

(१२) समयमातृका—क्षेमेन्द्रकृता ।

(१३) धूर्तविटसंवादः—( भाणः ) श्रीमदीश्वरदत्त-प्रणीतः । उल्लिखिताः सर्वे ग्रन्था मुद्रिताः । तत्रान्ते निर्दिष्टं ग्रन्थत्रयं ( श्रव्य-दृश्य ) काव्यरूपमपि कामशास्त्रीयमेव विषयं विशदीकरोतीति कामशास्त्रस्यैवान्तःपाति ।

साम्प्रतं ये ग्रन्था अधोनिर्दिश्यन्ते येऽद्यावधि मुद्रणं न प्राप्ताः (तत्रापि केचित्सम्पूर्णा उपलभ्यन्ते, केचित् खण्डिताः, केचिच्च कतिपयपत्रावशेषा एव ), ये च तत्तद्ग्रन्थेषु प्रमाणत्वेन धृता अपि साम्प्रतं नोपलभ्यन्ते—

( १४ ) अनङ्गतिलकम्—( अज्ञात-कर्तृनामकम् ) ।

( १५ ) अनङ्गदीपिका (कर्तृनाम न ज्ञायते) । ग्रन्थस्यास्य एका हस्तलिपिः श्रीराजेन्द्रलालमित्रेणोपलब्धाऽभूत् (Bikaner Selection 531).

( १६ ) अनङ्गशेखरः ।

( १७ ) कामसमूहः—अनन्तकविकृतः, नागरसर्वस्वटिप्पण्यामुदाहृतः ।

( १८ ) कलावादतन्त्रम्—श्रीगौरीकान्तसार्वभौमकृतटीकोपेतम् ।

( १९ ) कलाशास्त्रम्—श्रीकोक्कोककृतम् ।

( २० ) कामप्रकाशः ।

( २१ ) कामप्रदीपः—श्रीगुणाकरकृतः ।

( २२ ) कामप्रबोधः—एतन्नामकं पुस्तकद्वयमस्ति एकं बहरामपुरीयबाबूराधिकाप्रसादसेनसकाशात् अपरं च बीकानेरपुस्तक संग्रहात् ( Bik. 532 ) श्रीराजेन्द्रलालमित्रेण लब्धम् । तत्राद्यं पुस्तकं श्रीमहाराजानूपसिंहधर्मपत्न्या रचितमाख्यायते । "इति श्रीमन्महाराजाधिराज श्रीमहाराजाऽनूपसिंहदेवीये कामप्रबोधे वाह्यसम्भोगप्रकारविवेको नाम नवमः प्रकाशः । ग्रन्थोऽयं पूर्तिमगात् । संवत् १७९२ । माघमासः ।" इति तत्समाप्तौ लेखो दृश्यते । द्वितीयस्य तु कर्तृप्रभृति न ज्ञायते ।

(२३) कामसारः—कामदेव कृतः, केवलं सप्तपत्रात्मकः । रतिकल्लोलिन्यां मनोजनिमनोभूप्रभृति शब्दैरुक्तः कामदेवः अयमेव वा अन्यो वेति न निश्चयः ।

(२४) कौतुकमञ्जरी ( नवीनाचरितकथनम् )—अस्यैका अत्यशुद्धा वङ्गाक्षरलिखिता १०६ श्लोकात्मिका हस्तलिपिः श्रीराजेन्द्रलालमित्रेण लब्धाऽभूत् । कर्तृनाम नोपलभ्यते ।

(२५) पद्यमुक्तावली—श्रीघासीरामेण स्वीये रसचन्द्रे उदाहृतेयम् । अत्र कामशास्त्रसम्बद्धान्येव पद्यानि वर्तन्ते ।

(२६) मदनसञ्जीविनी ।

(२७) मदनार्णवः—अज्ञातकर्तृनामकश्रीराजेन्द्रलालमित्रेण बीकानेरपुस्तकालये लब्धोऽभूत् ।

(२८) मदनोदयः—कुट्टनीमतकृता १२३ आर्यायामुदाहृतः, कन्दर्पचूडामणिकृता च ( १।२।१५ )··· मदनोदय इत्थमाम्नातम्, इति प्रमाणत्वेनोपन्यस्तः । समनन्तरमेव च "श्रीमल्लक्ष्मणदेवः कथयति

तत्रैव न च वैशिष्ट्यम् ।" इत्युक्त्या श्रीमल्लदमणादेव एवैतत्कर्ता भवेत् । अस्मात् समुद्धृत एकः श्लोको राघवभट्टेन शाकुन्तलटीकायाम् ( १।२६ ) ।

(२९) रतिरहस्यम्—श्रीविद्याधरकविकृतम् । अत्र ६४ पत्राणि १००० श्लोकाः सन्ति । दृश्यतामस्योल्लेखः—"Oudh VIII, २०" इत्यत्र ।

(३०) रतिरहस्यम्—शृङ्गारदीपिकापराख्यम्, श्री हरिहरकृतम् । प्रथमः परिच्छेदः पूर्णः द्वितीयस्य केवलं ५६ श्लोका उपलभ्यन्ते, अस्यानेकाः टीकाः सन्ति ।

(३१) रतिरहस्यटीका । (Appert 6, 160) ।

(३२) रतिरहस्यव्याख्या—रामचन्द्रसूरिकृता ।

(३३) रतिविलासः—" तल्लिङ्गैरतिविलासमतोऽभिधास्ये " इति मङ्खकोशे उक्तः ।

(३४) रतिसङ्ग्रहव्याख्या—(Appert 2777) ।

(३५) रतिसर्वस्वम्—अस्य ।

"एकधारावधिर्यामो रतस्य परमो मतः ।
चराऽशक्तिमतोर्यूनोरुद्भटक्रमवर्तिनोः ॥"

इति श्लोको मेघदूत व्याख्यायां श्रीमल्लिनाथेनोद्धृतः

(३६) रतिसारः—३७ पृष्ठात्मकः, ४०० श्लोकात्मकश्च ।

(३७) वाजीकरणतन्त्रम् ।

(३८) वात्स्यायन सूत्रसारः—श्रीक्षेमेन्द्रेण विरचितः, यस्याधोनिर्दिष्टः श्लोकस्तेनैव स्वकृतायाम् 'औचित्यविचारचर्चायामुद्धृतः—

"कामः कामं कमलवदनानेत्रपर्यन्तवासी
दासीभूतत्रिभुवनजनः प्रीतये जायतां वः ।
दग्धस्यापि त्रिपुररिपुणा सर्वलोकस्पृहार्हा
यस्याधिक्यं रुचिरतितरामङ्गनस्यैव याता ॥" इति ।

(३९) वेश्याङ्गनाकल्पः—(Appert 6220)

(४०) वेश्याङ्गनावृत्तिः ।

(४१ शृङ्गारपद्धतिः—शार्ङ्गधरकृता ( बीकानेर पुस्तकालये ५३४ ) ( इयं शार्ङ्गधरपद्धतिरथैव शृङ्गारपद्धतिर्भवेत् ) ।

(४२) शृङ्गाररसप्रदीपः ।

(४३) शृङ्गारमञ्जरी—तैलगूलिप्यां १०० पृष्ठात्मिका तंजोरराजस्य शाहजीनाम्नः शासनकाले ( वैक्रम १८ शताब्द्याम् ) निर्मिता ।

(४४) शृङ्गारसारिणी—श्रीचित्रधरकृता ।

(४५) समर ( S ) कामदीपिका—विष्णुवंगिरः कृता, ३०० श्लोकात्मिका ।

(४६) सुरतोत्सवकामशास्त्रम् ।

(४७) स्त्रीविलापः—देवेश्वरकृतः १५५ पृष्ठात्मकः ।

(४८) स्मरतत्त्वप्रकाशिका—(५ श्लोकात्मकस्य समरतत्त्वाख्यपुस्तकस्य टीका ) रेवणाराध्यकृता ।

(४९) स्मरदीपिका—रुद्रकृता, नागरसर्वस्वटिप्पण्यामुदाहृता ।

(५०) स्मरदीपिका—गर्गाचार्यमुनिकृता ।

(५१) स्मरदीपिका—मीननाथकृता, नागरसर्वस्वटिप्पण्यामुदाहृता ।

(५२) स्मररहस्यव्याख्या ।

(९३) कामप्राभृतम्--केशवकृतम् ।

(९४) कामानन्दः--वरदार्थकृतः ।

(९५) रतिचन्द्रिका—श्रीहरिहरकृता ।

(९६) रतिदर्पणः—श्रीहरिहरकृतः ।

(९६) पञ्चाङ्गयुद्धप्रपञ्चभाणः—कामशास्त्रीयविषय-वर्णनोपनिबद्धः ।

(९८) रसरत्नाकरः । अस्मात्—

"प्रेमाभिलाषो रागश्च स्नेहः प्रेमा रतिस्तथा ।
शृङ्गारश्चेति सम्भोगः सप्तावस्थः प्रकीर्तितः ॥"

इत्यादि सार्धपद्यत्रयं श्रीमल्लिनाथेन (६।७१) किरातार्जुनीयटीकायामुद्धृतम् ।

(९९) कालिकान्ताकौतुकम् ।

(६०) सन्मथसंहिता—अस्या एका हस्तलिपिः 'डी.ए.वी.कालेज, लाहौर' सम्बद्धानुसन्धानविभाग-पुस्तकालये विद्यते ।

(६१) रसिकजनमनोल्लासिनी ।

(६२) शृङ्गारतिलकभाणः ।

(६३) शृङ्गारामृतलहरी ।

(६४) कामशास्त्रम्—(माधवकृतायुर्वेदप्रकाशस्थः कामशास्त्राध्यायः) ।

(६५) मदनसाम्राज्यभाणः ।

(६६) रसिकसर्वस्वम् ।

(६७) विवेकविलासः—अस्मात्

"पद्मिनी चित्रिणी चैव शङ्खिनी हस्तिनी तथा ।
तत्तदिष्टविधानेनानुकाल्या स्त्री विचक्षणैः ।"

इति श्लोको नित्याचारदीपिकायामुदाहृतः ।

(६८) रतिकल्लोलिनी—सामराजदीक्षितकृता ॥

(६९) दीनालापनिकाशुकसप्ततिः—नागरसर्वस्वटिप्पण्यामुदाहृता । अत्र चतुरशीतिबन्धानां कामशास्त्रीयविषयान्तराणां च विस्तरेण वर्णनमस्ति ।

(७०) पञ्चसायकविवृतिः (पञ्चसायकस्य ज्योतिरीश्वरकृतस्य व्याख्या) ।

(७१) नागरवल्लभः ।

(७२) कादम्बरस्वीकरणसूत्रम् ।

(७३) कादम्बरस्वीकरणकारिका ।

(७४) नर्मकेलिकौतुकसंवादः ।

(७५) कामतन्त्रम्—महेश्वरकृतम् । पञ्चसायके निर्दिष्टम् ।

(७६) रतकरणम् ।

(७७) मदनविनोदः ।

(७८) रतिरञ्जनम् ।

(७९) रतितरङ्गः ।

(८०) भावाकोकसारमञ्जरी—हिन्दीभाषायां दोहादिच्छन्दोरचिता) आनन्दकविकृता । अस्या एका लिपिर्मदीये पुस्तकसंग्रहे वर्तते ।

(८१) विचित्रकाव्यम् सहैदिताहरनाम्ना कविना हिन्दीभाषायां दोहादिच्छन्दोभिरयं ग्रन्थो रचितः ।

अत्र विविधाः कामशास्त्रविषयाः विशदं निरूपिताः सन्ति । अस्यैका हस्तलिपिः कतिपयाग्रपृष्ठरहिता मदीये पुस्तकसंग्रहे वर्त्तते 'या केनापि कस्यापि शिवदत्ताख्यपुरोहितस्यार्थे १७८५ विक्रमाब्दे लिखितेति संवत् "१७८५ वर्षे चैत्र सुदि राम-

नवमः भृगुवासरे वैशाख प्रविष्टे इति लिखितं पुरोहित शिवदत्तार्थम् ।' तत्समाप्तिलेखाज्ज्ञायते ।

( ८२ ) प्रवाणसागराख्यभाषा ( हिन्दी ) काव्यगतं स्त्रीभेदचन्द्रकलाप्रभृतिवर्णनपरं कामशास्त्रीयं प्रकरणम् ।

( ८३ ) कूचिमारसंहिता—इयमपि मुद्रिता अत्र कामशास्त्रीयोपनिषद्‌कप्रकरणसम्बद्धाः केचिद्‌ योगाः सन्ति ।

( ८४ ) गुणपताका—'सत्प्रकृतीनां लक्षणमभिहितमधिकं च गुणपताकायाम् ।' ( ४।७ ) इति,

'उक्तं गुणपताकायामनुरागेङ्गितञ्चयत् ।" (४।२९)
इति च

रतिरहस्ये प्रमाणत्वेनोपन्यस्तम् ।

( ८५ ) कामावतारः—नागरसर्वस्वटिप्पण्यामुदाहृतः ।

एवं नन्दिबाभ्रव्यादिभिराद्यैः प्रोक्तानि कामशास्त्राण्यपि कामसूत्रादिषु तत्र तत्र प्रमाणत्वेनोपन्यस्तानि नाद्यत्वे लभ्यन्ते । तत्र बाभ्रवीयं कामशास्त्रं जयमङ्गलाकारेण दृष्टमिति तेन बाभ्रवीयश्लोकानां जयमङ्गलायाम् ( २।१ ) ( ५।४ उद्धरणात् प्रतीयते । गोनर्दीयं कामशास्त्रं-मल्लिनाथसमये स्थितमिति रघुवंशस्य ( १९।१६, २६,३२ ) कुमारसम्भवस्य ( ७।६५ ) च टीकायां तेन गोनर्दीयश्लोकानामुद्धारणाज् ज्ञायते । ( नारायण पण्डितेनापि कुमारसम्भवविवरणे गोनर्दीयाः श्लोका उदाहृताः सन्ति ) । जयमङ्गलाकारेण वैशिकप्रवक्तुः श्रीदत्तकाचार्यस्य वैशिकसूत्रमपि दृष्टमिति " भाण्डसंप्लवे विशिष्टग्रहणम् इति दत्तकसूत्रस्पष्टार्थं सूत्रान्तरमाह-प्रतिमणिकानामिति । ( ६।३ )" इति तत्कृतेन श्रीदत्तकसूत्रोद्धरणेनावगम्यते ।

"संक्षेपादिति नन्दिकेश्वरमतात्तत्वं किमप्युद्धृतम्, गोणीपुत्रकभाषितोऽयमधुना संक्षिप्यते विस्तरः ॥"
( २।५ )

इति रतिरहस्यकारस्य वचनात् तेन नन्दिप्रोक्तं गोणिकापुत्रीयं च कामशास्त्रं दृष्टम् इति ज्ञायते । अस्मादेव च नन्दिकर्तृककामसूत्रप्रवचनाख्यानं "महादेवानुचरश्च नन्दी..." इत्यादि ( कामसूत्रारम्भे ) काल्पनिकं न वस्तुसदिति केषाञ्चिदुक्तिः परास्ता भवति ।

"दृष्ट्वा मन्मथतन्त्रमीश्वरमतं........श्रीनन्दीश्वर-रन्तिदेवभणितं........तेनाऽक्लृप्यत पञ्चसायक इति प्रीतिप्रदः कामिनाम् ।' इति पञ्चसायककारोक्तिरप्यत्रार्थं प्रमाणम् ।

कामसूत्रनिर्दिष्टान्, रतिरहस्यादितत्तद्ग्रन्थकर्तृतया प्रसिद्धांश्च कामशास्त्रप्रणेतॄनपहाय महेश्वरमवदेवरन्तिदेवपुरूरवोभरतदण्डियोगिराड्बाद्रायणचन्द्रमौलिकात्यायनकर्णीसुतलक्ष्मभागुरिमनोभूकुण्डिभाष्यकारमुनीन्द्रराजपुत्रादयोऽन्ये कामशास्त्रप्रणेतारस्तत्तद्ग्रन्थेषु प्रमाणतया निर्दिष्टाः सन्ति, येषां कृतयोऽद्यत्वे नामतोऽपि न श्रूयन्ते । एषु महेश्वरमुनीन्द्रौ ( ३७ । २ । १-३ ) नागरसर्वस्वे ( अयं मुनीन्द्रो वात्स्यायनाद्भिन्नः ) मूलदेवरन्तिदेव ( १।३ ) चन्द्रमौलयः ( ४।२ ) पञ्चसायके. कात्यायनः सम्पुटकलक्षणे जयमङ्गलायाम्, कर्णीसुतः ( ४।२१ ) रतिरहस्ये, लक्ष्मभागुरिमनोभूभाष्यकारकुण्डिनो रतिकल्लोलिन्याम्, भाष्यकारोऽयं कश्चिद्वात्स्यायनीयकामसूत्रभाष्यकारो वा अन्यकामशास्त्रभाष्यकारो वेति न निश्चयः, राजपुत्रः ( ७७ आर्यायाम् ) कुट्टनीमते ( अयं कस्यचित् कलाशास्त्रग्रन्थस्यापि प्रणेता, स्मृतश्चायं पालकाप्यीये हस्त्यायुर्वेदे ( ३।८।६६ ), अवशिष्टाश्च श्रीदेवीदत्तपराजुलीत्याख्येन काशीमुद्रितस्मरतरहस्यस्य भूमिकायां निर्दिष्टाः सन्ति ।

---

# राजनैतिकी परिस्थितिः ।

( लेखकः—श्रीयज्ञनारायण उपाध्यायः एम. ए., एल्-एल्. बी., एल्. टी., काव्यतीर्थः )



संसारोऽयं कीदृग्विचित्राभिनयशाला, यत्र काले काले नैकानि नाटकान्यभिनीतानि । तस्यावस्था एकरूपेण न तिष्ठति । ह्यो राजनीतेरेकं रूपमद्य अपरं रूपम् । समस्तस्य भूमण्डलस्य कथा तु दूरमास्ताम्, केवलस्य भारतस्य शासनव्यवस्थायां यदि सिंहावलोकनं कुर्मः, तथापि विस्मयान्न विमुच्यामहे ।

प्राचीनतमसमये यदा कापि व्यवस्थानासीत् तदा वलिनो दुर्वलान् वाधेरन्नेव । सर्वे मनुष्याः स्वच्छन्दतया स्वाभिमतं कार्यं कुर्वन्त एव स्युः । न्यायशासनादीनामुत्तरदायित्वं कस्यापि शिरसि न निक्षिप्तं भवेत् । तस्यामवस्थायां वलिभिर्बाध्यमाना दुर्वला आत्मरक्षार्थं स्वीयसमाजरक्षार्थं च कमपि बुद्धिवलशालिनं स्वनायकं ध्रुवमाश्रयेयुः । पुरा आर्यावर्त्तप्रदेशे, आर्या ये भूतले सर्व प्रथमसभ्या भवन्ति, तेषु प्रथमम् इयं प्रथा प्रचचाल, यत् कुटुम्बस्य एकैके पुरुषास्तदधीश्वरस्य आदेशवशवर्त्तिन आसन् । कुटुम्बेषु शात्रवसौहार्दयोरवस्थितिः स्वाभाविक्येव । अतएव आवश्यकतायामुपस्थितायां वहवः कुटुम्बिनः प्रवलेन केनचिदेकेन स्थानान्तरवासिना रिपुणा पीड्यमानाः परस्परं संघस्य अभिषेणयन्तिस्म । इदमेव ग्रामसंघटनस्यापि वीजं भवितुमर्हति । गच्छता च कियता कालेन शासनसुव्यवस्थासम्पत्तये कंचन वलवुद्धिशालिनं नायकं निश्चिक्युरेव । सहकारावश्यकतायां केचन मन्त्रिणोऽपि नियुक्ताः । विभागानां वाहुल्याद्व वहवो विभागाधिपतयोऽप्येवमेव अभूवन् । एवमेव च राजसभा प्रतिदिनमेधमाना प्रजासत्ता च हीयमाना भवेत् ।

रामायण-महाभारत-वौद्धकालीनेतिहासानुशीलनात् राजकीयशासनप्रणाली, तदीया वहवो विभागाश्च अवगम्यन्ते । यवनानां साम्राज्यकाले चलन्ती भारतीया राजव्यवस्था नष्टभ्रष्टैव समभूत्, यतस्ते देशाद्व धनमपहृत्य, मन्दिराणि विनाश्य, धर्ममुपप्लाव्य, पुस्तकालयाँश्च निर्दाह्य, अहर्दिवमस्वास्थ्यमेव चक्रुः ।

यवनानां ह्रासमये च भारतस्य दक्षिणभागे विभागान्तरे च छत्रपतिशिवाजीप्रभृतयो राजानः समभूवन्, तेषां राज्यव्यवस्थापि प्रायेणसमीचीनैवासीत् । किन्तु तेषां राजव्यवस्थावर्णनविस्तराद्व वयमिदानीमुदास्महे । भारतवर्षस्य आन्तरिककल-

हात्तदीयात्यधिकधनधान्यसम्पत्तिलोलुपत्वाच्च बहवः पाश्चात्यसङ्घाः व्यापारमपदिश्य इहाजग्मुः। किन्तु तेषु आंग्ला एव कृतकार्या बभूवुः। खृष्टस्य १८५७तमवर्षात्पूर्वं शासनव्यवस्था संघाधीनैवासीत्। ततो विद्रोहे प्रशमिते व्यक्तोर्जा प्रथमं सम्राट्पदमध्यरोहत्। तदा भारतीय-व्यवस्थासंचालनार्थं सपरिषद् भारतमन्त्री नियोजितः। अनेन क्रमेण एकोनविंशशतकोत्तरार्द्धे प्रशान्ते भारते, शिक्षायां प्रचारितायाम्, शासनसुधारान्दोलने समुज्जृम्भिते, १८८४-तमे संवत्सरे राष्ट्रीयमहासभाऽसर्जि। इदानीं देशे शासनप्रबन्धार्थं राजप्रतिनिधिः, तस्य सहायकाः, यत्र कुत्र कार्यकारिणी समितिः, नाममात्रेण व्यवस्थापकसभा चासीत्। लोकमतग्रहणार्थं कश्चिदपि प्रबन्धो नासीत्। १९०८-तमेऽब्दे व्यवस्थापकसभायाः कियान् संस्कारोऽभूत्, भारतीयानां सदस्यसंख्यापि वर्धिता। तदनन्तरं च योरपीयमहायुद्धावसाने १९१९-तमे वत्सरे भारतराज्यव्यवस्थानियमो रचितः, अथ च भारते बृहतो बृहतः प्रान्तस्य शासनार्थमेको गोवरनरः, तदधीना कार्यकारिणी समितिः, व्यवस्थापकसभा च कृता, यस्यां भारतीयानां संख्या अधिका मतग्रहणप्रबन्धश्च विस्तरेण निर्मितः प्रान्तीयविभागाश्च हस्तान्तरितसुरक्षितरूपेण द्विधा कृताः। संरक्षितविभागे राजकरः, अकालनिवारणम्, राजपुरुषाः, कारागारप्रबन्धादयः, सार्वजनिकस्वास्थ्यम्, शिक्षा, कृषिजीविचिकित्सा, सहकारिसंस्था, राजपथादयः सन्ति। संरक्षितविभागाः कार्यकारिणीसदस्याधीनाः, हस्तान्तरितविभागाश्च मन्त्रिणामधीनाः। प्रत्येकं प्रान्ते च सदस्यानां संख्या नियता। यथा संयुक्तप्रान्ते यवनेतरेषां संख्याः षष्टिः, यवनानां च एकोनत्रिंशत्, पाश्चात्यानामेका, भूस्वामिनां षट्, प्रयागविश्वविद्यालयस्यैका, औद्योगिकसंस्थायाः त्रयः, राजकीयाः षोडश, विशेषश्रेणीनां सप्त, एवं १२३। इयं सभा प्रान्तस्य शासननियमं रचयति।

सम्पूर्णभारतार्थं परिषद्द्वयी, एका भारतीयव्यवस्थापिका सभा, यदीयाः सदस्याः १४०। द्वितीया राज्यपरिषद्, यदीयाः सभ्याः षष्टिः। अनयोः समस्ता भारतवर्षीयविषयाः प्रविष्टाः। यथा स्थलसेना, जलसेना, वाह्यवदितरदेशानां सम्बन्धः, लवणः, वाष्पयानम्, डाकतारविभागः, मनुष्यगणनादयः। राष्ट्रपरिषदं विहाय सर्वासां समितीनां नवीनप्रबन्धः प्रतितृतीयवर्षं भवति राष्ट्रपरिषदश्च प्रतिपञ्चमवर्षम्। एतेषां सुधाराणां प्रबन्धस्यायमभिप्रायो यद्देशस्य प्रबन्धो देशाभिमतानां प्रतिनिधीनां हस्ताधीनोऽस्ति। एतेषां सुधाराणां पुनरालोचनार्थं साइमनसमक्षं समागतम्। यत्र नैकोऽपि भारतीयो वर्त्तत इति महद्देशस्य कृते खेदजनकम्। किमतोऽधिकं कष्टावहं यदेतस्य भारतवर्षस्य सुधारसंचालननिर्णयार्थं सङ्घः स्थापितः, यत्र एकोऽपि भारतीयो विद्वान् न निवेशितः, योऽ भारतीयानां हितकारि सत्परामर्शं दद्यात्। इत्थं पल्लविनेन घातिन्या भारतीयशासनव्यवस्थायाः प्रपञ्चस्य।

# व्रजभाषामहाकवेर्विहारिणः काश्चन सूक्तयः ।

लेo—भट्ट श्रीमथुरानाथ शास्त्री, साहित्याचार्यः ।

[व्रजभाषामहाकवेर्विहारिणः 'सप्तशती' कस्य वा काव्यरसज्ञस्य न स्याद्विदिता । व्रजभाषासर्वस्वमियं 'विहारि'-सूक्तिः सुरसरित्संमिलिता सूरतनयेव सुरसरस्वतीं समाश्रितापि सुधीभिः समधिकं समादरणीया स्यादिति सेयं सुवहोः समयात्पूर्वमेव संस्कृतसरस्वत्यां समवतार्यत मयका । 'दोहा'-सदृशे स्वल्पावकाशे छन्दसि विहारिमहाकविरेतादृशमसीमव्यङ्ग्यार्थमञ्जुलमपूर्वं कथयामासेति को वा प्रशंसामुखरमुखो हृदि स्थानं न दद्यात् । यद्यपि व्रजभाषायामक्षराणां लघुगुरूकरणं रूपान्तरकरणम्, इत्यादिरपभ्रंशप्रकार एव तत्र सुबहु सहायकः, परमेवं सौकर्याभावेऽपि प्रत्युत सन्धि-संयुक्ताक्षर-द्विवचनभेदादिसंकट-सहस्रसांमुख्येपि सेयं विहारि-सूक्तिः संस्कृतेप्यानेतुं शक्या न वेति चेतःप्रत्यय एव चापल्याय प्रचोदितवान् ।

यावदियं पृथक् प्रकाशयितुं न शक्यते तावत्-संस्कृतानुरागिणां मनस्तोषनिमित्तं 'विहारि-विलासः' इति शीर्षकं प्रदाय, पुस्तकाकारेण प्रकाशयिष्यमाणे मत्कविलासंग्रहेंऽशतः सेयं संगृहीता । अद्य तस्मादेवोद्धृत्य काश्चित्सूक्तयः श्रीमतां सेवाया-मुपस्थाप्यन्ते ।

अस्माकं सजातीयः कथंचित्सम्बन्धी च बुन्देल-खण्डाभिजनो लल्लोपनामकः परमानन्दपण्डितोऽपि भारतेन्दु-हरिचन्द्रस्य समये विहारि-सप्तशतीं संस्कृतेऽनूदितवान् । परमस्मिन्ननुवादे भूयान् विवाद इव । व्याकरणनियमानां तु सोयं प्रत्यक्ष-मपवाद[1] एव । विहारि-सूक्तेरर्थसंवादेऽपि (संगतौ)

१ आत्मनेपदप्रयोगे स्वतन्त्रता यथा—"विरहाग्निना वभास ।" 'विन्दुमिषेण ववन्द ।' (दो. ८९) रसमपि वुध्यसि नैव (७८९) 'संगच्छतः सहैव ।' (१६१) 'सा जजम्भ भेजे पुनः' (२२६) 'पुनर्मिमिलतुः शिश्यतुः पुनरासतुः शयेपि' (२०४) इत्यादिः ।

'चरणौ विषमगतीव' (१९८) 'गगनमंशुमालीकरैः' (१४९) 'मिलनायाभिससार ।' (१४३) 'चातुरतया' (१४१) 'लसति ललाम' (४) 'कराङ्गुलिनैव पस्पर्श' (२८१) 'प्रदर्शयित्वा निजतनुम्' (४८०) इत्यादयः शतमन्यान्ये व्याकरण-नियमापवादाः ।

प्रायः प्रतिवाद एव दृश्यते । स्थाने स्थाने चपल-विप्र-वाद-एव भाषाप्रसिद्धः प्रवाद एव बाहुल्ये-नावलोक्यते । संस्कृतसरस्वत्यास्तमिममपवाद-मुन्मार्ष्टुमेवाहं सज्जोऽभवमित्यास्तामतिवादः । एष विषयो मत्कवितासंग्रहस्य भूमिकायां विस्तरेण विशदीकृतः । इदानीं यानि मयाऽक्षराणि योजितानि तानि श्रीमतां पुरतः सभयकम्पमुपस्थाप्यन्ते । ]

* श्रीकृष्णस्य शोभावर्णनम् *

राजति गुञ्जामालिका वक्षसि मुरमथनस्य ।
लसति निःसरन्ती बहिः, शिखेव दवदहनस्य ॥१॥

गोपरक्षायां पीतस्य दावानलस्य बहिर्निःसरन्ती ज्वाला इव भातीत्याशयः ॥ १ ॥

श्रवसि हरेः कुण्डलमिदं दीव्यति मकराकारि ।
हृदयसदनमविशत्स्मरो लसति केतनं द्वारि ॥२॥

मकरस्येव आकारो यस्य ईदृशं कुण्डलं हरेः श्रवसि ( कर्णे ) दीव्यति शोभते । कामरूपो नृपो हृदयरूपं सदनमविशत्, द्वारे च राजचिह्नभूतं केतनं ध्वजो लसति । कामस्य मकरकेतनत्वात् । कर्ण-द्वारा तव रूपगुणकथां शृण्वतोऽस्य कामसंचारोऽभवदिति शृण्वन्तीं नायिकां प्रति दूत्या उक्तिः ।

श्याममधुरमूर्तिर्हरिः पीतपटेन विभाति ।
उषसि नीलमणिशैल इव बालातपेऽभियाति ॥३॥

बालातपे अभियाति सति ( प्राप्नुवति ) प्रातः काले नीलमणिशैल इव, श्याममूर्तिः हरिः पीता-

---

सखि सोहत गोपालके उर गुञ्जनकी माल ।
बाहर लसत मनौ पिये दावानलकी ज्वाल ॥ १ ॥
मकराकृत गोपालके कुंडल सोहत कान
धस्यौ मनों हिय-धर समर, ड्यौढ़ी लसत निसान ॥२॥
सोहत ओढ़ें पीतपट, स्याम सलोने गात ।
मनो नील-मनि-सैल पर आतप पर्‌यो प्रभात ॥३॥

---

अर्थानुसन्धानविरहस्तु स्थाने स्थाने यथा—'डर न डरैं नींद न परै हरै न कालविपाक । दिन छनदा छाकी रहत छुटत न छिन छवि छाक ॥" इत्यस्यानुवादे "न निद्रासि न विभेषि सखि, नापैति च समयेन । तद्रूपासवमदोऽहो अहोरात्र-मदनेन ॥" अत्रहि निद्रादिषु नायिकायाः कर्तृतां स्वीकुर्वन्नेव, सहैव 'नापैति च समयेन' इति रूपासवमदं कर्तृत्वसिंहासने स्थापयामास ।

'टटकी धोई धोवती चटकीली मुखजोति । लसत रसोई के वगर जगर मगर दुति होति ॥' इत्यस्यानुवादे 'विदलीकृत सूपस्य यत्परिमार्जनं करोति' इति सूपमार्जनं न जाने कुत आनीतवान् । "लालन लहिपाये दुरैं, चोरी सौंह करे न।" इत्यस्यानुवादे—

'तस्करता शपथैरियं गुप्ता नहि भवतीह' अहो नायकस्य कृते 'तस्करता' कियन्मधुरं चोचितं च प्रतीयते !!

'किती न गोकुलकुलवधू काहि न केहि सिख दीन । कोनै तजी न कुलगली ह्वै मुरलीसुरलीन ॥' इत्यत्र 'का वा गोकुले कुलवधूः, का धर्मं न जहाति ।' अत्र कवितायाः जीवितायमानं बहुवचनं 'का हित केहि सिखदीन' इति मेरुदण्डायमानमर्थं समूलमुन्मूलयामास । प्रत्युत धर्मं जहातीति कठोरं प्रयुयुजे । 'टटियां अँगुरिन फारि, अत्र 'सा गवाक्षनिहिताङ्गुली' इत्यस्वाभाविकं रचयामास । 'विविदतुः स्पर्शपरीक्षया मुमुदाते च सुखेन' एवंविधाश्छन्दोभङ्गास्तु प्रतिपदम् । ' सखि सोहत गोपालके उर गुंजन की माल । ' अत्र ' गुञ्जपुञ्जकृतमालिका ' इत्याद्यनुवदन् अनुवादं ' लुञ्जपुञ्जमिव ' चकार । अस्तु अयं स्थालीपुलाकन्यायः ।

स्वरेण विभाति। श्यामशरीरं नीलमणिस्थानीयम्, तदुपरि पीताम्बरं बालातपवत् मनोहारीत्युत्प्रेक्षाऽऽशयः। अत्रापि परमानन्दः "उष्णकर कोमलकर-निचयेन" इति उषःकालिकसूर्यार्थम् 'उष्णकर'-पदं प्रयुञ्जानः स्थूल एव ॥ ३ ॥

पीतपटाऽधरदृक्छटा-विच्छुरिता हरिताऽति।
अधरधृता हरिमुरलिका सुरपति-धनुरिव भाति ॥४॥

पीतपटस्य अधरस्य दृशोश्च छटया-शोभया मिलिता, स्वयं स्वभावतो हरितवर्णा हरेः मुरलिका, इन्द्रधनुषा तुल्या भाति। पीत-रक्त-श्यामच्छटाभिः संगता हरितवर्णा वंशी पञ्चरंगवर्णेन इन्द्रधनुषा तुल्या भातीत्याशयः। पटस्य पीतः, अधरस्य अरुणः, दृशोः श्यामो वर्ण इति नानाविधरङ्ग प्रतिबिम्ब इत्यर्थः। अत्रापि 'धनुः' स्थाने 'धनु'-सुन्दर-हरिवंशिका' इत्याह परमानन्दः ॥ ४ ॥

शिरसि मुकुटमधिकटि ललित-पटो वेणुरधिपाणि।
मालोरसि तावकमिदं रूपं हृदि करवाणि ॥५॥

शिरसि मुकुटम्, अधिकटि (कट्याम्) ललितः नटधार्यत्वात्सुन्दरः पटः, अधिपाणि (पाणौ, करे) वेणुः, उरसि माला (वनमाला), इदं तावकं रूपं हृदये सदा करवाणि इति भगवन्तं प्रति भक्तस्य आशंसा परमानन्दस्तु 'मस्तकमण्डितमुकुटवर' इत्यादि सर्वसम्बोध्यस्यैव विशेषणीकुर्वन् 'रूपकम्' (बानिक) लुलुम्पेति किं सहृदयेषु ॥ ५ ॥

* मुखवर्णनम् *

राजति नीलपटान्तरितमेतन्मुखमवधेहि।
कलितकलानिधिरुल्लसति कालिन्दी सलिले हि ॥

नीलपटेन अन्तरितं किञ्चित्सव्यवधानम् इदं नायिकामुखं राजति, अत्र (दर्शनविषये) त्वम् अवधेहि सावधानो भव। अत्रोत्प्रेक्षते-कालिन्दी सलिले सुन्दरः कलानिधिः शोभते। इवस्याप्रयोगाद्‌ गम्योत्प्रेक्षा।

तद्गृहमभितस्तिथिमहो पञ्चाङ्गादवयाति।
वदनविभाप्रतिभासतः प्रतितिथि पूर्णा भाति ॥७॥

जनः तस्या गृहम् अभितः (तद्गृहसमीपे), प्रतिपदादितिथिं पञ्चाङ्गात् अवयाति जानाति। मुखशोभायाः प्रतिभासतः (प्रकाशात् प्रत्येकतिथौ एव पूर्णिमा भाति। अत्रापि 'पञ्चाङ्ग'-स्थाने प्रस्तकपदं प्रयुञ्जानः परमानन्दो अर्थं दुरूहं चकार ॥७॥

* नेत्रवर्णनम् *

सूक्ष्मपटे चञ्चलनयनयुगं कान्तिमुपयाति।
मन्ये सुरसरिताजले मीनमिथुनमाभाति ॥ ८ ॥

सूक्ष्मपटे (पटेन किञ्चित्सव्यवधानमित्यर्थः)

---

अधर अरत हरिके परत ओठ-दीठि-पटजोति।
हरे बाँसकी बाँसुरी इन्द्र धनुस सी होति ॥ ४ ॥
सीस मुकुट कटि काछनी, कर मुरली उर माल।
यह बानिक मो मन वसो, सदा बिहारी लाल ॥ ५ ॥

छप्यो छबीलो मुँह लसै, नीले अंचल चीर।
मनौ कलानिधि झिलमिलै कालिन्दी के नीर ॥ ६ ॥
पतराही तिथि पाइये वा घरके चहुँ पास।
नितप्रति पूनोही रहत आनन ओप उजास ॥ ७ ॥

चञ्चलं नयनयुगं निर्मले गङ्गाजले मीनयुगलमिव आभाति ॥ ८ ॥

कवयः कमलसमं जगुर्वेद्मि नयनमश्मेति ।
कथमनयोर्योगे द्वयोर्विरहकृशानुरुदेति ॥ ९ ॥

अन्ये कवयो नयनं कमलसमं प्रोचुः, अहं तु नयनम् अश्मा ( पाषाणः ) अस्तीति वेद्मि । अनयोर्द्वयोः । ( नयनयोः ) योगे सति विरहाग्निः कथं प्रोद्भवति । द्वयोः पाषाणयोरेव संघर्षेण वह्निरुदेति ततश्च नयनमपि अश्मेत्येव सचातुर्यमाह विहारी ॥ ९ ॥

* यौवनम् *

वधूवपुषि यौवनविभा यथा यथा समुदेति ।
सकलसपत्नीमुखविभा तथा तथा क्षतिमेति ।१०।

सपत्नीनां मुखकान्तिस्तथा तथा क्षीयते । नव यौवनायामस्यामेव प्रियोऽनुरज्येदिति भावः ॥ १० ॥

गता न शिशुता-द्युतिरितो यौवनमङ्ग मुपैति ।
द्विविधरङ्गकौशेयमिव तनुराभ्यां रुचिमेति ।११।

शिशुताया द्युतिर्न गता, किञ्चिद्बाल्यं वर्तत इत्याशयः । इतः ( पक्षान्तरे ) यौवनम् अङ्गम् ( कर्म ) उपैति प्राप्नोति । 'उप' सम्बन्धेन यौवनस्य स्पर्श एव सूच्यते । तनुः ( शरीरम् ) आभ्यां बाल्ययौवनाभ्यां द्विवर्णं कौशेयम् ( धूप छांह का रेशमी वस्त्र ) इव शोभते । अत्रापि परमानन्दो 'द्विविधरागमम्बरमिव द्वैरूप्यं च दधाति' इति वैरूप्यमेव चकार ॥ ११ ॥

* वसन्तपवनः *

रणद्भृङ्गघण्टावलिः स्रवन्दानमधु भाति ।
कुञ्ज-मरुत्कुञ्जर इतो मन्दमन्दमायाति ।१२।

दानमधु स्रवन् भाति । एष कुञ्जपवनरूपः कुञ्जरः, इतो मन्दमन्दम् आयाति ॥ १२ ॥

---

चमचमात चञ्चल नयन बिच घूंघट पट झीन ।
मानौ सुरसरिता विमलजल उछरत जुग मीन ॥८॥

कहत सबै कवि कमल से मो मत नैन पखान ।
न तरक कत इन बिय लगत उपजत बिरह कृसान ।९।

देह दुलहिया की बढ़ै ज्यौं ज्यौं जोवन जोति ।
त्यौं त्यौं लखि सौतैं सबै बदन मलिन दुति होति।

छुटी न सिसुताकी झलक झलक्यो जोवन अङ्ग ।
दीपति देह दुहून मिलि दिपति ताफता रङ्ग ॥११॥

रनत भृंगघण्टावली झरत दानमधु नीर ।
मंद मंद आवत चल्यो कुञ्जर कुञ्ज-समीर ॥ १२ ॥



## ॥ मातृभावना ॥

( ले०-नवरत्न-श्रीगिरिधरशर्म-काव्यालङ्कारः )

चिरञ्जीव्याच्चिरञ्जीयात्सुखी भूयादयम्बालः ।
दृढाङ्गः शक्तिसम्पन्नः सुधीर्भूयादयम्बालः ॥१॥ चि०

* *

महास्वस्थः सदास्वच्छः, प्रसन्नो निर्मलो दक्षः ।
सदाकारः सदाचारः, कृती भूयादयम्बालः ॥२॥ चि०

* *

विदां मोदाय वागस्य प्रिया भूयात्सुधासिक्ता ।
सतां तोषं वितन्वानः सदा जीयादयम्बालः ॥३॥ चि०

* *

जगन्नैरोग्यमातन्वन् वहन् द्रव्यं रसं स्नेहम् ।
सुधावाणी सुधापाणिः प्रियो भूयादयम्बालः ॥४॥ चि०

* *

पठन् वेदोपवेद स्यान् महान् धीमान् महाविद्वान् ।
कला बिभ्रन् कृतीः कुर्वन् भवेच्छ्रीमानयम्बालः ॥ ५ ॥

* *

भजन् सत्यं गिरीशं तं वहन् नित्य महोत्साहम् ।
जनान् मार्गं नयंल्लोके नमस्यः स्यादयम्बालः ॥ ६ ॥

* *

विशुद्धो दिव्यचैतन्यः सदानन्दः प्रबुद्धः सन् ।
स्वधर्मं पालयन् प्रीत्या महर्षिः स्यादयम्बालः ॥७॥

* *

प्रयोक्ता मन्त्रतन्त्राणां सुयन्त्राणां कलानाथः ।
हितैषी सर्वभूतानां महोच्चः स्यादयम्बालः ॥८॥ चि०

* *

प्रजानन् 'विद्ययाऽमृतमश्नुते' मन्त्रं वहन् विद्ये
भजन् वर्णाश्रमाचारं जयीभूयादयम्बालः ॥९॥ चि०

† हिन्दी भाषायां 'लोरी' इति गद्यते । ग़ज़लरूपेण गीयते ।

## दुर्जन-दूषणम् ।

प्रणेता—महाकविगुमानी पन्तः

सम्पादकः—श्री । रादत्तपन्तः
साहित्याचार्यः, काव्य—व्याकरणतीर्थः

अयि सुजनेतर ! वक्तुं किमपि भवन्तं वचोऽधुना तथ्यम्
मानसमुत्सहते मे विजित्य कोपं तदाकलय ॥ १ ॥
हर्तुं वयो जनन्याः कर्तुंभवन्याः सुदुर्धरम्भारम् ।
क्लेशयितुमार्यलोकान् दुर्जन ! ते केवलं जन्म ॥२॥
तत्र पततु शतकोटिः शतकोटीनां समं क्षणे यत्र ।
मातुस्त्वमधिपिचण्डं मूढ ! निषिक्तोऽसि तातेन ॥३॥
यद्गर्भ एव तप्त्वा न मृतो जातोऽपि नाहिना दष्टः ।
जीवसि सुखं दुरात्मन् ! दौर्भाग्यं तत्सतामेव ॥ ४ ॥
परुषैर्वचोभिरुग्रैः पुरुषान् महतस्तुदन्नधिक्षिपसि ।
ननु वद विश्वजनीनैः किन्तव कितवापराद्धन्तैः ॥५॥
क्षान्तिर्निगृह्य कोपं खलेषु शश्वत्कृतापराधेषु ॥
महतामयं निसर्गो जीवसि तेनैव मन्दात्मन् ॥ ६ ॥
अपराध्यसि गुणवद्भ्यः सद्भ्यः सारं न वेत्सि किं तेषाम्
यदि सक्रुधो भवेयुः सपदि जड ! त्वां दलयेयुस्ते ॥७॥
सद्भैरशुद्धिरेतैरसाधनैः साधुभिर्न साध्येति ।
माविद्धि मूर्ख ! तेषां निवसति सत्त्वे क्रियासिद्धिः ॥८॥
द्विष्टस्य सज्जनेन द्विषतोऽसज्जन तवोभयथा ।
असिकूष्माण्डन्यायात् क्षयमुत्पश्यामि पापात्मन्॥९॥

त्वं परमत्सरवृत्तिः सततं सन्तोषवृत्तयः सन्तः ।
सामानाधिकरण्यं धूर्त ! कथन्तैस्तव ब्रूमः ॥ १० ॥
त्वं त्वं सुजनः सुजनः काचःकाचो मणिर्मणिः सत्यम्
यो यः स एव सः स्यात्, पापरते ! मत्सरः कोऽत्र ॥ ११ ॥
वर्तस्व धारणायां मा वैरायस्व दुर्मते ! सद्भिः ।
नोचेदुदर्कमस्य द्रागद्रक्ष्यसि कर्मणः सद्यः ॥ १२ ॥
वन्द्यान् गुणैरनिन्द्यान् महानुभावान् मुहुर्मुहुस्तुदतः ।
दुर्मुख ! तव कथमेका शतधा न विदीर्यते जिह्वा ॥ ३१ ॥
भीतिर्गता दिगन्ते, करुणा वरुणालये निमग्ना ते ।
याता रसातले ह्रीः, क्षुद्र ! जीवोऽसि तेनैव ॥ १४ ॥
सन्तं गुणिनमगुणिनं स्वमगुणवन्तं गुणाढ्यमितिवदतः
तव कद्वदने ह्यस्मिन्नवस्करः शौकरः[1] पततु ॥ १५ ॥
अफलजनिः खलजन इति जीवसि लोकैर्जगत्युपक्रुष्टः
असुधारणादमुष्माद् वराक मृत्युर्वरं भवतः ॥ १६
विरचय्य युक्तिभिस्त्वं सहसा सर्वापकारिणीं वाणीम्
कर्णेजपसि जनानां कर्णेजप ! कात्र ते सिद्धिः ॥ १७ ॥
सरलीकृतोऽपि यत्नात् त्वमात्मनस्तन्निसर्गनिष्पन्नम्
कौटिल्यं न विमुञ्चसि पिशुन ! शुनः पुच्छवत्कुटिलः १८
स्वल्पप्रदानतोऽपि प्रीतः प्रत्युपकृतौ समुद्युक्तः ।
त्वामप्रियं कृतघ्नं श्वाप्यतिशेते श्वपाकस्ते ॥ १९ ॥
भारं वहन् परेषां दूर्वोत्कर-पुष्टविग्रहस्तुष्टः ।
हरतः परार्थसारं खल ! साधीयान् खरस्त्वत्तः ॥ २० ॥
आम्नायोदितमन्त्रैर्दिव्यौषधिभिः सवलनिग्रहणः ।
वशमेति कालसर्पो दुष्ट ! पुनस्त्वं न वश्योऽसि ॥ २१ ॥
वन्यद्वीपि-मृगेन्द्रावप्यतिशेषे सुदुर्धरत्वेन ।
शक्यौ नियन्तुमेतौ त्वन्तु नियम्यो न दुर्बुद्धे ! ॥ २२ ॥

सुकृती क्व सभ्यलोकः क्व दुष्कृती हन्त दुर्मनीषत्वम् ।
चक्राङ्ककरटयोरिव मन्ये वह्वन्तरं युवयोः ॥ २३ ॥
उष्णत्वमिव हिमांशौ शैत्यमिवार्के चलत्वमिव शैले ।
स्थैर्यन्नभस्वतीव त्वयि वञ्चक ! नास्ति सौजन्यम् ॥ २४ ॥
साक्षादज्ञमभिज्ञं ननु कथयामः कथं भयेन त्वाम् ।
अघवन्नवेहि तथ्यं काकः काकः पिकस्तु पिकः ॥ २५ ॥
दग्ध्वा स्वमत्सराग्निज्वालाभिः काममात्मधीरन्तः ।
अर्हसि कलामनर्हित ! न षोडशीमप्युदारस्य ॥ २६ ॥
विद्वद्भिर्जडबुद्धे ! श्रुतशीलाढ्यैरुदूढदोषस्य ।
स्पर्द्धितुमार्यजनैस्सह वालिश ! वद कोऽधिकारस्ते २७
सम्पृक्तोऽप्यतिवेलं कुपुरुष ! सत्पुरुषैः स एवासि ।
चिरमग्नोऽपि पयोधौ काको न जहाति कृष्णत्वम् ॥ २८
आपाततः समक्षं मधुराकारोऽन्तरालतः क्रूरः ।
बुध्यन्ननु हतबुद्धे ! त्वमसिरसि क्षौद्रदिग्ध इव ॥ २९ ॥
तव सतमनीश्वरं वा जगदजनिर्वा मृतस्य परलोके ।
यदभीश्वरसि यथेच्छं त्वमनार्य ! त्यक्तमर्यादः ॥ ३० ॥
स्वर्निरयं परिणतयोः फलश्रुतिः प्राह सुकृत-दुष्कृतयोः
अज्ञ वितथ इति मत्वा नूनं वितथे प्रवृत्तोऽसि ॥ ३१ ॥
नयतो गुरूनधस्तादथोपरिष्टाल्लघूँश्च सप्रसभम् ।
दण्डस्येह तुलायाः प्राकृत ! केयं तव प्रकृतिः ॥ ३२ ॥
अहमहमिकां विधातुं समीहमानः समं बुधैरबुधः
न विलज्ज ! लज्जसे किं स्वयं स्वके नैव हृदयेन ॥ ३३ ॥
धिग् जन्म ते नराधम ! विफलमजायास्तनस्येव
न मनागपि सुकृतं यद्विदितमात्मनो भवता ॥ ३४ ॥
प्रागुदुरितैस्त्वमिहेदृक् पापः पापैरमुत्र पापीयान्
भवितासि बन्धतोऽमाद् बन्धुल ! ते दुर्लभा मुक्तिः ॥ ३५ ॥
अघमाचरन्निह त्वं सुचिरं नरके पचिष्यसे क्षिप्तः ।

---

१—शूकर पुरीषमिति भावः—



१. महामहोपाध्याय-श्रीसुधाकरद्विवेद-महोदयाः



२. दैवज्ञवाचस्पतिः श्रीविनायकशास्त्रिवेताल-महोदयः

नाबुध ! विभेसि बुध्यन् किं तव चेतोऽश्मसारमयम् ३६
उद्दण्डकालदण्डात् भीतमघात्मन्वलादमन्वानः ।
नहि केवलमसि वाचा शूरस्त्वं चेतसा चापि ॥३७॥
क्रोशितवानसि कस्मा-त्वं बलदर्पादनागसः पुंसः ।
इतिभास्करिणा पृष्टः किं वदयसि तत्र सद्वैरिन् ! ॥३८॥
उद्यतकशैः सरोषं निगृहीतेन प्रसह्य केशेषु ।
यास्यैर्भटैस्त्वयाधः स्मरिष्यते स्वं तदा पाप्मन् ।३९।
इति कुत्सितोऽसि भूयः प्रतर्जितोऽसि प्रबोधितश्चापि ।
अथ किं कदर्य्य ! वच्मो यदहितं ते हितं कुर्य्यात् ॥४०॥
मम गर्हया भवानपि मत्सम एवेति मां नु मा ब्रूयाः ।
तत्र लोकगर्हितस्य स्वरूपकथनं न गर्हासौ ॥४१॥
कर्तुं प्रहर्षवर्षं सताममर्षप्रकर्षमितरेषाम् ।
निरमात् कविर्गुमानी भुवि दुर्जन-दूषणं नाम ॥४२॥

*इति गुमानीकविकृतं दुर्जनदूषणम् ॥*

# शरीर-मीमांसा

*ले०—त्र्यम्बक विनायक मोहरिरः ।*



पाश्चात्यविपश्चिद्भिरेतादृशानि यन्त्राण्याविष्कृतानि सन्ति येषां साहाय्येन सूक्ष्मतममपि वस्तु प्रत्यक्षीक्रियते । तै रणुवीक्षणयन्त्रेणैतन्निदर्शितं यदिदं शरीरं सूक्ष्मतमैर्जीवाणुभिः संघटितं विद्यते । ते जीवाणवः 'सेलसे' त्युच्यन्ते । इदानीं वयं प्रथमं जीवाणूनां वर्णनं दद्मः; तदनन्तरं तैः कथमस्माकं शरीरं संघटितमिति दर्शयिष्यामः ।

एते जीवाणवो न केवलमस्माकं किन्तु पश्वादीनां तथा वृक्षाणामपि शरीराणि संघटयन्ति । यत् किंचित् प्राणिना क्रियमाणमुच्यते तत् तत्त्वतस्तैर्जीवाणुभिरेव क्रियते । इमे जीवाणवो यावत् सजीवाः सन्ति तावदेव नृणामायुः । यदा चेमे निर्जीवा भवन्ति तदा नराणामपि मृत्युर्भवति । एतैरेवास्माकं ज्ञान-कर्मेन्द्रियाणि मस्तिष्कहृदयादीनि सर्वाणि शरीराङ्गानि निर्मीयन्ते । एतेषामेव कारणात् हृदयस्य तथा मस्तिष्कस्य सर्वाः क्रियाः प्रचलन्ति । तेषां वर्णनं सुप्रभात-पाठकानां कृते वयमत्र कुर्मः ।

एते जीवाणवो बहुविधाः सन्ति; केचित् गोलाकाराः, केचिद्दण्डाकाराश्च । एते भोजनं विसर्जनं प्रजननं च कुर्वन्ति । किन्तु, एतेषां भोजनविसर्जनप्रजननपद्धतयोऽतीव संघटिताः सन्ति । यदि वयमेतेषां पार्श्वे किंचित् खाद्यं निवेशयामस्तर्हि तत् खाद्यमादातुं तेषामेकमभ्यन्तरतो बहिरागच्छति; तेनाङ्गेन च तत् खाद्यं परिवेष्ट्य पुनश्च तेन खाद्येन सह शरीरे लीनं भवति । यथा नरा नेत्रैः पश्यन्ति, श्रवणैः शृण्वन्ति, तथेमे न कुर्वन्ति । एतेषां सर्वं कर्म सर्वेण शरीरेण क्रियते । कस्यामपि दिशायामस्तु खाद्यमेते पश्यन्त्येव । एतेषां गमनपद्धतिरपि भिन्ना

वर्तते। शरीरार्धभागेनैव प्रथममग्रे संसरन्ति, तदनन्तरं द्वितीयार्धभागेनेति सर्वमेतदणुवीक्षणयन्त्रेण प्रत्यक्षं भवति। इदानीं तेषां विसर्जन-कर्म कथं भवतीति कथयामः।

एतेषां शरीरे स्थानमेकं वर्तते। तच्च शून्यस्थानं कथ्यते यतस्तत्र तत् जीवद्द्रव्यंनैवैतेषां (प्रोटोप्लेज़्म्) नास्ति यत् खलु तेषां शरीरे सर्वत्रैव वर्तते। अनेन जीवद्द्रव्येनैवैतेषां सर्वा क्रिया भवति। तत् जीवद्द्रव्यमन्नात् जायते। अनेनैतदपि स्पष्टं भवेत् यत् यदा नरोऽन्नं न गृह्णाति तदा स किमपि कर्तुं न शक्नोति। अतएव नराः, अन्नं भक्षयन्ति कार्यं च कुर्वन्ति। तस्मिन् जीवद्द्रव्ये त्रीणि द्रव्यान्तराणि सन्ति। एतेषां द्रव्याणां वर्णनं वयं पश्चात् कुर्मः, प्रथमन्तु जीवाणुनां विसर्जन-कर्म कथयामः।

पूर्वकथिते शून्यस्थाने जीवाणूनां मलमूत्रादिविसर्जनं भवति। यदा तत् शून्यस्थानं मलद्रव्येण परिपूर्णं भवति, तदा तेजीवाणवस्तस्यैव द्वारा शरीरात्तन्मलद्रव्यं बहिः कुर्वन्ति। एतेषां प्रजननक्रिया तथा न भवति यथा नराणां भवति। नरेषु नरनारीसंयोगादपत्योत्पत्तिर्भवति किन्त्वेतेषु जीवाणुष्वेकेनैव भवति। यथा—अयं जीवाणुः प्रथमं वृद्धिं याति, तदनन्तरं मध्ये क्षीणो भवति। यदा चास्यात्मा (न्युक्लिअस्) द्विधा भवति, तदा सोऽपि द्विधा भिद्यते। एतदेव तस्य प्रजननम्।

इदमेतेषां स्वल्पतरं वर्णनं किन्तु शरीर-मीमांसाकृते सुपर्याप्तम्। ये खल्वस्मिन् विषयेऽधिकं ज्ञातुमभिलषन्ति ते तद्विषयकान् ग्रन्थान् पठन्तु। इदानीमस्माभि र्गर्भप्रभृति शरीरसंघटनं निगद्यते।

शुक्रे तथा रजसि सन्ति केचित् जन्तवः। यदा शुक्रं गर्भाशये प्रविशति तदा तत्रस्थजन्तव रजोजन्तुभिर्मिलितुं प्रयतन्ते, किन्तु प्रायः एक एव रजोजन्तुना सहमिलति, कदाचित् द्वावपि द्वाभ्यां सह मिलतः। तयोर्मिलनेन गर्भस्थापना भवति। एतदे कारणं यत् एकसमयेऽपत्यमेकं स्त्री सूते। यद कदाचित् स्त्रीरपत्यद्वयं प्रसूते तदा द्वयोः शुक्रजन्त्वो रजोजन्तुभ्यां सहमिलनमभवदिति ज्ञातव्यम्। गर्भाशये जलमन्यच्च किञ्चिद् द्रव्यं गर्भपोष विद्यते। तत्र तयोः जन्त्वोर्मिलनेनाण्डोत्पत्तिर्भवति। तदण्डं दिने दिने वृद्धिं गच्छति। यदा च त पूर्णविकासो भवति तदा तदण्डं द्विधा भिद्यते पुनश्च तद् विभागद्वयं वृद्धिं याति; विकासान चैकैकं यथापूर्वं द्विधा भवति। पुनरपि तदण्डचतु वर्धते भिद्यते च। एतान्यण्डान्यपत्याकारेण सं ग्रानि भवन्ति। इमान्यण्डान्येवोपर्युक्ता जीवा सन्ति। पञ्चमासाभ्यन्तरे तदपत्यं सावयवं त न्तरं सुदृढं च भवति। नवमासानन्तरं तद् ब रागन्तुमिच्छति। एकदिन आगच्छति च। तद तस्यापत्यस्य वृद्धिस्तथैव दत्तक्रमेण भवति। रस्था जीवाणवो यथा वृद्धिं यान्ति तथा नाशम् एतेषां वृद्धिनाशौ जन्मप्रभृत्येव प्रचलतः। प्रथमार्धायुषि प्राधान्येन प्राणिनां वृद्धिर्भवति यार्धायुषि च क्षयः। यदा शरीरस्थाः सर्वे णवो मृता भवन्ति तदा नराणामपि मृत्युर्भव

एतेषां नाशो विशेषतो विषमितपञ्चमहाभूतेभ्यो जीवनं चान्नात् जलात् वायुतश्च भवति। तस्मात् शरीरमिदं सदैवतेभ्यो पञ्चमहाभूतेभ्यो गोपनीयम्।

तदेतत् संवृत्तं यदिदं शरीरमेतैर्जीवाणुभिः संघटितं विद्यते। अत्रेयं शङ्का भवति यत् यदि सर्वे जीवाणव ईक्षणादिकं कर्म स्वशरीरेणैव कुर्वन्ति यद्यस्मासु त एव वर्तन्ते तत् कथमस्माकमपि शरीरं सर्वमपीक्षणादिकं कर्म न करोति किमर्थमस्मासु ज्ञानकमन्द्रियाणि भिन्नानि सन्ति। अस्याः शङ्काया उत्तरमेवं दत्तम्। यदा सर्वे एते जीवाणवः शरीरे सम्मिलन्ति तदा तेषां केचिदीक्षाकार्यं केचित् च श्रवणकार्यं कुर्वन्ति। अनेनप्रकारेणेक्षणकार्यं- कुर्वाणानां श्रवणशक्तिः श्रवणकार्यं कुर्वाणानामीक्ष- णशक्तिश्च नष्टा भवति। यदि कस्यचित् नरस्येन्द्रि- यमेकं जन्मप्रभृत्येव न भवेत् तस्यापि तदिन्द्रियकार्य- मिन्द्रियान्तरेण भवितुमर्हतीति विज्ञानविदो वदन्ति। एते जीवाणुभिः कथमस्माकमिन्द्रियाणि संघटितानि सन्ति; कथमेतैः हृदयस्य तथा मस्तिष्कस्य क्रिया भवन्ति; अस्माकमन्ता रचना कथं विद्यत इत्यादि सर्वमग्रे कथयिष्यामः। इदानीमत्रैव विरमामः।

## 'शिवराजविजय'—विमर्शः।

निबन्धा—श्रीदीनानाथशर्मा शास्त्री सारस्वतः।

"पुराणमित्येव न साधु सर्व्वं
नचाऽपि काव्यं नवमित्यवद्यम्।
सन्तः परीक्ष्याऽन्यतरद् भजन्ते
मूढः परप्रत्ययनेयबुद्धिः॥"

*कालिदासस्य।*

'शिवराजविजयो' नाम अर्वाचीनकालिकः संस्कृत्रिम उपन्यासो भारतरत्नपण्डितश्रीमदम्बिकादत्तव्याससाहित्या- चार्य्येण प्रणायि-इति नेदमपिहितं संस्कृतगवीज्ञानां विज्ञा- नाम् अस्य काव्यस्य नवीना सञ्ज्ञा 'उपन्यास' इति, प्राचीनकालिकी च 'आख्यायिका' इति व्यपदेष्टुं शक्यते।

तथा च श्रीविश्वनाथः—

"आख्यायिका कथावत् स्यात् कवेर्वंशाऽनुकीर्तनम्।
अस्यामन्यकवीनाञ्च वृत्तं पद्यं क्वचित् क्वचित्।
कथांशानां व्यवच्छेद आश्वास इति बध्यते॥
अन्याऽपदेशेनाश्वासमुखे भाव्यर्थसूचनम्'
आदौ पद्यैर्नमस्कारः खलादेर्वृत्तकीर्तनम्।"

(साहि० ६ प० ३३४-३३९ का०)

यद्यपि लक्षणमिदं 'शिवराजविजये' तथा न सङ्घट- टीति, यथा 'हर्षचरिते'; तथाऽपि 'हर्षचरित'-मुद्दिश्य एतल्लक्षणनिर्म्माणादीपङ्कदेऽपि 'शिवराजविजय' नाऽऽ- ख्यायिकात्वाऽपायः। अस्मिन् हि उपन्यासे यद्यपि कविना स्ववंशाऽनुकीर्तनं नाऽन्वष्ठायि; नवाऽन्यकवीनां वृत्तं समद- र्भि; तथापि निर्म्माणहेतुदाहारे द्वित्रकवीनां सामान्यसंस्तवो वितीर्ण्ण एव। केषां केषाञ्चित् प्राज्ञानां पद्यान्यपि क्वचित् क्वचिदुद्धृतानि। कथांशानां व्यवच्छेदा अपि विन्यस्ताः। निश्वासमुखे अन्याऽपदेशेन भाव्यर्थसूचकाः श्लोका अप्युपा- त्ताः। आदौ पद्यैर्म्मङ्गलमप्याचरितम्। खलादेः सामान्यपरि-

घयोऽपि निरुक्तः । सरसं वस्तु गद्यैरेव च सन्दब्धम् । कथायां आख्यायिकायाञ्च कथांशव्यवच्छेदका आश्वासा न भवन्ति, आख्यायिकायाञ्च भवन्तीत्यनयोर्भिदा । दण्डिमते त्वीदृक्षस्य काव्यस्य आख्या 'कथा' इत्यपि ।

'तत् कथाऽऽख्यायिकेत्येका जातिः सञ्ज्ञाद्वयाङ्किता

"वक्त्रं चापरवक्त्रञ्च सोच्छ्वासत्वञ्च भेदकम् ।

चिह्नमाख्यायिकायाश्चेत् प्रसङ्गेन कथास्वपि ।

आर्य्यादिवत् प्रवेशः किं न वक्त्रापरवक्त्रयोः ।

भेदश्च दृष्टो लम्भादिरुच्छ्वासो वाऽस्तु किं ततः"

इति प्रघट्टकेन व्यपदिश्यते ।

किञ्च—एवं सत्यपि 'शिवराजविजयस्य' कथांशानां व्यवच्छेदाद् 'आख्यायिका' इत्येव नाम सौष्ठवं वहति; दण्डिनोऽपि नाऽत्र विप्रतिपत्तिः । यद्यपि 'साहित्यदर्पण'-कृता कथांशव्यवच्छेदस्य नाम 'आश्वास' इति, श्रीबाण-भट्टेन च 'उच्छ्वास' इति न्यधायि; तथापि व्यासमहोदयेन उच्छ्वासस्य शोकक्रोधाऽऽद्यौ वर्णनीयत्वेनाऽस्वारस्यपाताऽऽ-तङ्कात् ।

" प्रौढिप्रकर्षेण पुराणरीति-

व्यतिक्रमः श्लाघ्यतमः कवीनाम्"

इति प्रघट्टकेन सप्रौढि सा सञ्ज्ञा परिहृता, 'निश्वास' इत्यस्याऽपि शोक एवोपयोगात 'श्वास' इति सञ्ज्ञा साध्वी ।

यद्यपि 'शिवराजविजय' इत्यत्र 'शिवराजस्य विजयमधिकृत्य कृतो ग्रन्थः' इति विग्रहग्रहे '( तद् ) अधिकृत्य कृते ग्रन्थे ४ । ३ । ८७ पा०' इत्यर्थाऽधिकृतौ "वृद्धाच्छः ४ । २ । ११४ पा०' इति छाऽऽदिप्रत्ययप्रसङ्ग आपपति; तथाऽप्यसौ भूत्वाऽपि 'लुबाख्यायिकाभ्यो बहुलम्' इति वार्तिकेन लुप्यते । न च 'आख्यानाऽऽ-ख्यायिकेतिहासपुराणेभ्यश्च' इति वार्तिकेन पुनरपि ठक्प्रत्ययप्राप्तिर्दुर्वारैवेतिवाच्यम्; तत्र वार्तिके 'तदधीते तद्वेद ( ४ । २।५९ पा०' इत्यर्थस्यैवोपादानाद्; अत्र च तद्ग्रहणात्; शिवराजविजयाऽध्येतृषु एव च तस्याऽऽपादात् ।

अस्मिन् 'शिवराज विजये' द्वादश निश्वासाः, निश्वास-चतुष्काऽऽत्मकाश्च त्रयो विरामा वर्तन्ते । इह दक्षिणदेशाऽ-वतंसस्य महाराष्ट्रराष्ट्रस्वातन्त्र्यपोतकर्णधारस्य महाराष्ट्र-राष्ट्रचक्रवर्तिनः 'शिवाजी' ¶ इति ख्यातस्य विजय उदाहृतः, तेन चाऽसावेव धीरोदात्तो नायकः । उपनायकाश्च गौरसिंहरघुवीरसिंहादयोऽत्र । प्रतिनायकोऽवरङ्गजीवो विजयपुराऽधीशश्च । नायिकाऽत्र सौवर्णी । नच-नायकस्य शिवराजस्य स्त्रिया एव नायिकया भाव्यमिति-वाच्यम्; तत्स्त्रिया अत्र चरित्राऽनुपादानाद् । मुख्यचरितवत्या एव नायिकात्वाद् । अत्र प्रायः एके वैदर्भीमत्र मुख्यां मन्वते । प्रसादगुणोऽत्र; क्वचित् क्वचिद् ओजोऽपि । वीररसोऽङ्गी, इतरेऽङ्गभूताः । अत्रत्यं गद्यं चूर्णकमुत्कलिकाप्रायमपि ।

## * ग्रन्थकृतः सङ्क्षिप्त-परिचयः *

सामान्यतया काव्यपरिचयं निरुह्य सम्प्रति शिवराज-विजयकारस्य संस्तवो वितीर्य्यते—

राजपूतानाप्रान्तीयजयपुरसमीपवर्तिनि सानपुरनामनि एकस्मिन् ग्रामे ईश्वररामो गौडब्राह्मण ऊषिवान् । तत्प्रपौत्रश्च हरिरामो 'रावतजी की धूला' ग्राम उवास । हरिराम-तनूजन्मा राजारामो धूलाग्रामं हित्वा वाराणसीमशिश्रियत् । तस्य दुर्गादत्तदेवीदत्तेतिनाम्ना पुत्रद्वितयी जज्ञे । दुर्गादत्तो जातु जयपुरे, कदाचिच्च काश्यां न्यवात्सीद् । एतद्-द्वितीय-तनुजनुषोऽम्बिकादत्तस्य जन्म 'जयपुर' एव १९१५ वैक्रमे ( १८५८ ई० ) चैत्रवलक्षपक्षाऽष्टम्यामभूद् । दुर्गादत्तो भूयो वाराणसीमाययौ । अयमम्बिकादत्तो दशवर्षवयस्क एव हिन्दीसमस्यापूर्तिं कवनञ्च विधत्ते स्म । क्रमशोऽयं साङ्ख्य-योगवेदान्ताऽऽदिदर्शनशास्त्रेषु सङ्गीतसितारजलतरङ्गाऽऽदि-नानाविधवादित्रविद्यायाञ्च चातुरीमुवाह । १९३२ वर्षे गवर्नमेंटकालेजे † आङ्गलविद्यामपि पपाठ । स्वभगिनी-तितश्च चिकित्साग्रन्थानप्यध्यैष्ट । बङ्गभाषानिष्णातोऽप्यभि-द्यत । अनेन मिथिलामहाराजराज्यकाले सामवताख्यं वा-कर्मापि प्राणायि । अयम् १९३६ वर्षे काश्मीरिकसंस्कृत-कालेजं प्रविश्य स्वामिविशुद्धानन्दाऽध्यक्षतायां परीक्षां प्रदाय साहित्याऽऽचार्य्य-व्यासपदवीञ्चाऽलब्ध । १९३७ वर्षे

---

† काले जायते इत्यर्थे 'प्रावृट्शरत्कालदिवां जे' इति सूत्रेणा ऽलुक्समासे कृते कालेज इति संस्कृत्रिमपदमप्यवसेयम्

क्षायामनायासेनैव प्राथम्यं भेजे। कलिकातायामस्य सनातनधर्म्मविषयेऽष्टाविंशतिर्व्याख्यानानि जातानि। अयं चतुर्विंशत्यां कलासु (Minutes) शतश्लोकीनिर्म्माणक्षमतावत्त्वाद् 'घटिकशतक' पदेन सह रजतपदं महिष्टश्लोकञ्च प्राप। १९४३-४९ वत्सरे जीविकां कृत्वाऽपि ऋणबाधित एवाऽविक्त। १९४८ वत्सरे 'बिहारीविहार' पुस्तकं व्यरचत्। १९५० देशाऽटनं कृत्वा भारतरत्न-भारतभूषण-शताऽवधानाद्यनेकोपाधींल्लेभे। पटना गवर्नमेंट कालेजे शिक्षक-(Professor) तां लब्ध्वाऽपि १९५७ वै० (१९०० ई०) वत्सरे नवम्बरस्य १९ एकोनविंशयां तिथौ द्विचत्वरिंशद्वर्षवयस्कतायां देहं तत्याज। अस्य तनूजो राधाकुमारव्यासः। स च युवाऽवस्थायामेव एकं पुत्रं विरहय्य मृतः। शिवराजविजयः साहित्याचार्य्य-महोदयेन कदाचिद् १७९९ख्रिस्ताऽब्दे निर्म्मितो भवेद्। एतस्य प्रथम संस्करणम् १९०१ ऐशवीये वर्षे चन्द्रप्रभायन्त्रालये काश्यां मुद्रितम्।

### एतन्निर्म्मिता ग्रन्थाः।

अवतारमीमांसा, मूर्तिपूजा, विहारीविहारः, शिवराजविजयः; साहित्यनलिनी; सुकविसतसई, गद्यकाव्यमीमांसा, महाताशकौतुकपचासा, गुप्ताऽशुद्धिप्रदर्शनम्, क्षेत्रकौशलम्, रत्नाऽष्टकम्, उपदेशलता, ललितानाटिका, पुष्पवर्षा, कथाकुसुमम्, दुःखद्रुमकुठारः, धर्म की धूम, इत्यादयो ग्रन्था अनेन निरमायिषत।

### शिवराजविजयाऽऽलोचना।

पण्डिताऽम्बिकादत्तव्यासेन 'शिवराजविजयं'* निर्म्माय संस्कृतजुषां विदुषां समाजे सत्यममरकीर्तिरासादिता। व्यासमहोदयस्य पुस्तकमिदं वीक्ष्य तस्य साहितीसंहतिपटिमा निर्विघ्नशङ्कं द्योतते। तेन शिवराजविजयीयप्रथमसंस्करणस्य १३८ पृष्ठे 'यशस्विसिंहसुखेनमहादेवपण्डितस्य या प्रशस्तिः कारिता; सा सत्यम् अस्मिन्नेव कविवरे घटते। तत्रत्यं गद्यमुद्धराम्यत्र—

"दूतवर! साधु। तव भाषणभङ्गीमत्यन्तं प्रशंसामि। न तव भाषणे गौरवमवगूर्य्यते, पदवैधुर्य्यं ध्रियते, प्रसादो निरस्यते, संशयाऽऽपादकपदप्रचयो वा प्रचीयते। विलक्षणं तव पाटवमालापेषु, गहनगहनैः कोमलकोमलैर्मधुरमधुरैर्वाचां विलासैर्मनो हरसि; यदेव वक्तुं प्रवर्तसे, तन्मूर्तिमिव पुरतो विलिखसि; यदेव वक्तुमीहसे, तदासारप्रसारैरिव परितः प्लावयसि। धन्यः शिवो यस्त्वादृशान् कल्पनाकेसरिणो दूतत्वे नियुनक्ति। त्वदुक्ति श्रवणविरिरंसैव न भवत्यस्माकम्" इति। अस्मिन् गद्ये 'दूतवर!' इत्यपसार्य्य 'पण्डितवर व्यासमहाभाग!' इति योज्यम्। 'दूतत्वे नियुनक्ति' इत्यत्र कवित्वे न्ययुङ्क्त' इति परिवर्त्यम्। तद् इदमेव सर्व्वं कविवराऽम्बिकादत्तव्यासे घटते। तेनाऽत्र उत्प्रेक्षास्वभावोक्त्याद्यलङ्काराणां सीमा प्रदर्शिता। समासबहुलेऽप्यस्मिन् काव्ये न काठिन्यम्; प्रत्युत प्रसादपूरः पूर्ण एव चकास्ति। कविनेदं पुस्तकं सन्दभ्य शिववीरचरितञ्च सङ्कलय्य महाराजशिवराजोऽपि सत्यं कृतार्थीकृतः।

अस्मिन् भारतवर्षीय-यवनकालिक-दुर्दशायां पर्य्याप्तः प्रकाशः कृतः। शिवराजयशस्विनोरालापश्च मनोमोदकरः। माल्यश्रीककर्तृकं परमात्मचिन्तनमपि रामणीयकं धत्ते। अत्र रघुवीरसिंहस्य गौरसिंहस्य च चरितं सर्वरसान् दधत् सत् पुस्तकस्य सुषमां परिपुष्णाति। तन्निध्यानेन विस्मयः, प्रसन्नता, उत्साहः, आवेशश्च यौगपद्येनैव प्रादुर्भवन्ति। सौवर्ण्यांश्चरित्रमपि मनोमोहकरम्। अत्र अवरङ्गजीवस्य निर्दयता, कृतघ्नता, कपटपटुता, च सम्यङ् निदर्शिताः। क्रूरसिंहस्य क्रूरता हृदयं दन्दग्धि। शिवराजराजनीतिश्चाऽपूर्वमुल्लासं व्यनक्ति। किन्तु कथयामः; समालोचनशैलीशून्यानामस्माकं लेखनी अशक्ता कविवरगुणगणने; तत्पुस्तकं समीक्ष्य स्वयं तत्पाठका एव प्रमातुं क्षमेरन्नित्याशासा नो विद्ये। कानिचिच्च 'गच्छतः स्खलनं क्वाऽपि भवत्येव प्रमादत' इति न्यायेन स्खलनान्यत्र जातानि; परं तानि—"**एको हि दोषो गुणसन्निपाते निमज्जतीन्दोः किरणेष्विवाऽङ्कः**" इति नयेन न वैरस्यमापादयन्ति। इत्यलमतिप्रसङ्गेन।

* शिवराजविजयस्यैतिहासिकोपन्यासत्वाद् इहत्यः प्रायिकोदन्तस्त्वैतिहासिकः; क्वचित् क्वचिन्नियमाऽनुसारं स्वल्पतया कल्पितं वृत्तमपि सन्दृब्धम्।

# * सुप्रभातसारस्तवः *

" प्राच्यादिशः " प्रकटयत् परमं महत्त्वं, सत्त्वं समेधयदुदार-मपारशोभम् ।
धीशुद्धिमादिश-ददोषपथं च नित्यं निर्दर्शयज्जयति किञ्चन " सुप्रभातम् " ॥ १ ॥
वीता "विमोह" रजनी, विपुलावकाशा "आशाः" प्रकाशमभजन् जनता "प्रबुद्धा" ।
विश्वत्र रागमयता प्रसृता, विभाति "भास्व"त्प्रभावकलिते भुवि "सुप्रभाते" ॥ २ ॥
विश्वत्र रागमयता प्रसृता, विभाति "भास्व"त्प्रभावकलिते भुवि "सुप्रभाते" ॥ २ ॥
"जाड्यं" विलीनमखिलं, "कमलं" विकास माधत्त चारुचतुरा "लि"विलासमूलम् ।
"दोषाकरो"च्छ्रयकथा गलिता, निरस्तमालस्यलास्य मुपसेदुषि "सुप्रभाते" ॥ ३ ॥
दुर्ज्ञेयतामुपगता "पदवी पुराणी" भूयोऽभजन्नयनगोचरतां चिरेण ।
लोकैः परस्परमबोधितरां "स्वरूपं" भाग्येन भारतभुवोऽञ्चति "सुप्रभातम्" ॥ ४ ॥
"दुष्टग्रहाः" प्रशमिता, स्तिमिरावलीढा "दृष्टिः" प्रसादमधिगम्य पुनः क्षमाभूत् ।
लब्धं मुहुः स्वविधिबोधबलं जनेन श्रेयस्करे जगति जाग्रति "सुप्रभाते" ॥ ५ ॥
निःसंशयं समभवत्सुलभावगाहा "प्राची" समुज्ज्वलरसाथ "सरस्वती" सा ।
सद्धर्म्मधारणधुराऽभ्युदगात्पुनश्च श्लाघ्यं स्वरूपमुपबिभ्रति "सुप्रभाते" ॥ ६ ॥
"सच्छाखिभि"र्विकसितं, भुवि "सौमनस्यं" किञ्चिन्मनोहरमुदित्वरतामथासीत् ।
लब्धः क्षणो बत "सदागमसेवनस्य" प्रोज्जृम्भणं भजति सम्प्रति "सुप्रभाते" ॥ ७ ॥
आशैकलक्ष्य ! सुखदर्शन ! "सुप्रभात" ! नोपैषि कस्य सुजनस्य नमस्यतां त्वम् ।
येन त्वया युगपदेव तमोऽपनीय "प्रोज्जीवनः" प्रतिदिशं प्रथितः प्रकाशः ॥ ८ ॥

इति सुप्रभातशुभसङ्गतोदयात्क्रमशः पुनः कलयतात्र चेतनाम् ।
गिरिधारिणाऽलवरवासिनात्मनः प्रमदाप्तयेऽरचि "प्रभातमङ्गलम् " (?) ॥ ९ ॥

भट्ट गिरिधारीशर्म्मा, "कविकिङ्करः"
अलवरीयः ।

---

(७) शाखिनो वेदा वृक्षाश्च, सदागमो वायुः श्रेष्ठशास्त्राणि च । (८) प्रोज्जीवनो नवीनजीवनाधायी, तत्त्वेन तुल्यत्वमुभयत्रापि ।



# वसन्तविलासः ।

श्रीमन् ! वसन्त ! भवदागमनं विदित्वा
जम्बीर-नीप-बकुलार्जुन-चूतवृक्षाः ॥
सत्पल्लवांशुकमलं परिधाय सन्ति
प्रोत्तुङ्गमञ्जुलकरैरुपकर्त्तुकामाः ॥ १ ॥
तन्मञ्जरी-मधु-निपान-मदान्ध-भृङ्गाः
सञ्चालयन्त्यनुपलं शुभमञ्जरीस्ताः ॥
तद्वातवासितमहीपवनो न कुर्य्यात्
कान्ता-विहार-निपुणेष्वपि किन्तु तापम् ॥ २ ॥
मन्दानिलोऽपि मलयाचलसम्भवस्तान्
पूर्णेन्दु-पङ्कज-जयध्वज-पुष्पहारान् ॥
सर्वान् सहायकगणानवलम्ब्य तूर्णम्
सत्कर्त्तुमत्र भवतो नितरां विभाति ॥ ३ ॥
शृङ्गारमत्तवनिताधरपानलुब्धान्
कामाभिरङ्ककनकोत्तमतल्पसुप्तान् ॥
नोद्वेजयन्त्यतिमनोहरशब्दवृन्दैः
किं कोकिलास्तव समागमनं विलोक्य ॥ ४ ॥
हारं निधाय कुचकुड्मलशीर्षभागे
काञ्चीं विरच्य विमलाञ्च नितम्बदेशे ॥
सन्नूपुरं निजपदे विनिधाय नेत्रे
नो कज्जलं स्मरसुखं किमु यान्ति नार्य्यः ॥ ५ ॥
उत्फुल्ल-चूत-विमलाङ्कर-शातवाणो
गुञ्जद्द्विरेफ-निकुरम्ब-शरासनज्यः ॥
श्यामाऽबलारमणचित्तमलं विवेद्धुं
किं नागतः सबलधीर वसन्तवीरः ॥ ६ ॥

——श्रीजीतन झा शर्म्मणः



# कमलाकर-सिद्धान्ते विशेषता ।

ले०—श्रीबलदेव मिश्रः, ज्यौतिषाचार्यः,—



गणकाग्रगण्यस्य कमलाकरस्य मते वह्नावेवोष्णत्वमस्ति; रवेः किरणेषूष्णत्वं नास्तिः यच्च रवेः किरणे उष्णत्वमस्मदादिभिरुपलभ्यते तत्तु वह्नेरेव न स्वतोऽर्कतेजसः, अर्क किरणाः पृथिवीस्थपदार्थेषु किल संलग्ना भवन्ति; तदा पृथिवीस्थवह्निरेव स्वस्थानतो वहिरागत्य अर्ककिरणेषूष्णत्वमुत्पादयन्तीति ।

भूस्थाम्बुमृद्वह्नियोग एव सत उष्णत्वं वर्त्तते अर्ककिरणयोगादुष्णता न भवति अतएव सूर्यकिरणयोगतोऽपि नक्षत्रगोले ग्रहगोले चोष्णताया न प्रतीतिः ।

रविरश्मेस्तथाग्नेर्योगाद्योष्णताऽनुभूयते; तत्रापि योष्णता सा चेद्रविरश्मेरेवेति कथ्यते; तन्न यतो यत्र गोले वह्नेरभावस्तत्र रविकिरणयोगसत्त्वेपि उष्णताया अभावात् सूर्यतेजसि उष्णत्वं नास्तीति निश्चयः ।

अस्मदादिभिरपि प्रत्यक्षतो दृश्यते केचित्पक्षिणो दूरे आकाश अटन्ति, परन्तु तत्र तेषां पक्षदाहो न संपद्यते, तथा रवितेजसोऽसह्यत्वात् पृथिवीसन्निधौ

षतितयोरितिविष्णुः, तयोः समीपे न वेदाध्ययनं कार्यम् ॥ प्रणवेस्वपि वेदादित्वात्तदध्ययनमपि तैर्न कार्यम् ॥ अतएवाचार्यैः प्रपञ्चसारेऽभिहितम् ॥

अस्य तु वेदादित्वात् सर्वमनूनां प्रयुज्यते ह्यादौ इति । अतएव ग्रन्थारम्भे महर्षिभिः पौरुषेयग्रन्थेषु सर्वत्र ॐकारस्थाने अथ शब्दः प्रयुज्यते । तद्यथा

अथातोब्रह्मजिज्ञासा—अथातो धर्मजिज्ञासा- अथातो हिमशैलाग्रे देवदारुवनालये इत्यादि ॥

मङ्गलापरपर्यायाथशब्दसमानार्थक ॐकारः प्रयोक्तव्यः । नच प्रयुज्यते ततो व्यज्यते श्रुत्यादौ ॐकारस्य प्रयोगः पौरुषेयग्रन्थस्य चादावथशब्दस्य माङ्गलिकत्वञ्चोक्तमुभयोः शिष्टवचनेन—

ॐकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणो मुखात् ॥
कण्ठं भित्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ ॥

व्यवस्था चात्रेत्थम्-सर्वानुरोधेन कार्य्या ।

वेदाध्ययनविषये स्पष्टमेवानधिकारः । तदर्थज्ञाने तदनुष्ठाने तच्छ्रवणे च । तथा केवलप्रणवोपदेशेच तस्य वेदसारत्वात् । तथा चोक्तं तैत्तरीयोपनिषदि-

यश्छन्दसामृषभो विश्वरूपश्छन्दोभ्योध्यमृतात्सम्बभूवेत्यादि ।

यः ॐकार श्छन्दसा वेदानां मध्य ऋषभः श्रेष्ठः सर्ववेदेभ्योऽमृतात्-अमृतमयेभ्यस्सारभूतो बभूव। दध्नः सारभूतं नवनीतमिव । अतो वेदे शूद्राणामनधिकारित्वात् केवले प्रणवेप्यनधिकारः । परन्तु-ऋगृग्यजुषं स्वयमृक्त्वेऽपि यजुर्मन्त्रपाठात् यजुर्वेदत्वव्यपदेशेन पूर्वमीमांसायामुपांशूच्चारणमुपांशु यजुषेति बोधितं व्यपदिष्टम् । यथा तत्र यजुर्धर्म उपांशुधर्मः ऋचि क्रियते, तथात्र पुराणश्रवणे पुराण द्वारा वेदार्थज्ञाने तदनुष्ठाने सप्रणवपुराणतन्मन्त्रश्रवणे च शूद्रस्याप्यधिकारः । तथा चोत्तरमीमांसायां प्रथमाध्यायस्य तृतीयपादे ३८ सूत्रे तद्भाष्ये चोक्तम्-तथाहि—

श्रवणाध्ययनार्थप्रतिषेधात्स्मृतेश्च । ४८ ।

इतश्च न शूद्रस्याधिकारः । यदस्य स्मृतेर्वेदश्रवणप्रतिषेधो वेदाध्ययनप्रतिषेधस्तदर्थज्ञानानुष्ठानयोश्च प्रतिषेधः शूद्रस्य स्मर्यते । श्रवणप्रतिषेधस्तावत्—"अथास्य वेदमुपशृण्वतस्त्रपुजतुभ्यां श्रोत्रप्रतिपूरणम् । पद्युहवा एतच्छ्मशानं यच्छूद्रस्तस्माच्छूद्रसमीपे नाध्येतव्यमिति च । अतएवाध्ययनप्रतिषेधः । यस्य समीपेऽपि नाध्येतव्यं भवति, स कथमश्रुतमधीयीत, भवति च वेदाध्ययने जिह्वाच्छेदो धारणे शरीरभेद इति । अतएव च अर्थात्-अर्थज्ञानानुष्ठानयोः प्रतिषेधो भवति न शूद्राय मतिं दद्यादिति द्विजातीनामध्ययनमिज्यादानमिति च । येषां पुनः पूर्वकृतसंस्कारवशाद्विदुरधर्मव्याधप्रभृतीनां ज्ञानोत्पत्तिस्तेषां न शक्यते फलप्राप्तिः प्रतिषेद्धुं ज्ञानस्यैकान्तिकफलत्वात् । श्रावयेच्चतुरोवर्णान् इति चेतिहासपुराणाधिगमे चातुर्वर्ण्यस्याधिकारस्मरणाव । वेदपूर्वकस्तु नास्त्यधिकारः शूद्राणामिति स्थितम् । इति शांकरभाष्यम्-मनुरप्याह—

अधीयीरंस्त्रयो वर्णाः स्वकर्मस्था द्विजातयः ॥
प्रब्रूयाद्ब्राह्मणस्तेषां नेतराविति निश्चयः ॥

इदं स्मृतिवचनं किं त्रैवर्णिकानां वेदाध्ययनं विधत्ते-आहोस्वित् वेदातिरिक्ताध्ययनमिति । सामान्यत उभयोरध्ययनविधानं युज्यते कर्मविशेषा-

श्रवणात्-इति यदुच्यते तन्न, वेदाध्ययनविधिस्त्रैव-र्णिकानां वेदग्रहणार्थं पूर्वमेव द्वितीयाध्याये; कथितः। गृहीतस्य वेदस्य विस्मरणमपि दर्शितम् ।

स्वाध्याये नित्ययुक्तः स्याद्दैवे चैवेह कर्मणि
दैवे कर्मणि युक्तो हि बिभर्तीदं चराचरम् ॥३।७५॥

तथा च दशमाध्याये पुनरध्ययनविधिः । अधीयीरन्निति न युज्यते । अप्राप्तप्रापणो हि विधिः । अयंहि पूर्वतः प्राप्त एव तर्हि तदस्तु वेदातिरिक्त विषयाध्ययनविषयविधिः । तदपि न, तथाहि सति अदृष्टं स्वीक्रियेत वेदाध्ययनवत् काव्य-नाटकाद्यध्ययनेष्वपि ब्रह्मचारिनियमाचरणं स्यात् । ( आख्यातोपयोगे ) इति पाणिनिसूत्रेण तदध्यापयितुरपादानत्वमपि स्यात् इष्यते च नटस्य गाथां शृणोति-इतिवत् देवदत्तस्य काव्यनाटकादीन् शृणोति नियमपूर्वकाध्ययने तदपादानत्वस्योदाहरणमुपाध्यायादधीते । इति वेदाध्ययनविषय एवेष्यते । अतः अश्रुतमपि कर्म वेद इति योग्यतया संबध्यते । तत्र विधिर्न युज्यते पूर्वमेव-तत्प्राप्तेः तेनानुवादोऽयम् । स चानुवादः संकीर्ण-जातौ वाच्यायां तस्याश्च वर्णाभ्य उत्पत्तेः । युज्यते एव ततः पूर्वम् । निष्कर्षस्तु वेदातिरिक्तपुराण नाटकाध्ययनं गुरोः सकाशात् श्रवणरूपम् वेदा-नधिकारिणः शूद्रादयोऽपि कुर्युरिति । इममेव निष्कर्षं दशमाध्यायस्य शूद्रवृत्तवर्णनावसरे स्ववृत्या जीवनमपि धर्म इति धर्मप्रसंगात् अन्यदपि किञ्चिद् शूद्रविषये मनुर्बोधितवान्—

न शूद्रे पातकं किञ्चित् न च संस्कारमर्हति ।
नास्याधिकारो धर्मेऽस्ति न धर्मात्प्रतिषेधनम्

अस्यार्थः—लशुनादिभक्षणेन शूद्रे न किञ्चित् पातकं न ब्रह्मवधादावपि । अनेन वचनेन शूद्रस्य न किञ्चित् पातकं भवति इति वक्तुमुचितम् । तत्र तस्य प्रायश्चित्तोपदेशात् । उपनयनादिसंस्कारं नार्हति, अमन्त्रतः संस्कारान् शूद्रजातीये निर्दिष्टाँ-श्चार्हति

अस्य शूद्रस्य धर्मे स्नानोपवासदेवतार्चनादौ न नित्योऽधिकारः, तेनाकरणे न प्रत्यवैति येषु स्नानो-पवासव्रतादिषु नित्याधिकारो नास्ति अकरणे प्रत्यवायाभावस्ताद्दृशेभ्यो धर्मेभ्यो न प्रतिषेधः ॥

तथा अन्यदपि—मनु० १२७—

धर्मेप्सवस्तु धर्मज्ञाः सतां वृत्तमनुष्ठिताः ।
मन्त्रवर्जं न दुष्यन्ति प्रशंसां प्राप्नुवन्ति च ॥

प्रकृतत्वात् शूद्रा इतिविशेष्यमध्याहर्त्तव्यम् । मन्त्रवर्जमिति पुराणादिश्रवणे न दुष्यन्ति इति सूचयति तच्छ्रवणं प्रत्युत प्रशस्तमिति बोधयति। तथा अपरमपि मनुवचनं तत्रैव—

यथा यथा हि सद्वृत्तमातिष्ठत्यनुसूयकः ।
तथा तथेमं चामुञ्च लोकं प्राप्नोत्यनिन्दितः,

अस्यार्थः—परगुणानिन्दकः शूद्रो द्विजात्याचार निषेधरहितं यथा यथानुतिष्ठति, तथा तथा जनैः निन्दितः इह लोके उत्कृष्टः स्मृतः स्वर्गादिलोकं च प्राप्नोति, तस्मात्तेषामुत्कर्षेऽमत्सरैर्द्विजैर्भाव्यम् धार्मिके लौकिके वा शास्त्राविरुद्धे । परन्तु पत वासाभिरवसेयम्, यत्

अस्वर्ग्यं लोकविद्विष्टं धर्म्यमप्याचरेन्नतु,

अस्याः स्मृतेरुदाहरणं वक्तव्यं तथा च धर्म मपि लोकविद्विष्टं यथा न भवेत् तथोपदेष्टव्यम्

उपदेश्यैरपि जनताऽविरोधेनैव शास्त्रसम्मत उपदेश्य आचरणीयः । अन्यथा लोकविद्विष्टस्य धर्म्यस्याप्याचरणेऽस्याः स्मृतेर्निर्विषयता स्यात्तच्च नेष्यतेऽस्माभिः स्मृत्यादरवद्भिः श्रद्धालुभिरास्तिकैः । अतो विविच्य सदसच्छूद्रानुपसन्नानुपसन्नान धर्मोपदेशाय यतितव्यम् ॥




[ ले०—श्रीजगन्नाथशर्मा वाजपेयी, आयुर्वेदाचार्यः ]

यस्याङ्गमेकमखिलस्य शिवः स्वतन्त्रः,
सिद्धः समादिशदनुत्तमसूततन्त्रम् ।
ज्ञानाश्रयः स भगवाननवनाय सम्यग्,
वेदोज्ज्वलञ्जयतु नित्यमथायुषेऽयम् ॥१॥

श्रीमन्तो माननीया वाचकमहानुभावाः ।

अस्त्येतन्निवेदनीयमायुर्वेदसामर्थ्यवर्णनात् प्रागेव यद्यस्यादिमब्रह्मदक्षाश्विदेवेन्द्रभरद्वाजाग्निवेशधन्वन्तरिसुश्रुतप्रभृतयो देवदेवर्षिब्रह्मर्षिराजर्षयः सेवकाः ( आचार्याः ) विख्यातास्तस्य सामर्थ्यङ्कथमपि न मादृशेनाल्पज्ञेन शक्यते सन्दर्शयितुम्, किन्तु तस्यैव छिन्नानि सूत्राणि विलिखामीति वाचनश्रमोऽवश्यमूरीकार्यः ।

प्रकृतिसिद्धा सुखावाप्तिदुःखानवाप्तिसमीहा समेषाञ्जनानाम् । तपःस्वाध्यायविधूतकल्मषा मुमुक्षवो योगिनोऽप्यात्यन्तिकदुःखनिवृत्तिलक्षणमोक्षरूपं सुखमेवाभिलषन्ति ।

तल्लक्षणञ्च व्यावहारिकमायुर्वेद एवोपलभ्यते यदुक्तम्—

“सुखसंज्ञकमारोग्यं विकारो दुःखमेव च ।”

नैतल्लक्षणं केषाञ्चिदप्यरुचिकरम्, यतो ह्यारोग्यमेव धर्मार्थकाममोक्षरूपपुरुषार्थचतुर्वर्गसाधनम्, यदुक्तं चरके—

“धर्मार्थकाममोक्षाणामारोग्यम्मूलमुत्तमम्

एतादृगारोग्यरूपसुखोत्पत्तिरक्षणविधिविज्ञापनार्थमेव परमकारुणिकैर्महर्षिभिः सश्रममभिगम्योपदिष्ट आयुर्वेदः—

यदुक्तञ्चरके—

‘प्रयोजनञ्चास्य स्वस्थस्य स्वास्थ्यरक्षणमातुरस्य विकारप्रशमनञ्चेति’

महर्षिकणादेनापि प्रकारान्तरेणारोग्यमेव निदर्शितम्मूलमभ्युदयनिःश्रेयसयोः,

यथा चोक्तन्तेन पूर्वम्—

‘यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः’ तदनु—
‘तस्माद्धर्मप्रसूताद्द्रव्यगुणकर्मसामान्यविशेषसमवायानां साधर्म्यवैधर्म्याभ्यान्तत्वज्ञानान्निश्रेयसाधिगमः’ ।

कीदृग् वैशिष्ट्यम्वैशेषिकस्य धर्ममुपदिशन् द्रव्यगुणादीनां साधर्म्यवैधर्म्याभ्यान्तत्वज्ञानमुपदिदेश । अत एवानुमीयते यदयमपि ज्ञानपूर्वकस्वधर्मसेवनविधर्मपरिवर्जनमेवोपदिशति ।

एतदेव वैशिष्ट्यम्वैशेषिकदर्शनाद्द्रदृश्यत आयुर्वेदे स्पष्टतया—

यदुक्तञ्चरके—

मह र्षयस्ते ददृशुर्यथावज्ज्ञानचक्षुषा ।

सामान्यञ्च विशेषञ्च गुणान् द्रव्याणि कर्म च ।
समवायञ्च तज्ज्ञात्वा तन्त्रोक्तं विधिमास्थिताः ।
लेभिरे परमं शर्म जीवितञ्चापि निर्गदम् ।

सर्वतोभावेन साम्यस्पदार्थविनिश्चयविषयेऽ-त्रायुर्वेदस्य वैशेषिकेण, यतस्तत्रापि षट्पदार्थाः द्रव्यगुणकर्मसामान्यविशेषसमवायरूपाः, अत्रापि-त एव । केवलन्तन्त्रोक्तञ्चिविधिमास्थिता इत्येतद् स्पष्टीकरणमेव विशिष्टम् ।

एवमारोग्यस्य धर्मार्थकाममोक्षसाधकत्वे नि-र्णीते कथन्तत्प्राप्यते संरक्ष्यते वेति सुतरां सञ्जा-यते जिज्ञासा । अतस्तन्निर्दिश्यते । तथा च वाग्भटे ।

कालार्थकर्मणां योगो हीनमिथ्यातिमात्रकः ।
सम्यग्योगश्च विज्ञेयो रोगारोग्यैककारणम् ॥

अयम्भावः—कालार्थकर्मणां हीनमिथ्यातिमात्रको योगो रोगैककारणम्, तेषामेव सम्यग्-योग आरोग्यैककारणमिति । चरके सम्यग्योग एव सुखकारणमित्युक्तम् । तथा हि—

" सुखहेतुर्मतस्त्वेकः सम्यग्योगः सुदुर्लभः " ।

इत्थञ्च सुखहेतुः सम्यग्योगोऽपि दुर्ज्ञेयस्तस्य सम्यक्तया प्रतिपादनमायुर्वेद एव कृतमितीहायु-र्वेदलक्षणमेव निर्दिश्यते, तद्यथा चरके—

हिताहितं सुखं दुःखमायुस्तस्य हिताहितम् ।
मानञ्च तच्च यत्रोक्तमायुर्वेद स उच्यते ॥

अयम्भावः—यस्मिन् शास्त्रे हितमायुरहित-मायुःसुखमायुर्दुःखमायुस्तथा तस्यायुषो हिताहिते मानञ्च लक्षणतो यत्रोक्तन्तदायुश्च स आयुर्वेद उच्य-ते, तत्र पूर्वमायुषो लक्षणम् यथा—

शरीरेन्द्रियसत्वात्मसंयोगो धारि जीवितम् ।
नित्यगश्चानुबन्धश्च पर्यायैरायुरुच्यते ॥

इत्थं शरीरेन्द्रियसत्वात्मनां संयोग एवायुः शब्देनोच्यते । ततो हितमायुर्निरुच्यते, सामान्य-तस्तु यदायुर्हिते कर्मणि परोपकृतिगुरुवृद्धार्चना-द्युपयोगमवाप्नोति तदेव हितम्, यदुक्तं चरके-

"हितैषिणः, पुनर्भूतानां परस्वादुपरतस्य, सत्य-वादिनः, शमपरस्य, समीक्ष्यकारिणोऽप्रमत्तस्य, त्रिवर्गम्परस्परेणानुपहतमुपसेवमानस्य, पूजार्हस-म्पूजकस्य, ज्ञानविज्ञानोपशमशीलवृद्धोपसेविनः, सुनियतरोषरोगेर्ष्यामदमानवेगस्य, सततं विविध-प्रदानपरस्य, तपोज्ञानप्रशमनित्यस्याध्यात्मविद-स्तत्परस्य, लोकमिमञ्चामुञ्चावेक्षमाणस्य, स्मृति-मतिमतोहितमायुरुच्यते अहितमतो विपर्ययेण ।"

अतो यथाहितमेव भवेदायुस्तथा प्रयतितव्यं शमिह चामुष्मिंश्चाभीप्सता पुरुषेण ।

सुखमायुः पुनस्तत्रैव—

"शारीरमानसाभ्यां रोगाभ्यामनभिद्रुतस्य विशे-षेण यौवनवतः, समन्वागतबलवीर्ययशःपौरुष पराक्रमस्य, ज्ञानविज्ञानेन्द्रियार्थबलसमुदाये वर्तमा-नस्य, परमर्द्धिरुचिरविविधोपभोगस्य, समृद्धसर्वा-रम्भस्य, यथेष्टविचारिणः, सुखमायुरुच्यते । असुखमतो विपर्ययेण ।"

कृतेऽनेन लक्षणेन समन्वये भारतीयानामसुख-मेवायुरधिकैरंशैरुपलभ्यत इतिसुखायुर्निवर्तनाय विधेयो यत्नो विशेषेण, सच यत्न आयुर्वेदोपदेश-श्रवणपूर्वकन्तथानुष्ठानमेव, यदुक्तं वाग्भटेन—

आयुः कामयमानेन धर्मार्थसुखसाधनम् ।

आयुर्वेदोपदेशेषु विधेयः परमादरः ॥

तत्रायुष्याण्यनायुष्याणि च द्रव्यगुणकर्माणि समग्रेणोच्येत शास्त्रेण, ततश्च कानिचित्सारतयोपदिष्टानि विलिख्यन्ते, तद्यथा—

आयुष्यम्भोजनञ्जीर्णे वेगानाञ्चाविधारणम् ।
ब्रह्मचर्यमहिंसा च सद्वृत्तस्यानुवर्तनम् ॥

सूत्ररूपेणत्वस्मिन्नेवैकस्मिन् श्लोके समाप्यते सर्वमायुष्यन्द्रव्यगुणकर्मादि, तद्व्याख्यानञ्च । तथाहि पूर्वस्मिन्नन्ने भुक्ते जीर्ण एव भुञ्जीत । पूर्वान्नजीर्णता परिज्ञानञ्च वाग्भटतः कार्यम् । तथाहि—

प्रसृष्टे विण्मूत्रे हृदि सुविमले दोषे स्वपथगे,
विशुद्धे चोद्गारे क्षुदुपगमने वातेऽनुसरति ।
तथाग्नावुद्रिक्ते विशदकरणे देहे च सुलघौ,
प्रयुञ्जीताहारं विधिनियमतः कालः स हि मतः

इत्थं काले भोजनमायुष्याणाम्प्रथमम् । तदनु-वेगानाममूत्रपुरीषादीनामविधारणम् । वेगावरोधेनोदावर्तशूलहिक्कादिसहिता राजयक्ष्मसदृशा जायन्ते दुष्टा रोगाः । राजयक्ष्मणस्तु प्रथमो हेतुर्वेगावरोध एव, यथा चोक्तम्—

वेगरोधात्क्षयाच्चैव साहसाद्विषमाशनात् ।
त्रिदोषो जायते यक्ष्मा गदो हेतुचतुष्टयात् ॥

तस्माद्वातमूत्रादीनां वेगः कदापि नावरोद्धव्यः । क्रोधलोभादीनान्त्ववश्यन्धारणीयो वेगः, यथा चोक्तम्—

धारयेत्सततं वेगान् हितैषी प्रेत्य चेह च ।
लोभेर्ष्याद्वेषमात्सर्यरागादीनां जितेन्द्रियः ॥

तृतीयोहेतुर्ब्रह्मचर्यं स्त्रीषु संयमो, वेदाध्ययनञ्च परस्परमेतद्द्वयमभिसम्बन्धि, यतो हि विद्यायाः फलं विनयः, यदुक्तं केनचित्—

विद्या ददाति विनयमित्यादि । सच ब्रह्मचर्येणैवाप्यते । यथा चोक्तम्

जितेन्द्रियत्वं विनयस्य कारणम्,
गुणप्रकर्षो विनयादवाप्यते ।
गुणाधिके पुंसि जनोऽनुरज्यते,
जनानुरागात् खलु सर्वसम्पदः ॥

न केवलं विनयोपपादकमेव ब्रह्मचर्यङ्किन्तु प्रधानं शरीरधारकम्, यदुक्तं वाग्भटेन

आहारशयनब्रह्मचर्यैं र्युक्त्या प्रयोजितैः ।
शरीरन्धार्यते नित्यमगारमिव धारकैः ॥

इत्थं ब्रह्मचर्यम्प्रधानतममायुष्याणाम् ।

साम्प्रतिकमल्पायुष्ट्वमल्पेनैव कालेन यथा भवेत् तिरोहितं ब्रह्मचर्योपासनेन तथा प्रयतितव्यमखिलैर्मानवैः ।

चतुर्थमायुष्यङ्कर्माहिंसा । यदुक्तम्-"अहिंसा प्राणवर्धनानामुत्कृष्टतया" अहिंसाबलन्तु भारतीयानाञ्चिरपरिचितं सम्यगभ्यस्तञ्चेति साम्प्रतमप्यहिंसाबलमेवासृत्य हीनशक्तिकैरपि भारतीयैरेतादृश्याः बृटिशराज्यसत्ताया विरोधः कर्तुं शक्यते ।

पञ्चमं कारणं सद्वृत्तानुष्ठानम्, तच्चानुष्ठानं युगपत्सम्पादयत्यर्थद्वयम्-आरोग्यमिन्द्रियविजयञ्च । तत्र सतां वृत्तं सद्वृत्तन्तच्च तैराचरितमुपदिष्टम्वा । तत्राद्यन्त्वितिहासाद्यनुशीलनरूपेण महताऽयासेन शक्यतेऽवगन्तुमतोद्वितीयमेव सुगमम् ।

तस्यैवैकम्परमोपयोगिनमंशन्निर्दिशामि । तद्यथा-देवगोब्राह्मणगुरुवृद्धसिद्धाचार्य्यानर्चयेत्, सर्व-

प्राणिषु बन्धुभूतःस्यात्, नानृतं ब्रूयात्, न कुर्यात्पापम्, न पापेऽपि पापी स्यात् । ( पापं कर्तुः साहाय्यङ्कृत्वा पापभाङ् न भवेदित्यर्थः),

ब्रह्मचर्यज्ञानदानमैत्रीकारुण्यहर्षोपेक्षाप्रशमपरश्च स्यादित्यादि ।

सद्वृत्तमेतदनुष्ठीयमानमवश्यमापादयति दीर्घमायुः । सद्वृत्तानुष्ठानमेवाल्पायुष्ट्वकरम्, यदुक्तम्मानवे धर्मशास्त्रे—

अनभ्यासेन वेदानामाचारस्य च वर्जनात् ।
आलस्यादन्नदोषाच्च मृत्युर्विप्रान् जिघांसति ॥

तस्मात्सद्वृत्तं सर्वं सर्वैः स्मृतिमास्थाय सर्वदानुष्ठेयम् ।

इत्थञ्चैकैकोऽप्युपदेशः सम्यगनुष्ठितः सकलवाञ्छासिद्धिप्रदो भवितुं शक्नोति । सकलस्यायुर्वेदस्य सामर्थ्यं वक्तुं कः शक्नोति । नचायुर्वेदस्यास्ति पारमपि, यथा चोक्तं चरके—

न चैव ह्यस्त्यायुर्वेदस्य पारम्, तस्मादप्रमत्तः शश्वदभियोगमस्मिन् गच्छेदित्यादि अतएव नायुर्वेदः परिसमाप्यते केवलं संस्कृतभाषामयेष्वेव ग्रन्थेषु, किञ्च तस्य व्यापकलक्षणेन सञ्जायते सर्वासां चिकित्सानामवरोधः ।

एतादृशस्यायुर्वेदस्य सामर्थ्यमाश्रित्यैवामरेश्वरादिपदवीमुपगतवन्तोऽस्याचार्याः । आधुनिकेतिहासावलोकनेनापि प्रत्यक्षीकर्तुं शक्यते आयुर्वेदमाहात्म्यम् ।

समृद्धस्यैतादृशस्य वृटिशराज्यस्य संस्थापकावपि द्वौ हैमिल्टनबाउटननामकावांग्लवैद्यावेवास्ताम्, तयोश्चिकित्सया सन्तुष्टेन यवनेश्वरेण जहांगीरेण दत्तोऽधिकारोऽबाधव्यापारस्य वङ्ग-देशे ईष्टइण्डिया कम्पनीनामकाँग्लसमित्यै । रूसराज्यकान्तावप्यासीद्विशेषेण साहाय्यन्तत्रत्यवैद्यानाम् ।

परञ्चैतादृक् सर्वमपि श्रेयः सद्वैद्यैरेवलस्यगवाप्तुं शक्यते न केवलन्नामधारिभिः यदुक्तम्—

प्रयोगज्ञानविज्ञानसिद्धिसिद्धाः सुखप्रदाः ।
जीविताभिसरास्ते स्युर्वैद्यत्वन्तेष्ववस्थितम् ॥

इत्थमायुर्वेदज्ञानपूर्वककर्मकरणेन न केवलमैहिकमपि च मोक्षरूपम्पारलौकिकमपि श्रेयः सुलभम् । तस्मात्सर्वैः शमिह चामुष्मिंश्चाभीप्सुभिरवश्यमध्येयोऽनुष्ठेयश्चेति ।



# प्राप्तपत्राणि ।

## निवेदनम् ।

अस्यां गीर्वाणवाण्यां पत्रप्रकाशनेन संस्कृतज्ञानपि लौकिकान् चिकीर्षवः सम्पादक-महोदयाः । भुवि कदाचित् इतस्ततः पर्यटन्तो वहवो माननीयाः सत्पुरुषाः ( हुयेन सांगप्रभृतयः ) यदा विश्वजनीनं भारतं समागताः, तदा वर्णाश्रमधर्मसाहाय्येन परमत्यागिनां विद्वद्वराणां ब्राह्मणानां नेतृत्वे संगच्छन्तीं भारतीयसुसंस्कृतिमवलोक्य चकिताः साश्चर्यं जगदुः, "एषैव सभ्यता जगता अनुकरणीयेति"; परञ्च सत्सु धुर्येषु बहुषु विद्वद्वरेषु द्विजेषु साम्प्रतं भारतीयानामहरहो नैतिकं सामाजिकञ्च पतनं दृष्ट्वा दोदूयते चेतः, तत्र पारतन्त्र्यात् नैतिकपतनस्य स्वराज्यमन्तरा न काऽपि अमोघा युक्तिः, तदर्थं बहव आधुनिका ऋषिदेशीया नेतारः प्रयतन्ते । परञ्च सामाजिकपतने हेतुत्वन्तु एषां धर्माचार्याणामेव । अस्माकं

पुण्यभूमिषु ( तीर्थेषु ) उपासना गृहेषु ( देवालयेषु ) गृह कृतिषु ( विवाहादिसंस्कारेषु ) केवलं ब्राह्मणकुलोद्भवा, अशिक्षितत्वाच्छास्त्रदृष्ट्या अब्राह्मणाः, छद्मिनश्च ते धर्म-व्याजेन ( गया-जगन्नाथ-प्रभृतिषु तीर्थेषु ) पितृणामुद्धाराय मोक्षाय च, ग्रामीणप्रजाभ्यः, असंख्यवित्तं संगृह्य वेश्या-मदिरा-द्यूतप्रभृतिनिकृष्टकर्मसु तोयवत् प्रक्षिपन्ति, तन्निषेधे न विदुषां सुधीः प्रस्फुरति । किन्तु येनकेनोपायेनोदरं पालयन्तः, प्रसुप्ता इव कालं यापयन्ति, यदाकदाचित् समयपटुभिराधुनिकैर्देशभक्तैर्नृभिः कस्यचित् सामाजिक-दुर्बन्धनस्य दूरीकरणाय सदुद्योगः क्रियते, यथा इदानीन्तने, प्रजाप्रतिनिधिविचारालये ( एसेम्बली ) बालविवाह निषेधाय, द्वादशवर्षवयस्का कन्या, षोडशवर्षवयस्कः कुमारो विवाहार्ह इति प्रजाहितैषिभिः प्रतिनिधिभिः समुपस्थापितमस्ति, तदा गृह्यसूत्रादिधर्मग्रन्थेषु इत्थं निर्णये सत्यपि धर्मस्तम्भरूपा अहरहो मनुस्मृत्यादिषु तामसदानं विगर्हितम्, विद्याविक्रयः सर्वथा निन्द्य इति पठन्तः, पाठयन्तस्तत्कर्तुमक्षमा अपि आत्मानं धर्माचार्यमन्यमानाः, एतच्छास्त्रमर्यादाविरुद्धं कदाऽपि न करणीय-मिति स्थाने स्थाने प्रस्तुवन्ति, एतद् महदनिष्टकरं खलु भारतीयानाम् । अतः सविनयं प्रार्थये, यत् निजपत्रद्वारा विदुषां, सामाजिकदुर्बन्धनानां बालविवाह-वृद्धविवाहा-दीनाम् तीर्थेषु पुरोहितानाम् ( पण्डा ) अशिक्षित ब्राह्मणद्वारा वा कर्मकाण्ड-विधानादीनां निराकरणे प्रयत्न-नीयम्, येन महान् देशोपकारः यात् ।

भगवानदीनमिश्रः
(बहराइचवास्तव्यः)



# संस्कृतसमाचाराः

## विद्यावैजयन्ती ।

सुविदितमिदं भवादृशां यत्साम्प्रतम्प्राचीनसंस्कृतनिबन्धानां कटुकीटपटलदंशनेन वा, निलयानलकीलकवलनेन वा, पाथःपृषतपातेन वा विलोपः क्रमादवलोक्यते । क्वचन प्रकाशिता अपि ते मूल्यबाहुल्यात्, यावदभिलषितकलावैकल्याच्च न सन्तोषमुपजनयन्ति मानसेषु प्रणयिनाम् । अनुपपत्तिसन्ततिमेतादृशीमनुसन्धाय विदूयमानमानसैः कतिवरैरसकृदुत्साहिता हिन्दूविश्वविद्यालयवेदान्त-प्रधानाध्यापकाः ख्यातवैदुष्याः श्रीबालकृष्णमिश्र-महाशयाःपुरोदीरितत्रुटिविघटनाय "*विद्यावैजयन्ती*" समभिधानाया मासिकपत्रिकाया विकस्वरानुकम्पाभिः सम्पादनभारं स्वीचक्रुः । महाभाग्यमिदं यत्सुरसरस्वतीं समुन्नेतुमिमे कार्यावरुद्धसमया अपि बद्धपरिकराः समभूवन् ।

अथैवमपि पत्रिकायाः प्रकाशस्तदा स्यात्, यदि भवन्तस्तत्रानुग्राहकतया ग्राहकतया वा सहायतां सहर्षं दर्शयेरन् । अस्याश्च सकललोकसौलभ्यार्थं रूप्यकत्रयमेव वार्षिकं मूल्यम् । मञ्जुलतायां तु 'क्रिया केवलमुत्तरमि'ति नास्ति तस्यामिदानीं विशेषतो वक्तव्यमिति निवेदयन् विरमति—

स्थानम्—
संस्कृतसाहित्यसेवासदनम्,
हिन्दूविश्वविद्यालयः, काशी ।

हरिशङ्करशास्त्री
(वेदान्तविशारदः)
रघुनाथशास्त्री
( तर्कतीर्थश्च )

# संस्कृतच्छात्रसङ्घस्य विशिष्टाधिवेशनम् । ❋

चैत्रशुक्लप्रतिपदि ( २२ मार्च, २८ ) स्थानीय-'टाउनहाल' नाम्नि नगरसभामण्डपे सायं चतुर्वादनतः संस्कृतच्छात्रसङ्घस्य विशिष्टाधिवेशनं प्रभूतानां संस्कृतच्छात्राणां समारम्भे सम्पन्नम् । यद्यपि सभापतेरासनं महामहोपाध्यायैः श्रीदेवीप्रसादशुक्लकविचक्रवर्तिमहोदयैः समलङ्करणीयमासीत, तथापि विलम्बात् श्रीमन्तः श्रीदामोदरशास्त्रिणो भिषगाचार्याः, साङ्ख्य-सर्वदर्शनतीर्थ-विद्याभूषण-महोदयाः सभापतेरासनमलमकुर्वन् । ततश्च मङ्गलान्तरं छात्रसङ्घस्य प्रधानमन्त्रिणा श्रीमता केदारनाथशर्मणा सङ्घस्यावश्यकताविषये, उद्देश्यानां विवरणे च सुदीर्घम्, हृदयङ्गमम्, मर्मस्पृक् भाषणं प्रदत्तम् । ततश्च सभापतिमहोदयैः प्रथमोऽयं प्रस्तावः समुपस्थापितः—

१—एष खलु संस्कृतच्छात्रसङ्घः, साम्प्रतमेवाकस्मिकरोगैरकाल एव कालकवलितानां संस्कृतच्छात्राणामकालमरणे हार्दिकं शोकं प्रकटयति, तथा तेषां कुटुम्बिभिः सह समवेदनां सहानुभूतिञ्च प्रदर्शयति ।

२.—एष संस्कृतच्छात्रसङ्घः, काशीस्थ-राजकीयसंस्कृतपरीक्षाधिकारिणः साग्रहमनुरुणद्धि यत्-आगामिवर्षमारभ्य परीक्षायां प्रतिदिनमेकैकमेव प्रश्नपत्रं तिष्ठतु । यतः सततं सप्तघण्टापर्यन्तं लेखनम्, भिन्नभिन्नानां ग्रन्थानां युगपदेव संधारणम्, परीक्षायां हानिकारकं भवति । कुत्रापि संस्कृताँगल-हिन्दीभाषादिपरीक्षासु नास्तीदृशः कुप्रबन्धः ।

अन्यच्च— संस्कृतदृष्ट्या परीक्षाकालोऽपि प्रातः सप्तवादनतो १० वादनं यावद्भवतु, येन छात्राः प्रातः विशुद्धस्य स्वमस्तिष्कस्य सदुपयोगं कुर्वन्तु । अन्यथा वर्तमानव्यवस्थया छात्राणां शारीरकी मानसिकी च हानिर्भवति ।

प्रस्तावकः—हीरावल्लभपन्तः

समर्थकः—श्रीकेदारनाथशर्मा, सारस्वतः

३—एष छात्रसङ्घः, संस्कृत-परीक्षाधिकारिणः अस्मिन् कृत्ये सन्तोषं प्रकटयति, यत् तैः छात्राणां प्रार्थनायां ध्यानं दत्वा परीक्षासमये वृद्धिः कृता इति । तथाताननुरुणद्धि च यत् ते साम्प्रतमास्तरणादीनां विविधपरीक्षात्रुटीनामपाकरणे च दत्तावधाना भवन्तु, छात्राणां कृते सर्वविधं सौलभ्यञ्च सम्पादयन्तु—इति ।

प्रस्तावकः—श्रीहरिचरणशर्मा ।

समर्थकः—श्रीमहादेवशास्त्री, साहित्याचार्यः ।

४—एष संस्कृतछात्रसङ्घः सर्वान् संस्कृतच्छात्रान् साग्रहं सानुरोधञ्च प्रार्थयते, यत् ते समाधिक—संख्यायां संस्कृतच्छात्रसङ्घस्य सदस्याः भवन्तु भावयन्तु चान्यान् । सङ्घस्य प्रस्तावानामुद्देश्यानाञ्च सार्वत्रिकं प्रचारं विधाय संयुक्तप्रान्तीय-संस्कृतच्छात्रसम्मेलनं सत्वरं संस्थापयन्तु । येन छात्राणां सङ्घशक्तिः सबला समुन्नततरा च भवेदिति ।

प्रस्तावकः—श्रीकेदारनाथशर्मा सारस्वतः

समर्थकः—श्रीलालनाथस्वामी



❋ च्छात्रसङ्घस्य सर्वमपि कार्यजातं हिन्दीभाषायामभूत् । अत्र खलु तद्विवरणमनूद्य प्रकाशितम् ।—छ० सं० ।

गढ़देशस्य विद्वत्समाजस्य प्रथमाधिवेशनम् :—

चतुराशीत्यधिकैकोनविंशतिशततमे वैक्रमेऽब्दे चैत्रकृष्णाष्टम्यां बुधवासरे गढ़देशे श्रीनगरे लक्ष्मीनारायणनाम्नि मन्दिरेऽभूत् महता समारोहेण । तत्र जनसमूहस्योपस्थितिरधिकाऽऽसीत् । गढ़देशस्थमान्यविद्वत्सु:—

डिम्मरसंस्कृतपाठशालायाः प्रधानाध्यापक व्याकरणाचार्याः पं० वासवानन्दशर्माणः, ऊषामठसंस्कृतपाठशालायाः प्रधानाध्यापकाः धर्मभूषण पं० महिमानन्दशर्माणः, देवप्रयागसंस्कृतपाठशालायाः प्रधानाध्यापकाः कविरत्न पं० भोलदत्तशास्त्रिणः, उत्तरकाशीकीर्तिसंस्कृतपाठशालायाः प्रधानाध्यापकः पं० सत्येश्वरानन्दशास्त्रिणः, श्रीनगरनिवासिनो राजकीयशालायाः संस्कृताध्यापकाः पं० भैरवदत्तशास्त्रिणः, अन्येऽध्यापका आङ्लच्छात्राश्च पं० ललिताप्रसादशर्माणः पं० विश्वेश्वरानन्दशर्माणः, पं० केदारदत्तशर्माणः, पं० तुङ्गेश्वरानन्दशर्माणः, पं० भोलादत्तभट्टशर्माणः, पं० दुर्गाविलासशर्माणः, पं० गोपालविलासशर्माणः, अन्ये प्रतिष्ठिता नागरिकाश्च भूयांसो विद्वांसः प्रधानब्राह्मणक्षत्रियादयश्चासन् ।

पूर्वं पं० बालमुकुन्दशर्मणा सभापतिनिर्वाचनार्थमवतरणिका विहिता । तत्र श्रीमतां लालामनोहरलालमहोदयानां सभापतित्वे समभूद्वार्षिकमधिवेशनं विद्वत्समाजस्य । तत्र प्रथमं संस्कृतपरीक्षादित्सुभिश्छात्रैरीश्वरस्य स्तुतिर्विहिता । अन्यैः कतिपयैश्छात्रैर्विद्यादिविषयेषु प्रदत्तं भाषणं देवभाषायाम् । धर्मभूषणैः श्रीमद्भिः पं० महिमानन्दमहोदयैश्च तदाशयो हिन्दीभाषायां श्राविनश्छात्रनियमाः सभोद्देश्याश्च विशदीकृताः । तदनन्तरं मुम्बापुरनिवासिनां सांप्रतं गुप्तकाशीस्थानमलङ्कुर्वाणानां श्रीमतां योगिदेवशर्मणां हिन्दुजातिसंस्कृतभाषाविषये जातं प्रभावशालि व्याख्यानम् ।

सर्वसम्मत्याऽधस्तनाः प्रस्तावाः स्वीकृताः ।

प्र० नं ( १ ) प्रतिवत्सरे गढ़वालविद्वत्परिषदोऽधिवेशनं श्रीनगरे परीक्षासमय एव भवेत् ।

प्र० नं ( २ ) गढ़देशीयानां संस्कृतपाठशालानां निरीक्षणार्थं डिष्ट्रिक्टबोर्डसभापतिः प्रार्थनीयः ।

प्र० नं ( ३ ) यत्र शालानामतः केवलं याचनया धनमुपार्जयन्ति विद्यार्थिनश्च परीक्षायां नो प्रवेशयन्ति, तत्र समुन्नतये संयुक्तप्रान्त ( यू० पी० ) संस्कृतपाठशालानां संस्कृताध्यक्षाः ( इन्सपेक्टरमहोदयाः ) प्रार्थनीयाः ।

अन्ते च श्रीमद्भिः पं० भैरवदत्तशास्त्रिमहोदयैः सभापतिमहोदयैश्च सर्वेभ्यः साधुवादाः धन्यवादाश्च प्रदत्ताः । एवमधिवेशनं समाप्तिमगमत् ।

३-४-२८ } निवेदकः विद्वत्समाज-मन्त्री—
बालमुकुन्द शर्मा

# सम्पादकीयम्

मिस् मिलर-शुद्धिः ।

साम्प्रतं सर्वत्र भारते मिस्मिलर-शुद्धिविषये महदान्दोलनं सञ्जातमिति जानन्त्येव प्रायः सर्वेऽपि शिक्षिता भारतीयाः। एतस्मिन् विषये केचन शुद्धिपक्षपातिनो नितरां मोमुद्यमानाः, तद्विरोधिनश्चात्यन्तं दुःखिताः सन्ति । हिन्दुसभयाऽपि तस्य

सहर्षं समर्थनं कृतमिति समाचारपत्रेषु पठितम् । वयमत्र विषये नितरां विरोधमाचरामः । नैषा शुद्धिः, शुद्धिः । यद्यपि वयं वर्तमानां समाज-दुरवस्थामालोच्य हिन्दुसमाजच्युतानां संस्कार्याणां पतितानां शास्त्रसम्मत-प्रायश्चित्तद्वारा पुनः संशोधनम्, तेषां च पृथग्जातिनिर्माणं सहर्षं समर्थयामस्तथापि नैतादृशीं शास्त्रविरुद्धाम्, समाज-विरुद्धाम्, नीति-विरुद्धाञ्च शुद्धिं समर्थयामः । यद्यपि रात्रिन्दिवं वेश्या-मद्यादिजघन्यकृत्य-निरता अकर्मण्या विलासवासनानिरता भारत-धर्म-कलङ्कभूताः केचन राजानः पाश्चात्यदेशेषु पिशाचिनीभिः पाश्चात्य-विलासिनीभिः सह विहृत्य नैकशो मुखे कालिमानं लापयन्ति, परं नैतादृशम हृदनुचितं समाज-विघातकम्, धर्मध्वंसकरं दुरभिनयं कृत्वा हिन्दुसमाजस्य मुखे मसीलेपनं कुर्वन्ति । साम्प्रतमिमे कुकामिनो मुक्तद्वारं स्वच्छन्दं यतस्ततः कामुकीराद्दाय शुद्धियन्त्रे संशोध्य यथेच्छमत्याचारं विधास्यन्ति । येन वर्णसङ्करता नृपतिसमाजे पदं न्यस्य भारतीयं गौरवम्, आर्यनरपतीनां महत्त्वं सर्वमपि विनाशयिष्यति । शनैः शनैः पाश्चात्यजातीनामिव सततविशुद्धेयमार्यजातिर्नजाने किं बीभत्सरूपं धारयिष्यति । चार्वाकशिरोमणयोऽस्माकं शास्त्रकास्त्वस्माकमेतादृशं पतनमभिलषन्त्येव । कामवासनापूर्त्यै जघन्यमिदं कार्यं हिन्दुसमाजस्य चिरसञ्चितं गौरवं विनाशयितुमलमिति वयं सर्वद्दृष्ट्या शुद्धिमिमां विरोद्धव्यामाकलयामः । शुद्धिकारणाच्चेदृशं बालिशत्वमुच्छृङ्खलत्वञ्च न कदाचिदपि मर्षयितुं प्रभवामः । नैतेन हिन्दूधर्मस्य समृद्धिः सम्भवेत्; प्रत्युत विनाश एव स्यात् ।

* * *

*विलम्ब-विनिवेदना ।*

सुप्रभातस्य विशिष्टाङ्कप्रकाशने भूयान् विलम्बः समजनीति विदितमेव पाठकानाम् । तस्मिन् परिश्रान्तैर्विश्रान्तिमभिलषद्भिरस्माभिरपि सुप्रभाता ध्यक्षेभ्यो विराम-ग्रहणं कृतमासीत् । अस्माकं मान्याः प्रणयिनः श्रीमन्तो व्यवस्थापक-महोदया अपि ग्रीष्मावकाशे परिभ्रमणार्थं गता आसन् । प्रियसुहृदः सूर्योदयसम्पादकाश्च मध्ये मध्ये विशिष्टकार्यव्यापृता आसन्निति ज्येष्ठाङ्को महता विलम्बेन सम्पन्नः, पाठकानां सविधे समुपसर्पतीति पाठकैर्ग्राहकैरनुग्राहकैश्च क्षन्तव्यम् ।

* * *

*सम्पादकः, लेखकाश्चावदधतु ।*

सुप्रभातस्य विशिष्टाङ्कः प्रायः सर्वेषां पत्रसम्पादकानाम्, लेखकानाम्, विदुषाञ्च सेवायां सादरं प्रेषितो विद्यते । कैश्चन विद्वद्भिः पत्रसम्पादकैश्च तस्य समालोचनम्, तद्विषये च स्वीयमभिमतं प्रकटीकृतम् । यैश्च नाद्यावधि स्वीया सम्मतिः प्रकटीकृता, ते त्ववश्यं सत्वरञ्च स्वीयेषु पत्रेषु, अथवा स्वतन्त्रतयाऽस्माकं सविधे स्वीयाममूल्यां सम्मतिं संप्रेष्य सुप्रभातं नूनमनुगृह्णन्तु । वयं तेषां सम्मतिमवश्यं प्रकाशयिष्यामः ।

* * * *

*जगद्गुरुः ।*

हिन्दी भाषायां संस्कृत विदुषां संस्कृतप्रचाराय, सनातनधर्म-प्रचाराय च नास्ति किमपि समीचीनपत्रमिति श्रावणीतः काशीस्थविदुषां हिन्दीभाषामयं जगद्गुरु-नामकं पत्रं प्रकाशमेष्यति । तस्य 'आदर्शाङ्कः' साम्प्रतं गुरुपूर्णिमायामेव प्रकाशितो विद्यते । एकानकस्य चिटिकां प्रेष्य ग्राहकत्वमभिषद्भिरनभिलषद्भिर्वा तत्पत्रं गृहीत्वाऽवश्यमेवावलोकनीयम् । अस्य खलु जगद्गुरोर्गौरवं महत्त्वं वैचित्र्यञ्च दर्शनेनैव प्रतीतं स्यात् । वस्तुतोऽयं जगद्गुरुरेव । अस्य निर्भीकता, स्पष्टवादिता, सत्यता, धार्मिकता, मनोहरता चावश्यं सुप्रभातपाठकैरेकवारमेकानकेनैव दर्शनीया । अस्य वार्षिकमूल्यम्-मुद्रा द्वयम् । प्राप्तिस्थानम्—सुप्रभात-कार्यालयः, काशी ।

# सुप्रभात-नियमाः ।

( १ ) सुप्रभातमिदं सौरमासस्यान्तिमे सप्ताहे प्रकाशितम्भविष्यति ।

( २ ) एतस्य वार्षिकम्मूल्यम्—समाजनियमानुसारं माननीयेभ्यः—१२) मुद्राः, सहायकेभ्यः—३) मुद्राः, छात्रेभ्यश्च १॥) मुद्रा—भविष्यति ।

( ३ ) अग्रिममासस्य प्रथमे पक्षे यस्य ग्राहकस्य सविधे पत्रं न गच्छेत्, तेन नूनं पत्रालये समन्विष्य कार्यालये पत्रं प्रहेयम् । तदा 'सुप्रभातं' प्रेषितं स्यात् । यदि ग्राहकाः पत्रं न प्रेषयिष्यन्ति, तदा कार्यालयो नोत्तरदायी भवेत् ।

( ४ ) पत्र-प्रेषण-समये ग्राहक-सङ्ख्या नूनं लेखनीया । अन्यथा पत्रमवलोकितमेव न स्यात् ।

( ५ ) अग्रिम-मूल्यमन्तरा सुप्रभातं न प्रदीयते, ग्राहकैर्धनादेशद्वारा ( मनिऑर्डर ) मूल्यं प्रेषणीयम् स्वीयः पूर्णसङ्केतश्च लेख्यः । वी० पी० द्वारा प्रेषणे तेषामेव समधिको व्ययः स्यात् ।

( ६ ) पत्रोत्तरमभिलषद्भिश्चटिका नूनं प्रेषणीयाः । अन्यथा पत्रोत्तरं न दीयेत ।

( ७ ) लेखकैरतिसरलभाषायां लेखाः प्रेषणीयाः, येन सर्वेऽपि पठितुमवगन्तुञ्च प्रभवेयुः ।

( ८ ) लेखाः पत्रस्यैकस्मिन्नेव पृष्ठे पार्श्वयोः स्थानं विहाय, सुस्पष्टैः, सुवाच्यैः, सुन्दरैरक्षरैर्लिखित्वा प्रेषणीयाः । अन्यथा न तेषां प्रकाशनं स्यात् ।

( ९ ) विवादग्रस्ताः, व्यक्तिगताक्षेप-पूर्णाः, अपूर्णाः, पुस्तक-रूपाः, लेखा न प्रेषणीयाः । प्राचीनपुस्तकानां, सामयिकपुस्तकानां वा प्रकाशनं भवेत् ।

( १० ) छात्राणां लेखाः, संस्कृत-समाचाराः, विज्ञान-समाचाराः, नूतन-वार्ताः सादरं प्रकाश्येरन् ।

( ११ ) लेखानां प्रकाशने, अप्रकाशने, परावर्तने, अपरावर्तने वा सम्पादकस्यैवाधिकारः । को लेखः कदा प्रकाशितो भविष्यतीति सम्पादकाधीनमेव ।

( १२ ) सुप्रभाते सरल-सरसाः, भावपूर्णाः, अतिमनोहराः, कविताः प्रकाशिताः स्युः । साधारणकविता-प्रेषणे लेखकैर्व्यर्थश्रमो न विधेयः ।

( १३ ) लेखाः, परिवर्तनार्थं समालोचनार्थञ्च पत्राणि, पुस्तकानि, 'सम्पादकः—सुप्रभातम्, काशी' अनेन सङ्केतेन; प्रबन्ध-विज्ञापनादि-विषयकानि पत्राणि च, 'व्यवस्थापकः—सुप्रभात-कार्यालयः, काशी' इत्यनेन सङ्केतेन प्रेषणीयानि ।

( १४ ) सुप्रभातस्य प्रचारो भारतस्य सर्वत्र प्रान्तेषु प्रचुरसङ्ख्यायां विद्यते । एतस्मिन् विज्ञापनदानेन महत्साफल्यं भवेत् । मुद्रिताः विज्ञापननियमाः कार्यालयतः पत्रं प्रेष्य, ग्रहीतव्याः ।

---

Reg.N. 1348 A.



Published by Gaurinath Pathak and printed by Rameshwar Pathak at the Tara Printing Works, Benares.

पञ्चमवर्षे
Vol: 5

सौराषाढश्रावणौ, १९८५ वैक्रमाब्दः
July, August 1928.

तृतीयचतुर्थौ सङ्ख्ये
No. 3, 4.

# सुप्रभातम्

संस्कृत-साहित्य-समाजस्य मुखपत्रम् ।

तिमिरततिमुदस्यद् भेदतारा विलुम्पन्, नयदधिसुरभाषाभाषि जागर्तिमुच्चैः ।
विबुध-विहग-वादैराह्वयद् भाग्यभानुम्, विलसतु भुवनेऽस्मिन् सर्वतः 'सुप्रभातम्'

निरीक्षकः—
महामहोपाध्याय-श्रीदेवीप्रसादशुक्लः, कविचक्रवर्ती, साहित्यवारिधिः

सम्पादकः—
श्रीकेदारनाथशर्म्मा सारस्वतः

व्यवस्थापकः—
श्रीगिरीशशुक्लः, न्यायाचार्यः ।

वार्षिकम्मूल्यम्—३)
माननीयेभ्यः—१२)
छात्रेभ्यः—१॥)
वैदेशिकेभ्यः—६)

अस्याङ्कस्य मूल्यम् ।)

# लेख-सूची ।


पृष्ठ संख्या

१—भारतीया वास्तुविद्या ... ८६
( ले० सूर्यनारायण शास्त्री आचार्यः )

२—गुहागमनम् ... ... ९३
( अनुवादकः बहादुरचन्द्र गुप्त शास्त्री )

३—गौतमीयन्यायदर्शनालोचनम् ... ९५
( ले० श्रीसीताराम शास्त्री विद्यामार्तण्डः )

४—ज्ञानभैषज्यमञ्जरी ... ... ९७
( महाकवि गुमानीपन्तप्रणीता )

५—गुणानां रसधर्मत्वम् ... ... ९९
( लेखकौ जयपुरराजगुरुकथाभट्टवंश्य श्रीनन्दकुमार नन्दकिशोरसाहित्याचार्यौ )

६—सुरभारती प्रणयिनां कर्तव्यम् ... १०२
( ले० श्रीदीनानाथ शर्मा सारस्वतः )

७—नारी समाजः ( कविता ) ... १०५
( ले० म० म० देवीप्रसाद शुक्लः कविचक्रवर्ती )

८—आर्तपालः शिवभूपालः ... १०५
( ले० श्रीगोप शर्मा हेब्बालकरः )

९—शास्त्रव्यवसायिनां कुत्सितं कर्म ... १०७
( ले० प्रणवः )

१०—शुद्धधर्मैतिहासिकानि प्रमाणानि ११०
( ले० धर्मदेव शर्मा शास्त्री )

११—गङ्गागीतम् ... ... १११
( प्रणेता कविश्रेष्ठ परमानन्द भट्टाचार्यः )

१२—पाणिनीयप्रकाशः ... ...
( ले० म० म० देवीप्रसादशुक्लः कविचक्रवर्ती )

१३—श्रीकृष्णनामप्रचारकसमितेर्विशिष्टाधिवेशनम् ... ...
( ले० पीताम्बरभट्टाचार्यः )

१४—सनातनधर्मसभा चूरू ...
( ले०—बी० जोशी )

१५—स्त्रीणां संस्कृतशिक्षा ( पद्यम् ) ...
( ले० श्रीमहादेवशास्त्री पाण्डेयः साहित्याचार्यः )

१६—प्राराध्यम् ( कविता ) ...
( ले० बहादुरचन्द्र गुप्तः शास्त्री )

१७—रामो लक्ष्मणमब्रवीत् ...
( ले० चक्रधरशर्मा बहुगुणः )

१८—वैदिकर्षीणां समुद्रज्ञानम् ...
( ले० कृष्णदत्तभारद्वाजः शास्त्री बी० ए० )

१९—पृथिवीशयनम् ... ...
( ले० विन्ध्येश्वरीप्रसाद पाण्डेयः ज्यौतिषाचार्यः )

२०—सेठिया विद्वत्समाजः
( श्रीकिशोरीदास वाजपेयी )

२१—संस्कृतछात्रसम्मेलनम्
( ले० मन्त्री )

२२—समालोचनम्
( ले० सम्पादकः )

२३—आरा-विद्वत्समिति-परीक्षाफलम्
( ले० श्रीयुगलकिशोरझा उपमन्त्री )




विविध-विषय-विभूषितम्, अद्वितीयम्, सचित्रं संस्कृत-मासिक-पत्रम्।

पञ्चम-वर्षे | सौर—आषाढ श्रावणौ। १९८५ वैक्रमाब्दाः | तृतीय-चतुर्थ संख्ये।



# भारतीया वास्तुविद्या। *

ले०—श्रीसूर्यनारायण शास्त्री, आचार्यः।

[ महाराजा कालेज, जयपुर ]

( विशिष्टाङ्क-लेखः )

मान्या विद्वांसः !

अद्य मयैतस्यां सुमहत्यां विद्वत्सभायां भारतीयवास्तुविद्यायाः प्राक्तनत्वविषये सर्वाङ्गसंपन्नत्वविषये चातिसंक्षेपेण किञ्चिन्निवेदयितुमिष्यते। प्रयागविश्वविद्यालयस्य संस्कृतमहोपाध्यायेन एम. ए., पी. एच. डी., डि. लिट्. पदविभूषितेन पण्डितप्रकाण्डेन श्रीप्रसन्नकुमाराचार्यमहोदयेन भारतीयवास्तुविद्याविषये मानसारशिल्पशास्त्रानुसारमाङ्गलभाषयैको ग्रन्थो निर्मितस्तमुपजीव्यैव मयाऽप्ययं निबन्धो विरचितः। एष सुप्रसिद्धो विद्वान् स्वग्रन्थे वास्तुविद्यायास्तानि तान्यङ्गानि प्रतिपाद्यैव कृतकृत्यतां नाऽमन्यत; प्रत्युतास्या विद्यायाः सुदृढप्रमाणपरिपुष्टमितिहासं वास्तुशास्त्रव्यवहृतीनां पारिभाषिकशब्दानां कोषं चाप्युपनिबद्धवान्। एतस्य ग्रन्थस्य परिशीलनेन यथासमयं भारतभूमि-

* जयपुरविश्वविद्यालय-उपाधिवितरणमहोत्सवे पठितो निबन्धः।

मङ्गीकृतवतां प्राचीनानां विदुषां तत्तच्छास्त्रपाण्डित्यवत् तत्तत्कलाविज्ञानवैदुष्यमपि गम्भीरतरमवधार्य यथा समतुष्यं तथा ततोऽप्यधिकतरं चास्माकं ब्राह्मणानां संकुचितहृदयतया शिल्पशास्त्रस्य सर्वथैव विलोपमवगत्य सानुशयोऽप्यभवम् । सर्वस्मिन् वाङ्मये केवलमस्माकमेव स्वतन्त्रोऽधिकारो भवेन्नान्यस्य, विशेषतः शूद्रजातीयस्य तत्र चञ्चुमात्रप्रवेशोऽपि संभवेदिति स्वार्थदोषदूषितं नियमं धर्मस्वरूपे विपरिणमय्य शूद्राणां न केवलं वेदाध्ययनमेव निषिद्धमपि तु संस्कृतभाषामात्राध्ययनमपि वर्जितम् । भवद्भिः क्षणमवधीयतां यच्छिल्पशास्त्रं तर्कादिशास्त्रवन्न केवलं श्रवणमननादिसापेक्षमपि तु ग्रन्थतत्त्वावगमवत् प्रयोगसापेक्षमपि तत् । अस्माकं देशे तु महानयं विप्रतिषेधः समापतितो यद् ये वाक्यविन्यासदक्षा भाषातत्त्वविदो ब्राह्मणा आसँस्ते प्रयोगात्मकशिल्पोपजीवनेन स्वप्रतिष्ठाह्रासं मन्वानाः क्रियात्मकं शिल्पं नाभ्यस्तवन्तो ये च शूद्राः शिल्पमात्रमुपाजीवँस्तेषां शास्त्रस्य भाषामात्रस्यापि नाज्ञानाभावः समपद्यत । ततश्च ब्राह्मणाः प्रयोगात्मकेषु विषयेषु ग्रन्थान् निर्मातुमक्षमाः सन्तो मध्यकाले केवलं काव्यग्रन्थान् बाहुल्येन व्यरचयन् । शिल्पोपजीविनः शूद्राश्च प्रत्यहमुपयोगवशात्तासां तासां कलानां नवनवानि तत्त्वान्यधिगच्छन्तोऽपि ग्रन्थरचनाचातुर्याभावान्न तान्युपनिबबन्धुः । ततश्च शिल्पसंबन्धिनां ग्रन्थानां रचनायाः सर्वथा विराम एवाभवत् ।

एवं च परिचितान्यपि तत्त्वानि लेखनिबद्धत्वाद् बाहुल्येन क्षयमेवोपगतानि । शिल्पशास्त्रप्रसारः प्रतिरुद्धः । शिल्पग्रन्थास्तु नामतोऽपि नालिख्यन्त । अस्तु । किमिदानीमनुशोचनया । यद्यस्माकं शिक्षाविभागाध्यक्षमहोदयः शिक्षासचिवमहोदयश्चास्यां पाठशालायां न्यायव्याकरणादिशास्त्राध्यापनव्यवस्थावच्छिल्पशास्त्राध्यापनव्यवस्थामपि कुर्यात्, तर्हि सुमहदुपकृतं स्याल्लोकानां शास्त्राणां चापि । भवतु प्रकृतमनुसरामः ।

*मन्त्रेषु वास्त्वङ्गोल्लेखः—*

वेदमात्रप्रचारकाले तात्कालिका जना वास्तुशिल्पमजानन् ते न गुहास्वेव प्रत्युत सुनिबद्धेषु गृहेषु न्यवसन्निति च न केवलं मन्त्रेषु गृह-धामपस्त्य-हर्म्यादिपर्यायमात्रप्रयोगेणावगम्यते, अ
तु द्वारस्तम्भाद्युपाङ्गनामोल्लेखादप्यवधार्यते । अ
थर्ववेदे गृहनिर्माणस्य निर्देशस्तु वर्तते, परन्तु तदङ्गो
पाङ्गादिविवरणं नितान्तमेवाल्पमस्ति । एकत्र
संकेतितमस्ति यत्तस्मिन्काले सभान्तरे संस्थापिते
चतुर्षूपमितिनाम्ना व्यवहृतेषु स्तम्भेषु प्रतिमि
नाम्ना निर्दिष्टानि काष्ठफलकानि न्यधीयन्त, तानि
तदग्रभागस्थापितैः परिमितिनाम्ना वर्णितैः प्र
भिर्वंशफलकैः समायोज्यन्ते । छदिश्च पलालतृणै
रमीयत । मध्ये मध्ये चेष्टकायोजनमक्रियत । प
गृहमनेकशालासमलङ्कृतमभवत् ।

एकत्र चात्रेः शतद्वारे यन्त्रगृहेऽग्नौ संभृष्टे
त्विति भावेनासुरैः प्रक्षेप उपवर्णितोऽस्ति, व
विषये च, स त्रिधातुशरणं निर्मातुमैच्छदिति व
मुपलभ्यते ।

एकत्र चैकः सम्राट् पाषाणादिधातुनि
सहस्रस्तम्भे प्रासादे निषसादेति विवरणं दृ

मित्रो वरुणश्चाप्येकस्मिन् सहस्रस्तम्भे सहस्रद्वारे च प्रासादे न्यवसतामिति कथ्यते ।

कल्पसूत्राङ्गभूतेषु शुल्वसूत्रेषु च सोमादिमहायज्ञानुष्ठानाय वैज्ञानिकसिद्धान्तानुसारिणी वेदिरचना सुप्रतिपादिता दृश्यते ।

तैत्तिरीयसंहितायां विविधमानानां वेदीनां रचनाप्रकारः परिनिर्दिष्टो वर्त्तते । बौधायनापस्तम्बयोरग्निचितापद्धतिः स्पष्टीकृताऽस्ति ।

ऋग्वेदादिषु च ग्रामनगरदुर्गादिनिर्देशोऽप्यधिगम्यते । मन्त्रार्थचिन्तनशीलैर्विद्वद्भिरिदं सिद्धान्तरूपेण स्वीकृतं यद्वेदमन्त्रप्रचारकाले लोकाः पाषाणदुर्गाणां प्राकारपरिवेष्टितानां नगराणां, पाषाणबद्धगृहाणाम्, उत्कीर्णप्रस्तराणां प्रयोगविषये च नापरिचिता आसन् ।

बौद्धसाहित्येषु वास्तुसंवादः ।

महात्मनो बुद्धस्य समये तन्मतानुसारिषु संयुक्तप्रान्तेषु विहारदेशे च ग्रामरचनाप्रकारो वस्तुतः समानरूप एवाऽऽसीत् । ग्रामेषु गृहाणां संघातः संकुचितरथ्यामात्रपृथक्कृतो व्याख्यातः । प्रायः प्रतिगृहमेव च तत्संबद्धा वृतवाटिकाऽपि प्ररोप्यतेस्म । ग्रामेषु च सर्वत्र सार्वजनिकी धर्मशाला सभामन्दिरं चाप्यभवत् । किंच तेषु रथ्यानां मध्ये गामाद्ग्रामान्तरप्रयाणपथा अपि परिष्कृता अक्रियन्त । मध्ये मध्ये च यथास्वमुद्यानान्यप्यासन् । ग्रामवासनव्यवस्थाक्रमो यद्यपि पूर्णो नोपलभ्यते; तथापि प्राकारपरिखादिसहिता ग्रामाः, पुराणि चेत्येति शतशो वर्णनैरधिगम्यते ।

गिरिव्रजनाम्ना प्रसिद्धं शैलदुर्गं–यस्य परिधि अध्यर्द्धक्रोशद्वयात्मकोऽस्ति-महागोविन्दनाम्ना प्रसिद्धेन शिल्पिना निर्मितम् । बिम्बिसारेण राज्ञा च राजगृही निर्मापिताऽभवत् । गिरिव्रजो भारतस्य विद्यमानेषु पाषाणमयवस्तुषु पुरातनतमोऽस्ति ।

किंच तेषां तेषां प्रदेशानां मापनार्थं विनियुक्तानां शिल्पिनां नामान्यप्युल्लिखितानि दृश्यन्ते, यथा—

दन्तपुरं कालिङ्गानमस्सकानां च पोतनम् ।
माहिस्सती अवन्तीनं सौवीरानञ्च रोसकम् ।
मिथिला च विदेहानं चम्पा अङ्गेषु मापिता
वाराणसी च कासीनम् एते गोविन्दमापिताइ-ति ।

एकत्र महात्मना बुद्धेन स्वभिक्षुकेभ्यो निवासार्थमिमे पञ्च सुखावासा अनुज्ञाताः—विहारः, अर्द्धयोगः, प्रासादः, हर्म्यम्, गुहा चेति । एवंविधानां गृहाणां निर्माणाय यावान् कालः समपेक्षितोऽभवत् तेनैव तेषां विस्तारादिकं विज्ञातुं शक्यम् । यथाः–विहारार्थं पञ्च वा षट्, अर्द्धयोगार्थं सप्त, प्रासादार्थं दशवर्षाण्यपेक्षितान्यासन् ।

विहारादिनिर्माणार्थं भूसंग्रहोऽपि प्रौढेन विधिनाऽध्यधीयत तथा चोक्तम्–विहारो ग्रामान्नातिदूरो नचात्यासन्नः, गमनप्रत्यागमनयोर्मार्गसौकर्यवान्, ये तत्र गन्तुमिच्छन्ति, तैः सुखेन परिचेयः, यत्र दिनेऽपि नात्यन्तं जनसंमर्दो भवेद्रात्रौ च ग्रामकलकलात् सर्वथा वर्जितो भवेत् । इति

अस्त्वेतेनैतत्सिद्धं यद् बौद्धमत-प्रचार-कालेऽपि वास्तुविद्याया समीचीनं ज्ञानमासीद्भारतीयानाम् ।

रामायणेपि तत्रतत्राभ्रंलिहादिप्रासादानां, देवायतनानां, सभामण्डपानां प्रपाणामारामाणां च विस्तृतं वर्णनं दृश्यते ।

महाभारतेऽपि धर्मराजाय मयदानवेन या सभा विरचिता सा सुप्रसिद्धैव।

वायु-स्कन्द-मत्स्य-विष्णु-भागवत-पद्म-गरुड-अग्नि-ब्रह्म-शिव-नारद-मार्कण्डेय-वराह-लिङ्ग-कूर्म-ब्रह्माण्ड-ब्रह्मवैवर्त-भविष्य-पुराणेष्वपि प्रसङ्गवशान्मन्दिर-प्रासादादिनिर्माणविधिरङ्गोपाङ्गैः सहितो वर्णितः।

किं च दक्षिणदेशे तन्त्रादिवच्छिल्पशक्तिसमुपासनविधिप्रतिपादनप्रधाना देशे आगमनाम्ना प्रसिद्धा ग्रन्थाः सन्ति, तेष्वपि सर्वाङ्गसंपन्नं वास्तुशास्त्रं दृश्यते। ते यथा—

कामिकागम-सुप्रभेदागम-योगजागम-चिन्त्यागम-करणागम-अजितागम-दीप्तागम-सूक्ष्मागमाद्योऽष्टाविंशतिः।

बृहत्संहितायां तु वराहमिहिराचार्येण सम्यक् स्पष्टीकृत एव वास्तुविषयः।

मानसारे प्रतिपादितानां विषयाणां सूचीमात्रेणैव भवद्भिर्विज्ञायेत यत्कीदृशी परिपूर्णा तत्रैषा कला प्रतिपादितास्ति—

संग्रहः, मानोपकरणविधानम्, वास्तुभेदप्रकरणम्, शङ्कुस्थापनम्, पादविन्यासः, बलिकर्मविधानम्, ग्रामविधानम्, नगरविधानम्, भूमिलम्बविधानम्, गर्भन्यासविधानम्, उपपीठविधानम्, अधिष्ठानविधानम्, स्तम्भलक्षणम्, प्रस्तरविधानम्, संधिकर्मविधानम्, विमानविधानम्, एकभूमिविधानम्, द्विभूमिकाद् द्वादशभूमिकप्रासादविधानम्, प्राकारविधानम्, परिवारप्राकारविधानम्, गोपुरविधानम्, मण्डपविधानम्, शालाविधानम्, गृहमानस्थानविन्यासः, गृहप्रवेशविधानम्, द्वारस्थानम्, द्वारमानविधानम्, राजगृहविधानम्, राजाङ्गलक्षणम्, भूपाललक्षणम्, रथकर्मविधानम्, शयनविधानम्, सिंहासनलक्षणविधानम्, तोरणविधानम्, मध्यरङ्गविधानम्, कल्पवृक्षविधानम्, अभिषेकलक्षणम्, भूषणलक्षणम्, त्रिमूर्तिलक्षणम्, विविधाः प्रतिमाः, मुनिप्रतिमा, भक्तप्रतिमा, वाहनप्रतिमा, दशतालमानम्, मध्यमदशतालमानम्, देवप्रतिष्ठाकर्म। अस्मिन्नेव विषये गजमाचार्यस्य मयमतमिति, काश्यपस्य अंशुमद्भेद इति नाम्ना प्रसिद्धौ ग्रन्थौ स्तः। विश्वकर्मशिल्पमपरमप्येकं पुस्तकमस्ति।

विस्तरभयान्नात्र मया बहवो विषयास्तेभ्यस्तेभ्यो ग्रन्थेभ्यः समुद्ध्रियन्ते। केवलं विदुषां सेवायामिदं निवेद्यते—

शिल्पैस्तुल्यमिहास्ति नैव किमपि प्रायेण वृत्तिप्रदं
तस्मात्तत्परिरक्षणाय विबुधैः कार्यः प्रयत्नो ध्रुवम्।
बाधा कापि महीयसीह विषये काप्यस्तिदूरं न चेत्
सा नीयेत कदाचिदेव भवतां यत्नो न साफल्यभाक्॥
ये विद्यानिधयो वसन्ति भवतां देशेऽर्थबोधक्षमा-
स्तेषामस्ति रुचिर्मनागपि तु नो शिल्पे प्रयोगात्मके।
येषामस्ति च जीवनं बहुविधैः शिल्पैः प्रयोगात्मकै-
स्तेषां पाठनमेव हन्त! भवतां देशे निषिद्धं चिरात्॥

तस्माद् यदि तत्रभवद्भिः शिल्पोपजीविनां काष्ठ-कुम्भकार-रथकारप्रभृतीनां शूद्राणां पठन-पाठने सर्वथा नैव प्रवर्तनीये तर्हि शिल्पकलाप्रतिपादकानां तेषां तेषां पुरातनानां ग्रन्थानामभ्यासं कृत्वा तत्तत्प्रतिपादितशिल्पप्रयोगप्रदर्शनाय स्वयं कार्यादिकं समारब्धव्यम्। अथ चेद् भवतां तत्र गौरव-धर्मादिहानिवशात्संकोच आलस्यम्, औदासीन्यं च तर्हि शास्त्रेषु, शिल्पिषु, देशे, समाजे च दयां कृत्वा

शिल्पोपजीविनीर्जातीरपि संस्कृतभाषां संपाठ्य संस्कृतभाषोपनिबद्धेषु ग्रन्थेषु व्याख्याताः कलाः पाठयत। येन तासां प्रयोगो भवेत्। प्रयोगेण याथार्थ्यज्ञानं भवेत्। याथार्थ्यज्ञानेन प्रचारो भवेत्। प्रचारेण परिरक्षणं परिवृद्धिश्च भवेत्। प्रयोगात्मकस्य शिल्पस्य ज्ञानं तस्य पुरुषस्य, यः प्रयोगरूपेण तस्य व्यवहारं न करोति सर्वथा निष्फलम्। यस्तु केवलं प्रयोगरूपेण शिल्पं व्यवहरति, न तु तस्यागमं सिद्धान्तमुपपत्तिश्च वेत्ति तस्यापि तज्ज्ञानं हीनं, वृद्धिरहितं, स्वाविष्कृतनवतत्त्वसंरक्षणपरिवर्धनविहीनं च।

तस्मान्न्यायादिकं यद्वत् पाठशालासु पाठ्यते।
शिल्पशास्त्रमिदं तद्वत् पाठनीयं प्रयत्नतः॥

शुभम्॥



# गृहागमनम्।

( अ०—बहादुरचन्द्र गुप्तः, शास्त्री )



( कवीन्द्ररवीन्द्रकृताया एकतमस्याः कथाया अनुवादः )

[ विशिष्टाङ्कलेखः ]



स्फटिकचक्रवर्ती ग्रामस्य माणवकेष्वधिनायक आसीत्। एकदा तस्य मनसि कश्चिन्नवीनमेवोपद्रवमुद्भावयितुं विचार आविर्बभूव। नदीकच्छोपकण्ठे नावः कूपकार्यैको महान् दारुखण्डः पतितस्तस्थौ। स चेत्थं विचारयाञ्चकार, यत्, सर्वेऽपि बाला युगपद्बलेन तं दारुभित्तमुत्तोल्य दूरमपवाहयितुं प्रयतेरन्। येन तस्य दारुणः स्वामी कुपितश्चकितश्च स्यात्, तच्च तेषां कृते समीचीनो विनोदः स्यादू इति। अथ प्रत्येकं तस्येमं प्रस्तावमनुमोदयामास। तदित्थं सर्वसम्मतया प्रस्तावः संपेदे।

परन्तु समारप्स्यमान एव विनोदे स्फटिकस्य कनीयान् भ्राता मक्खनो वाचंयमः परिभ्रमन् पश्यतामेव तेषां सर्वेषां तस्मिन् काष्ठभित्ते निषसाद। अथ माणवका मुहूर्तं किंकर्तव्यविमूढा बभूवुः। अनन्तरमेकतमस्तेषां कातरभावेन तं नुनोद; व्युत्थातुञ्च व्यादिदेश। किन्तु मक्खन एकान्तं मुक्तसङ्गोऽवतस्थे। सहि क्रीडानां वैयर्थ्यं तर्कयन् बालतार्किक इव ललक्षे। तदालोक्य स्फटिको भृशं चुक्रोध, चुक्रोश च—'मक्खन! एष उत्त्रासयामि ते सद्यश्चेन्नोत्तिष्ठसि' इति

मक्खनस्तु केवलं भूयोऽपि सुखावस्थितये किञ्चित्ससर्प।

सम्प्रति, स्फटिकेन जनताभिमुखं यदि स्वकीयो नायकोचितः प्रभावः स्थापनीयोऽभविष्यत्तर्हि नूनं स स्विकां तर्जनां कार्ये पर्यणमयिष्यदिति विशदमासीत्। किन्तु प्राप्ते विषमावसरे तस्योत्साहो भङ्गमापेदे। तथापि प्रतिभाशालिनि तस्य मस्तिष्के सहसा काचिदभिनवा युक्तिरुन्मिमेष; या तस्य कनीयांसं पराभवितुमनुचरांश्च बहुतरं रञ्जयितुमलंभविष्णुरासीत्। अथ स मक्खनसमेतमेव दारुखण्डं परिवर्तयितुं शशास। मक्खनः शासनं शुश्राव, तत्रोपश्लेषणमेव चात्मगौरवं मेने। किन्तु विषयान्तरेषु लौकिकीं कीर्तिमभीप्सुभिस्तुल्यं स तत उद्भविष्यन्तीमापत्तिमुपेक्षांचक्रे।

अथ माणवकास्तं काष्ठखण्डमपसारयितुं विचक्रमुः, पूर्णं बलमादधुः, चुक्रुशुश्च—'एकम्, द्वे, त्रीणि, याहि!' याहि शब्दोच्चारणसमकालमेव काष्ठखण्डो ययौ; सममेव च मक्खनस्य तर्को गरिमा सर्वस्वञ्च ययुः।

अथेतरे बाला हर्षातिरेकेण तुमुलं शब्दायांचक्रिरे, किन्तु स्फटिकः किञ्चिद्बिभयांचकार। स हि विदांचकार किमापिपतिषतीति। नासौ मिथ्याऽनुममौ, मक्खनो हि पुरुषभाग्यवदन्धः सन् मूर्तिमान् संरम्भ इव संह्लादमानः पृथिवीमातुरङ्कादुत्तस्थौ, श्येनपातं च स्फटिके पपात, तस्य मुखं संततक्ष, तमाजघान, तं पदाजघान च, ततश्च क्रन्दन् गृहं जगाम। इत्थं नाटकस्य प्रथमोऽङ्कः समाप्तिं जगाम।

अथ फटिकः स्वमुखं प्रोञ्छाञ्चकार, नदीतीरोपकण्ठं मग्नार्धभागाया एकस्या नौकायाः कूलमध्यासीनश्च तृणाग्रं कर्तितुमारेभे । अत्रान्तरे काचिदितरा तरणिस्तटमभिजगाम, एकः पक्ववयाः पलितमुण्डोऽसितश्मश्रुः पुरुषश्च तटभुवमवततार । स तं तथाऽऽसीनमकिञ्चित्कुर्वाणं माणवकं वीक्षाञ्चक्रे परिपप्रच्छच-' ननु भोः ! चक्रवर्तिनः कुत्र वसन्ति ? ' इति । स्फटिकस्तृणं कृन्तन्नेव बभाषे-' तत्र वै ' इति, परं ' स कां दिशमभिसङ्केतयाञ्चकार ' इति निर्देष्टुमसंभवमासीत् । आगन्तुकस्तं पुनः पप्रच्छ । स स्वे जानुनी नावः पार्श्वं परिधुन्वन् व्याजहार- गत्वा गवेषय भोः ! ' इति दर्भशूकनिकर्तनञ्च यथापूर्वमनुबबन्ध ।

किन्तु तस्मिन्नेव मुहूर्ते, गृहादेकः सेवकः समाजगाम स्फटिकमाचचक्षे च-'माता त्वामाकारयति' इति । स्फटिकश्चलितुं विप्रतिपेदे । परन्त्वस्मिन्नवसरे सेवकः स्वामी बभूव । असौ प्रसह्य स्फटिकमुज्जग्राह, मोघसंरम्भेन पादौ विक्षिपन्तं विचेष्टमानञ्च तं गृहं चकर्ष ।

यदा स्फटिको गृहं विवेश, तस्य माता तं ददर्श, सकोपं चुक्रोश च-' आः ! पुनरपि मक्खनमाहंस्येव ? '

स्फटिकः सरोषावेशमाचष्ट-' नैवम्, नाहमाहतवान्, कस्त्वामाख्यद् यदाहतं मयेति ? ' इति

तदम्बा जुघोष—' माऽनृतं वादीः ! आहतं त्वया । 'इति

स्फटिकः ससंभ्रमं बभाषे—' ननु ब्रवीमि, नाहतं मया । मक्खनं पृच्छ ' इति किन्तु मक्खनः ' प्राक्तने कथने दृढेन भाव्यम् ' इत्येव साधिष्ठं मेने । ततः स व्याजहार—' आम् मातः ! स्फटिक आवधीन्माम् ' इति

स्फटिकस्य धैर्यं सद्यश्चिक्षाय । न स एतमन्यायं मर्षयितुं शशाक । स मक्खनमभिदुद्राव ' गृहाणेदम्, इदञ्च, इदञ्च मिथ्याभाषणाय ' इत्येवङ्कारञ्च संह्लादमानस्तस्मिन् मुष्टिवृष्टिं ववर्ष

तस्य माता तत्क्षणं मक्खनस्य पक्षं जग्राह, तुल्यबलांश्च मुष्ट्याघातान् प्रत्यर्पयन्ती मक्खनं दूरमपवाहयांचकार । स्फटिकस्तामेकतो विचिक्षेप । सोच्चैश्चक्रन्द—' आः पाप ! दुरात्मन् !! जननीं स्वित् ताडयितुं धृष्णोषि ? '

अस्मिन्नेव विषमे क्षणे स पलितमुण्ड आगन्तुकः समुपस्थे । स जिज्ञासांचक्रे 'किंजातम्' इति । स्फटिकः संचुकोच, जिह्रयांचकार च । अथ यावत् तस्य माता किञ्चिदपससार, आगन्तुकञ्च वीक्षाञ्चक्रे, तदा तस्याः कोपो विस्मये परिणनाम । सा हि स्वीयं भ्रातरमभिजज्ञे । ततश्च साऽभिदधे— 'अये ! कुतस्त्वमायातः ?' इति

तथाऽभिभाषमाणा सा, आभूमेः प्रणिपपात तस्य, पादौ च पस्पर्श, तस्या भ्राता विश्वम्भरः स्वसुः परिणयानन्तरमेव विप्रकृष्टकं गतवान् आसीत्, मुम्बापुर्याञ्च व्यापारमारब्धवानासीत् । प्रवसत एव तस्य सा पत्या वियुयाव । सम्प्रति विश्वम्भरः कलिकातां प्रतिनिवृत्त आसीत्, सद्यश्च भगिन्या उदन्तं विजिज्ञासमानोऽवात्सीत् । यावत्स बुबुधे 'क्वास्ते सा' इति तावत्स तां दर्शकस्तत्वरे ।

अथोत्तराः कतिपये दिवसा आमोदपूर्णा व्यतीयुः । भ्राता पप्रच्छ—'कथङ्कारं कुमारयुगलस्य परिपोषणं भवतीति । तद्भगिनी प्रत्यूचे-स्फटिकस्तु शाश्वती वेदनाऽस्ति । स हि तन्द्रालुः, अनाश्रवः, किरातश्च अस्ति । मक्खनः पुनः कनकवत्कमनीयः, छगलक इव प्रश्रितः, सुतरामध्ययनप्रियश्चास्ति ।' इति । विश्वम्भरः सदयं शशंस—'कामो मे स्फटिक इतो मया सार्धं गच्छेत् कलिकातायाञ्च मदात्मजैः सह शिक्षां गृह्णीत' इति तच्च विधवा माता झटित्यनुमेने । स्फटिकस्य मुदो न ममुः, यदा तं मातुलः पप्रच्छ—'अपि जिगमिषसि मया सह कलिकाताम्' इति । स आचचक्षे—बाढम् मातुल !' तस्य वाचा स्फुटं प्रतीये-सगन्तुमभीयेषेति ।

स्फटिकादतिमुक्तिं माता परां निर्वृतिं मेने । सा तनये मत्सरमादधे, द्वयोः सोदरयोश्च प्रीतिश्चिक्षाय । सा प्रत्यहं बिभयाम्बभूव-मास्म स्फटिको जातुचिन्मक्खनं नद्यां मज्जयत्, शिरो वा तस्य कदाचिद्विग्रहे भञ्जयत्, विपदं वा कामपि तं नैषीदिति । सममेव च सा स्फटिकस्य गृहोज्झनाय तीव्रामुत्कण्ठां निध्याय किञ्चिदाकुलीबभूव ।

यदा सर्वं निश्चिक्ये ततःप्रभृति स्फटिकः प्रतिक्षणं मातुलं संपृच्छमान आसाञ्चक्रे 'कदा प्रस्थास्यावहे ?' इति । आदिवसं स औत्सुक्यात्कण्टकानिवाधिशिश्ये, सकलां रात्रीं च प्रायो जाग्रदेव निनाय । मत्स्यवेधनं, विपुलं पतङ्गकं, प्राय

गुलिकाश्चेति निखिलां स्विकां सम्पत्तिं स मक्खनं प्रति शाश्वताय कालाय वितताार । यत्सत्यं प्रस्थानकाले मक्खनं प्रति तस्यौदार्यं सीमानमतिचक्राम ।

अथ यदा तौ कलिकातामासेदतुः, स्फटिकः प्रथमं वारं मातुलानीं मिमेल । निजकुटुम्बेनैतमनावश्यकं योगं विभाव्य सा भृशं विषसाद, अन्यतरं कमप्यनादायैव स्वकीयस्यैवाप-त्यत्रयस्य पोषणं तस्यै सुपर्यासमासीत् । तस्य च ग्राम्यस्य चतुर्दशहायनस्य माणवकस्य तेषां मध्य आनयनं नितरा मुद्वेजकं बभूव । अस्य अविवेकस्याऽऽवरणात्प्रागेव विश्वम्भ-रेण नूनं विचिन्तनीयमासीत् ।

( क्रमशः )

# गौतमीय-न्यायदर्शनालोचनम् ।

[ ले०—श्रीसीताराम शास्त्री, विद्यामार्तण्डः ] ।

अथेदं विचार्यते यदिदं गौतमीयं न्यायदर्शनं तत्किं यावज्जगदवलम्बनवस्तुविवेचनपरमुतैकदेशि यत्किञ्चिद्वस्तु विवेचनं विद्या-विशेष एवेति ।

तत्रैतावन्निश्चिनुमो यदिदं कस्मिंश्चिदेकस्मि-न्विषये विवदमानयोर्द्वयोर्वादिप्रतिवादिनोरेकक्केन्द्र-नयनकरी अपूर्वेयं विद्येति, नतु निखिलजग-त्कारणतत्व-प्रबोधन-परा काचित्परमा विद्येति ।

यद्यपि स्व-प्रतिपाद्य-प्रमाणादिपदार्थतत्त्वज्ञानेन निःश्रेयसाधिगम उक्त आचार्येण, तदपि अस्य तादृश-शास्त्रान्तरोपोद्बलकत्वेन, न तु स्वातन्त्र्य-णेति ज्ञातव्यम्' यतः प्रमाण-प्रमेय-संशय-प्रयो-जन-दृष्टान्त-सिद्धान्तावयव-तर्क-निर्णय-वाद-जल्प-वितण्डा-हेत्वाभासच्छल-जाति-निग्रहस्थानानि-इति यावन्तोऽपि पदार्था उद्दिष्टास्तत्र नैकोऽप्येतादृशः पदार्थो निर्दिष्टो येन जगन्निर्माणे काचिद् बुद्धिर्जन्येत, यथा सांख्ये—

'प्रकृतिः, महान्, अहंकारः, मनः, पञ्चज्ञाने-न्द्रियाणि, पञ्चकर्मेन्द्रियाणि, पञ्च-शब्द-स्पर्श-रूप-रस-गन्धाः, पृथिव्यादीनि भूतानि, पुरुषश्चेति पञ्च-विंशतिस्तत्वानि' इत्युक्त्यैव प्रतीयते—एवं संभ-वति जगदुत्पत्तिः, अवश्यं चैतत्तत्त्वज्ञानेन भवेत्कै-वल्यमिति ।

यथावा, वैशेषिके— 'द्रव्य—गुण-कर्म—सामा-न्य—विशेष—समवायाभावाः सप्तपदार्थाः' इति कथनेनैवावगम्यते एतावती जगदुत्पत्तिसामग्री, भविष्यत्येव साकल्येनैतत्पदार्थज्ञाने निःश्रेयसमिति । येन हि दुर्गप्रवेशमार्गो विदितो नूनं तेन निर्गम मार्गोऽपि विदित इति । प्रवेशनिर्गममार्गयोर्गृहा-दिषु समानत्वस्य दर्शनात् । नह्युदाहृतयोः शास्त्र-योः प्रविशतां प्रथममेव प्रमाणजिज्ञासा समुत्तिष्ठते ।

किञ्च, भवेदपि प्रमाणप्रमेयादिद्वित्रपदार्थ-ज्ञानस्य कथंचिन्निःश्रेयसाधिगमे उपयोगो जल्प-वितण्डा-हेत्वाभासच्छलजातिनिग्रहस्थानानां बहूनां पराजयहेतूनां न गुरुशिष्य-प्रयोजने संवादे किञ्चित्प्रयोजनं—कः कस्य निग्रहं कुर्यात्; पराज यं वा गुरुर्वा शिष्यस्य गलग्रहं कुर्याच्छरणागतस्य, उत शिष्यः सदुपदेशदक्षिणां तथा कुर्याद्गुरोः । नहि पुराणेतिहासादिषु-जिज्ञासाकथायामेतादृगुदा-हरणं क्वापि लभ्यते ।

यः खलु निःश्रेयसार्थी भवति न तस्य गुरोः सन्निधौ छलजात्यादिना तादृशं साध्यं साध्यता-

भियात्, प्रत्युत; शान्तो दान्त उपरतस्तितिक्षुः समाहितमना एव भक्तिभावनम्रः परित्यक्त-कौटिल्यादिपरिपन्थिभावो लब्धुमर्हति तत्त्वज्ञानं गुरुमुपाश्रितः। यथोक्तं वेदान्तसारे—

"प्रशान्तचित्ताय जितेन्द्रियाय
प्रक्षीणदोषाय यथोक्तकारिणे।
गुणान्वितायानुगताय सर्वदा
प्रदेयमेतत्सकलं मुमुक्षवे॥" इति

तथाच तत्रैव—

"अयमधिकारी जननमरणादिसंसारानलसंतप्तो दीप्तशिरा जलराशिमिवोपहारपाणिः श्रोत्रियं ब्रह्मनिष्ठं गुरुमुपसृत्य तमनुसरति। तद्विज्ञानार्थं सगुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठमित्यादिश्रुतिः। स गुरुः परमकृपया अध्यारोपापवादन्यायेनैनमुपदिशति।

"तस्मै स विद्वानुपसन्नाय सम्यक्प्रशान्तचित्ताय येनाक्षरं पुरुषं वेदसत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्" इत्यादि श्रुतेरिति।

श्रीमद्भगवद्गीता चात्र भवति—

इदं ते नातपस्काय नाभक्ताय कदाचन।
न चाशुश्रूषवे वाच्यं न च मां योऽभ्यसूयति" इति।

बहून्येवैतादृशानि शास्त्रेषु वाक्यानि उपलभ्यन्त किमतिविस्तरेण।

इदमुक्तं निःश्रेयसाधिगममुपलक्ष्य, अपरं तूच्यते सूत्रोक्त-पदार्थानां परस्परं संप्लवनमुद्देश्यानुद्देशनं चालोच्य तत्र मिथः संप्लवनं यथा तावत्प्रमाणानि प्रत्यक्षादीनि उत्तरस्मिन्प्रमेयेऽथ संमिलन्ति। इन्द्रियाणि हि प्रत्यक्षप्रमाणानि तानि इन्द्रिये प्रमेये, व्याप्तिज्ञान-सादृश्यज्ञान-पदज्ञानरूपाणि चानुमानादीनि बुद्ध्यात्मके प्रमेये समानरूपत एव प्रविशन्ति। तान्येव च सर्वाणि प्रथममेव प्रमाणपदार्थमभिसंप्लवन्ते।

अहो प्रमाण-प्रमेययोरैक्ये लक्ष्य-शरयोरिवाभिन्नयोः साफल्यं तत्र भगवत आचार्यस्येति। इदं च भवति-उद्देश्यानुद्देशनमनुद्देश्यानां चोद्देश इति। यदयं प्रमाण प्रमेयाख्ये द्वे विधे-उद्दिश्य, प्रमाता प्रमाचेति द्वे परित्यजति। प्रमाण-प्रमेयान्तर्गतान् बहू-संशयादींश्चोपादत्ते-इति। न खलु प्रमातुरुपयोज्यानि प्रमाणादीनि कथमपि प्रमातारमन्तरा सफलीभवितुमर्हन्ति। यदस्ति च प्रमाणं विद्यते च प्रमेयं जायते च तयोः संबन्धस्तथापि यदि न प्रमा नाम किञ्चित्किंतेन तेन स्यात्।

यद्युच्यते प्रमेयगणे बुद्धिरुद्दिष्टा, तथापि न प्रमेयेण प्रमास्थानं पूर्यते भेदात्। उचितन्तु प्रमातृप्रमेययोः पृथक् स्थानम्।

किञ्च, पृथिव्यादीनि महाभूतानि सर्वतन्त्र-सिद्धान्तविषयतामुपगतान्यपि न क्वापि षोडशसु पदार्थेषु मध्येऽन्तर्भवन्ति, न प्रमाणे न प्रमेये इति महत्येव त्रुटिः प्रधानोद्देशे। अपरं च तस्मान्नेयं विद्या सर्वाचीनक्रमोद्देशा, नापि शास्त्रान्तरवत्स्वान्त्येण निःश्रेयसाधिगमे हेतुतां नितरामेव व्रजति।

भाष्यकारोऽप्यस्या लौकिकविद्यात्वमेवप्राधान्येन स्वीकरोति यथा—"इमास्तु चतस्रो विद्याः (त्रयीवार्ता दण्डनीतिरान्वीक्षिकी चेति) पृथक् प्रस्थानाः प्राणभृतामनुग्रहायोपदिश्यन्ते यासां चतुर्थीयमान्वीक्षिकी न्यायविद्या, तस्याः पृथक् प्रस्थानाः संशयादयः पदार्थाः, तेषां पृथक् वचन

मन्तरेणाध्यात्मविद्यामात्रमियं स्याद् यथोपनिषदः" इति ।

किञ्च---प्रमेयसूत्रभाष्ये---आत्मादिद्वादशविधं प्रमेयं व्याख्याय अन्ते "अस्त्यन्यदपिद्रव्यगुण कर्मसामान्यविशेष समवायाः प्रमेयं तद्भेदेनचापरि संख्येयम् । अस्य तु तत्त्वज्ञानादपवर्गो मिथ्याज्ञाना त्संसार इत्यत एतदुपदिष्टं विशेषेणेति" इति स्पष्ट-मेवोक्तं प्रमेयगणनाया अपूर्णत्वमिति । तस्मादस्य शास्त्रस्य प्रथमोद्देशसूत्रस्थपदार्थसामर्थ्याल्लौकिकत्व-मेव प्राधान्येनेति निश्चयः ।

## ज्ञान-भैषज्य-मञ्जरी ।

महाकवि श्रीगुमानी-प्रणीता ।

सम्पादकः—श्रीतारादत्तपन्तः, साहित्याचार्यः ।

मङ्गलम्—

जयति पतिर्जानक्याः शिवम्प्रयच्छन् भवाभिभूतेभ्यः ॥
धन्वन्तरिरिव साक्षाद् वितरन्नगदं गदार्तेभ्यः ॥ १ ॥

मोहे वातज्वरे च—

भक्तिर्विभाव्यमाना विधुनोति श्रद्धयान्विता मोहम् ॥
अनिलज्वरमिव शुण्ठी क्वथिता मधुधारयोपेता ॥ २ ॥

भवतापे पित्तज्वरे च—

सदसद्विवेक एकः प्रकृष्ट-भवतापवारणः प्रथितः ॥
पित्तज्वरापहारी केवल इव पर्पटक्वाथः ॥ ३ ॥

संसारदुःखे कफज्वरे च—

शमयति शमः समेतः सन्तुष्ट्यां सन्ततं भवक्लेशम् ॥
क्वाथः कलिद्रुमोत्थः कफज्वरं सोपकुल्य इवाऽ॥ ४ ॥

तापत्रये त्रिदोषज्वरे च—

विद्या विरक्तियुक्ता त्रितापतापं क्षणादपाकुरुते ॥
अमृताऽन्विता बृहत्या ज्वरमिव दोषत्रयोद्भूतम् ॥ ५ ॥

संसृतौ विषमज्वरे च—

उपरतिरसङ्गगर्भा यदि हि समुत्सारयेन्न संसारम् ॥
विषमज्वरं न जयेत्तर्हि शिवा क्षौद्रसम्पन्ना ॥ ६ ॥

हृदयग्रन्थौ जीर्णज्वरे च—

न महावाक्यपदार्थज्ञानादन्यच्छिनत्ति हृद्ग्रन्थिम् ॥
न च गोपयोजफेनादपरं जीर्णज्वरं हन्ति ॥ ७ ॥

संसार-प्रवाहे अतिसारे च—

तत्त्वं यदैक्यभानं भवप्रवाहान् बहून्निवारयति ॥
कुटजेन्द्रजाम्बुपानं यद्वद् विविधानतीसारान् ॥ ८ ॥

ममत्वे अर्शोरोगे च—

ज्ञानं सशान्ति-धैर्यं ममत्वमपहन्त्यदो न यदि सत्यम् ॥
हन्त्यर्शः ससितावनमग्निशिखं नेदमपि सत्यम् ॥ ९ ॥

अविद्यायां संग्रहण्यां च—

श्रवणेन यात्यविद्या मननिदिध्यासनाऽनुपातेन ॥
अपि च कपित्थमहौषधयुतेन तक्रेण संग्रहणी ॥ १० ॥

आत्मबोधे अजीर्णे च—

कथमौपनिषदशास्त्रं वितनोत्यात्मप्रबोधमनधीतम् ॥
कथमुदराग्न्युदयं तत् करोत्यभुक्तं त्रिकटुचूर्णम् ॥ ११ ॥

दुरितक्षये कृमिरोगे च—

स्मृतिरेव राघवीया दुर्धरदुरितोच्चयक्षपणयोग्या ॥
कृमिजालपातनार्हा यवानिका पारसीकैव ॥ १२ ॥

भवकृच्छ्रे रक्तपित्ते च—

कृपया सह रघुतिलक,—प्रसाद उच्चैर्भिनत्ति भवकृच्छ्रम् ॥
स च हन्ति रक्तपित्तं सितया सह वासकस्वरसः ॥ १३ ॥

संसारे क्षये च—

इह योगधारणाभिः पञ्चभिरुच्छेदमेति संसारः ॥
क्षय इह सितोपलात्वक्-क्षीरीकृष्णात्वगेलाभिः ॥ १४ ॥

संसृतिचक्रे नासारुधिरप्रवाहे च—

रघुवर्यसौमनस्यात् संसृतिचक्रप्रवृत्तिरिह न स्यात् ।
दाडिम-केसर-नस्यात् नासारुधिरस्रुतिर्न स्यात् ॥ १५ ॥

संसारे कासरोगे च—

लघु भृष्टधीविचारो न तथा सद्यतिश्छिनत्ति संसारम् ॥
लघुभृष्टकण्टकारी-स्वरसः सकणो यथा कासम् ॥ १६ ॥

अहम्मतौ छिकायाञ्च—

अद्वयतत्त्वाकलना-दहंमतिच्छेदि साधनं नान्यत् ॥
सैन्धवजलान्न चान्याच्छिक्काधिक्कारदं नस्यम् ॥ १७ ॥

अर्थसन्देहे श्वासेच—

सामर्ग्यजुः ससुत्थे सारे विदिते कुतोऽर्थसन्देहः ।
मासनिशोषणजाते धूपे पीते कुतः श्वासः ॥ १८ ॥

दुर्दमपापे स्वरभेदे च—

श्रीरामनाम्नि कण्ठ-स्थिते सपाप्मा सुदुर्दमः क इव ।
क इव दृढस्वरभेदः पुष्करमूले मुखान्तःस्थे ॥ १९ ॥

मिथ्यादृष्टौ अरुचौ च—

रामार्चनारसहार्दान्मिथ्यादृष्टिर्विलीयते यादृक् ।
अरुचिर्नश्यति तादृक् समक्षिकादार्द्रकस्वरसात् ॥ २० ॥

अहङ्कृतौ छर्दिरोगे च—

आत्मज्ञानादपरं किमहङ्कृतिनिकृन्तनं बृहत्करणम् ।
चाम्पेयाच्च किमन्यच्छर्दिगदोन्मर्दि भैषज्यम् ॥ २१ ॥

भ्रमे अपस्मारे च—

न मृषा यद् गुरुवाक्यं प्रज्ञायते सावधारणं भ्रमजित् ।
सत्यं च यत्सतैलं लशुनमपस्मार-विध्वंसि ॥ २२ ॥

भवतृष्णायां कामलायां च—

ध्याते रघुपतिरूपे भवमृगतृष्णाक्षयस्तु किं वस्तु ।
नागरपयसि च पीते किं चित्रं कामला नश्येत् ॥ २३ ॥

भवदोषे आमवाते च—

अद्भुतमिदं यदेका, बुद्धिर्विमला लुनाति भवदोषम् ।
चित्रमिदं पुनरेका, यदामवातं हरति शुण्ठी ॥ २४ ॥

क्लेशभये वातरक्ते च—

सस्नेहमार्यसङ्गं क्लेशभयार्त्ता भजन्तु सौख्याय ।
गुग्गुलकषायकन्तु क्षौद्रयुतं वातरक्तार्ताः ॥ २५ ॥

जन्मग्रहणे शूलरोगे च—

जन्मी भजेत्सदार्ढ्यं विरागविज्ञानभावनाभ्यासम् ।
शूली तु सोष्णनीरं वलिटङ्कणशुण्ठिकाक्षोदम् ॥ २६ ॥

विषयरसे उदावर्ते च—

शान्तिर्दान्तिसमेता विषयरसं किं न सन्निवारयति ।
त्रिवृता सितान्विता किं नोदावर्तं निवारयति ॥ २७ ॥

दुष्कृतदुःखे मूत्रकृच्छ्रे च—

आहोदुष्कृतदुःखात् धर्म्मः सन्त्रायते दयोपेतः ।
द्रुतमूत्रकृच्छ्रकृच्छ्रात् द्राक्षाससिता यवक्षारः ॥ २८ ॥

प्रमाददोषे प्रमेहे च—

सारः श्रुतेः सबीजो निषेवणीयः प्रमाददोषघ्नः ।
स्वरसोऽथवा गुडूच्याः समधुर्मेहामयध्वंसी ॥ २९ ॥

शोके शोथे च—

अनुचितमिदं शमाढ्यो हा सन्तोषो न शोकनाशकः ।
इदमप्यनर्हमार्द्रकरसो गुडाढ्यो न शोथहरः ॥ ३० ॥

भवक्लेशे व्रणरोगे च—

गुरुशास्त्रजोपदेशः समर्हणीयः सदा भवक्लिष्टैः ।
व्रणिभिस्तु माननीयो गुग्गुलनिम्बोद्भवो लेपः ॥ ३१ ॥

पापे अम्लपित्ते च—

नभियं समेति पङ्कात् प्रणिधानब्रह्मचर्ययुक्तात्मा ।
न बिभेति चाम्लपित्तात् सैन्धवसर्पिर्निघृष्टात्मा ॥ ३२ ॥

हृदयसंशये उपदंशे च—

हृत्संशयो न शाम्यति सानुभवं शास्त्रजं बोधम् ।
उपदंशोऽपि विना सौ सगुग्गलं त्रैफलं क्वाथम् ॥ ३३ ॥

जाड्यदोषे कुष्ठरोगे च—

जाड्यवतां सनिदानो बोधश्चैविध्य एव समभीष्टः ।
कुष्ठवतां मधुजुष्टः क्वाथो माञ्जिष्ठ एवेष्टः ॥ ३४ ॥

दुर्वृत्ते कुनखे च—

दुर्वृत्तो बुधबोधनसंस्कृतवृत्तो न कः सुवृत्तः स्यात् ।
कुनखः खुङ्कणचूर्णस्थगितनखः को न सुनखः स्यात् ॥३५॥

विकर्मदोषे तारुण्यपिटके च—

प्रतिपक्षो यमनियमप्रभवः क्षेमो विकर्मदोषाणाम् ।
वैरी सर्षपलोध्रकलेप स्तारुण्यपिटकानाम् ॥ ३६ ॥

पापतापे विपादिकायाञ्च—

किञ्चान्द्रायणकृच्छ्रव्रतैः प्रयोगान्न पापिता यस्य ।
किं घृतसिक्थकगैरिकि-लेपान्न विपादिका यस्य ॥ ३७ ॥

आत्ममौढ्ये इन्द्रलुप्तेच—

मैवं यदात्समौढ्यं धीशुचिभावो न निर्धुनोतीति ।
मैवं यदीन्द्रलुप्तं गुञ्जालेपो न हन्तीति ॥ ३८ ॥

वाग्विवादे अरूषिकायाञ्च—

किं साध्वसमघकोट्यामतिशोधनपुण्यकर्मनष्टायाः ।
किं भवमरूपिकाया महिषीदधिविल्वतष्टायाः ॥ ३९ ॥

ऊतौ कण्डूरोगेच—

अपि सम्भारवियुक्तं न राववीयार्हणं किमूतिघ्नम् ।
गन्धक-विरहितमपि किं सर्षपतैलं न कण्डूघ्नम् ॥ ४० ॥

जाड्यदोषे चर्मकीलरोगे च—

कः कथयति गुरुतोषो न जाड्यदोषं हिनस्तीति ।
को वक्ति तुत्थलेपो न चर्मकीलं छिनत्तीति ॥ ४१ ॥

शोके मस्तकरोगे च—

दाक्ष्यस्थैर्यविवेचनविभाविते चेतसि शुक्का ।
कुटजमहौषधकाञ्जिकलिप्ते शिरसि स्थिता रुक्का ॥४२॥

कामक्रोधयोः सूर्यावर्तद्विभेदे च—

करुणादृधैर्यक्षमयोः कामः क्रोधश्च गच्छति प्रलयम् ।
नस्यात् कुङ्कुमसितयोः सूर्यावर्तद्विभेदश्च ॥ ४३ ॥

कुमतौ नेत्ररोगे च—

वीक्ष्योदिता गुणाढ्या विद्यामेकां पलायते कुमतिः ।
दृष्ट्वाऽञ्जितां जलार्द्रां कस्तूरीं दृग् व्यथा द्रवति ॥४४॥

दुर्मतौ नक्तान्ध्ये च—

दौर्मत्यविपिनभेदि श्रेष्ठवचःशास्त्रधारणकुठारम् ।
नक्तान्ध्यविपिनभेदि श्रुतिमलमरिचाञ्जनकवचम् ॥ ४५ ॥

दुःखे नेत्रपुष्पे च—

विश्रुते हृदि रघुनाथे न दुःखनाशः क्षणेन तदसत्यम् ।
निहितेऽक्ष्णि सिन्धुफेने न पुष्पनाशस्तदप्यनृतम् ॥४६॥

प्रज्ञामान्द्ये बाधिर्य्ये च—

रघुरसवाचि नाम प्रज्ञामान्द्ये स्मृतः परोपायः ।
अपि बिल्वपाचितैलं श्रुतिबाधिर्य्ये महोपायः ॥ ४७ ॥

हृद्यमृगतृष्णायां कर्णरोगे च—

लघुगुरुजनकुलसङ्गो हृन्मृगतृष्णानिशीथिनीग्रहराट् ।
ततस्वरसरविपत्रस्वरसः श्रुतिरुङ्मृगीमृगराट् ॥ ४८ ॥

लोभे नासिकारोगे च—

लोभं निराकरिष्णुः स्थैर्यं सन्तोषवृत्तिजं धत्ताम् ।
नासामयसहिष्णुः जीरसितानस्यमाधत्ताम् ॥ ४९ ॥

हिंसाबाधके कर्णप्रवाहस्तम्भे च—

बुद्धागमोक्तवाक्यं हिंसाविधिबाधकं यदा भवति ।
शम्बूकमांसतैलं श्रुतिसुतिस्तम्भनं न कथम् ॥५०॥



## गुणानां रसधर्मत्वम् ।

( ले०—जयपुरराजगुरु-कथाभट्टवंश्य-श्रीनन्दकुमारनन्दकिशोर-साहित्याचार्यौ ) ।

तमोगणविनाशिनी सकलकालमुद्योतिनी
धरातलविहारिणी जडसमाजविद्वेषणी ॥
कलानिधिसहायिनी लसदलोलसौदामनी
मदन्तरवलम्बिनी भवतु कापि कादम्बिनी ॥१॥

अयि निखिलशास्त्रापारपारावार-विगाहन-समधिगतचातुरीकाः, विद्याकल्पलतारसास्वादनलोलुपमत्तचञ्चरीकाः, समागतानेकप्रतिष्ठितगरिष्ठविद्वद्वरिष्ठशिरोमणिप्रवृष्टचरण—नखमयूखसंतोषित-चन्द्रचन्द्रिकाप्रणयिचकोराः श्रीमन्तः ! अपारेऽत्र कविविरञ्चिप्रपञ्चे काव्यं नाम सकलसहृदयाह्लादकं, निखिलजगद्वशीकारकं, उद्विग्नोद्वेगहारकम्, असन्दानन्दसन्दोहप्रदायकं, विबुधजनसौमनस्य-विधायकं, निखिलसंस्कृतसाहित्ये सरलसरण्या व्युत्पादकं, अशेषसास्वविशेष—सौहित्यविधायकं, प्राचीनार्वाचीन विविधलोकव्यवहारविहार संदर्शकं, कुटिलकामिनीजालनिमग्न-मानवपीडैकनिवारकं, सकलशास्त्रापाररससार-संसारैकप्रकाशकं, समग्रसंस्कृतानुरागिहृदयान्धकारतिरोधायकं, प्रभाकरतेजोवत्प्रदीपकं, बुधजनहृदयविद्योतकं, विद्यते, विद्योतते च ।

तत्र कश्चित्कर्मणि काव्यप्रकाशकारास्तावद् व्यासज्यवृत्त्योभयगतचमत्कारसारविलोकनात् "तददोषौ शब्दार्थौ सगुणावनलंकृती पुनः क्वापि" इत्यादिना काव्यस्य शब्दार्थोभयविषयत्वं प्रतिपेदिरे, मेनिरे च ।

मयकापि च तेषां मतानुसारेणैव—

"आस्वादबोधकतया पठितं च काव्यं
　　बुद्धं च काव्यमिति सार्वजनीनवृत्तेः ।
आचार्यमस्मटवराः कविकर्मशब्दं
　　शब्दार्थतत्परमनारतमामनन्ति ॥ १ ॥"

इत्यादि काव्यविमर्शाख्ये महानिबन्धे निरूपितम् । रसगङ्गाधरकारास्तु 'रमणीयार्थप्रतिपादकः शब्दः काव्य' मित्यादिना काव्यविषयकशब्दवृत्तितां स्वीचक्रिरे । अन्ये च ग्रन्थकारा यथायथमुभयत्रैवान्तर्गताः । अस्तु नाम—

नैतत्तावदस्माकं विचारास्पदम्, प्रकृतमाक्षिपामः—शब्दकाव्यतावादिमते, शब्दार्थोभयगतकाव्यतावादिमते च यद्यपि समानमेवेदं यद् 'रस आत्मा, शब्दार्थौ शरीरम्, गुणाः शौर्यादिवत्, अलंकाराः कटक-कुण्डलादिवत्, रीतयोऽङ्गसंस्थान विशेषवत्, दोषाश्च बधिरतादिवत्, इति । यथा च मया तस्मिन्नेव निबन्धे निबद्धम् ।

हारादिवदलंकारा दोषा बधिरतादिवत् ।
गुणाः शौर्यादिवद्रीतिरङ्गसंस्था-विशेषवत् ॥

तथाप्यत्र तावत्स्थले केचिद्विवादग्रस्ता इत्थं प्रत्यवतिष्ठन्ते । यथा च ते आचक्षीरन्—

गुणास्तावन्नहि रसधर्मा, किन्तु शब्दार्थयोरेव यदिनाम केचिद् रसधर्मत्वं ब्रूयुस्तर्हि तेषां रसधर्मत्वे किं मानम्, यतः प्रत्यक्षानुमानयोस्तत्रानुपयुक्तत्वात् । तथाहि—

यथा—दाहादिकार्येणाग्निगतोष्णस्पर्शत्वस्य भिन्नतया संवित्तिः, तथैव द्रुत्यादिरूपेषु रसेषु न हि द्रुत्यादिरूपाणां गुणानां पार्थक्येन ज्ञानम्, येन विविक्ततया तेषामवस्थितिरङ्गीक्रियेत ।

अत्र शृङ्गारादावियं द्रुतिः रसकार्या वा माधुर्यादिगुणसंपाद्या इति भिन्नतयानुभवं कः प्रेक्षावान् प्रतीयात् । किं च-माधुर्यादिगुणविशिष्टानां शृङ्गारादिरसानां द्रुत्यादिकारणत्वात्कारणतावच्छेदकतया गुणानामनुमानम्, इति चेन्न । शृङ्गारत्वादिरूपेणैव रसानां द्रुत्यादिकारणत्वोपपत्तौ तदन्यगुणकल्पने गौरवात् । न च शृङ्गारकरुणशान्तानां माधुर्यवत्त्वेन द्रुतिकारणत्वे शृङ्गारकरुणशान्तत्वादिरूपेण द्रुत्यादिकारणत्वकल्पनापेक्षया लाघवम्, इति वाच्यम् । मधुरतरादिगुणानां पार्थक्येन द्रुततरत्वादिकार्यतारतम्यप्रयोजकतया स्वीकारात् माधुर्यवत्स्वरूप-सामान्यकार्यकारणभावो निष्फलत्वाद् गडुस्थानापन्न इति । विशिष्यप्रयोज्य-प्रयोजकभावेनैव निर्वाहे किमर्थसामान्यकार्यकारणभावः स्वीक्रियताम् । इति भावः । अपि च—आत्मा तावन्निर्गुणः इति वेदान्तिनः, ततश्चात्मस्थानापन्नस्य रसस्य माधुर्यादयो गुणा इति कथं कीदृङ् मनोहरम् । एवं च गुणाः शरीरभूतयोः शब्दार्थयोरेव धर्मा इति पर्यवसन्नम् ।

अत्रेदमुच्यते—

यदि नाम गुणानां शब्दार्थधर्मतां स्वीकुरुषे, न रसधर्मतां-तदा तावत् "तत्र टवर्गवर्जितानां वर्गाणां प्रथमतृतीयैः शभिरन्तःस्थैश्च घटिता, इत्यारभ्य, अवृत्तिर्मृदुवृत्तिर्वा रचनानुपूर्व्यात्मिका माधुर्यस्य व्यञ्जिका, इत्यादिना काव्यप्रकाशमनुसंदधता कथनेन कथं तावत् शब्दार्थव्यञ्जकतां नाम प्रतिपादयसि । अयं भावः—

शब्दरचनादयो गुणव्यञ्जका न तु गुणाधाराः, ये च व्यञ्जकाः, न ते आधाराः, यथा च प्रत्यक्षे—घटव्यञ्जको दीपोऽस्ति । तत्रव व्यञ्जके दीपे न घटावस्थानं किन्तु भूतल एव, इत्थंच ये व्यञ्जकास्ते कथमाधाराः इति ।

यच्चोक्तम् 'अग्नेर्भिन्नमुष्णस्पर्शत्वं तत्राह—

अग्निस्तावत्कःपदार्थ इति तत्त्वगवेषणायां कृतायां पृथिव्यादिपञ्चतत्त्वान्तर्गततेजःपदार्थाभिन्नत्वमवसीयते । तेजसो लक्षणं तु उष्णस्पर्शवत्त्वम्, इति मन्यन्ते नैयायिकाः, इत्थं चाग्नेर्भिन्नमुष्णत्वमितिकथं वक्तुं शक्यते ।

किं च गौरवाज्ञानुमानमित्यपि नैव स्वीकार्यम्, मधुरत्वादिरूपसामान्यकार्यकारणभावस्वीकारेण निर्वाहे निष्पन्ने किं तावद् गौरवम् । न च मधुरमधुरतरादिगुणानां पार्थक्येन द्रुत-द्रुततरादिकार्यतारतम्यप्रयोजकत्वेन विशिष्यैव प्रयोज्यप्रयोजकभावो गौरवम्" इति वाच्यम् । प्रातिस्विककारणतादिनां मतेऽपि द्रुतद्रुततरत्वादौ सामान्यविशेषभावः स्वीक्रियते एवेति समानोऽयं पन्थाः ।

अस्तु नाम तावत् गौरवे सत्यपि न गुणा सिद्धिः । यच्चोक्तम् नहि रसेषु 'इमेरसाः'' ''इमे च गुणाः' 'इति पृथक् कर्तुं शक्यते द्रुत्यादिरूपैककार्यकत्वात् । तदपि न । सुकुमारपदरचनादिव्यक्तमाधुर्यादिजन्या द्रुतिरन्या, अन्या च रस-जन्या, इति नाविदितं विदुषाम् ।

एवं च यथा—आत्मनः शौर्यादयस्तथा माधुर्यादयो रसस्य, गुणा इति मन्तव्यम् ।

यथा च ध्वन्यालोके—

तमर्थमवलम्बन्ते येऽङ्गिनं ते गुणाः स्मृताः ।
अङ्गाश्रितास्त्वलंकारा मन्तव्याः कटकादिवत् ॥ १ ॥
शृङ्गार एव मधुरः परः प्रह्लादनो रसः
तन्मयं काव्यमाश्रित्य माधुर्यं प्रतितिष्ठति ॥ २ ॥

तथैव च काव्यप्रकाशेऽपि, शौर्यादिव्यञ्जकाकृतिमहत्त्वविलोकनात् 'आकृतिरेवास्य शूरा, इत्यादि व्यवहारात्, अशूरेऽपि स्थूलाकृतिदर्शनेन 'शूर, इति' कुत्रापि कृशाकृतिदर्शनेन 'शूरेऽपि' अशूर इति यथा लोका व्यवहरन्ते, तथैव काव्येऽपि माधुर्योपयुक्तसुकुमाररचनातो माधुर्यव्यवहारदर्शनात्, सुकुमाररचनादर्शनमात्रेण अमधुरेऽपि वीरादौ माधुर्यं, क्वाऽपि शृङ्गारादिरसोपकारकं वर्णानामोजः प्राचुर्येण मधुरेऽपि शृङ्गारादौ माधुर्याभाव इति रसान्तविश्रान्त-प्रत्ययभ्रान्ता व्यवहरन्ते । अतएव माधुर्यादयो रसधर्माः समुचितैर्वर्णैरभिव्यज्यन्ते; न तु वर्णमात्राश्रया, इति सविस्तरमुपपादितं सम्मटाचार्यैः । इत्थंचैवं सत्यपि शौर्यादयो न हि तावदात्मधर्माः किन्तु शरीरधर्मा इति मन्यसे तदा कथं मृतशरीरेऽपि तेषामवस्थानं न स्वीकुरुषे, कथं च मूर्तिलाघववति पुरुषेऽपि शूरत्वव्यवहारं कुरुषे । किं च दृश्यन्ते, श्रूयन्ते चेतादृशो वृत्तान्ता यद्द्दर्शने दुर्बलाश्च युद्धक्रियायां चाद्वितीया विक्रमैकरसाः । यथा नलराजेन ऋतुपर्णरथे संयोजितास्तुरंगमा दर्शने कृशकाया अपि गमने धावने च 'आत्मोद्धतैरपिरजोभिरलङ्घनीयाः, इत्यादि सूक्तीनां प्रधानलक्ष्यभूता इति पुराणतोऽप्यतिरोहितम् । न तु 'मधुरावर्णाः, इति लोके व्यवहाराद् वर्णधर्मत्वम्, उक्तं च वर्णधर्मत्वं वामनादिभिरपि, इति कथमन्यां सरणिं समाश्रयसि । इति चेन्न । अभियुक्ता वामनादयस्त्वौपचारिकं वर्णधर्ममादाय वर्णाः, इति व्यवाहार्षुः । भ्रान्तास्तु तं व्यवहारमपश्यन्तो 'मधुरा वर्णाः, इति व्यवहरन्ते । उक्तं चालङ्कारिकैरपि—

'गुणवृत्त्या पुनस्तेषां वृत्तिः शब्दार्थयोर्मता, इति ।

तथा च काव्यानुशासने हेमचन्द्राचार्योऽपि-

रसस्योत्कर्षापकर्षहेतू गुणदोषौ भक्त्या शब्दार्थयोः, रसो वक्ष्यमाणस्वरूपस्तस्योत्कर्षहेतवो गुणाः, अपकर्षहेतवस्तु दोषाः । ते च रसस्यैव धर्माः, उपचारेण तु तदुपकारिणोः शब्दार्थयोरुच्यन्ते, इत्यादि, इत्यन्वयव्यतिरेकाभ्यां गुणदोषयो रस एवाश्रय इतिपर्यन्तमुक्त्वान् ।

अपिच—रसानुत्पत्तिकालेऽपि 'काव्यस्यात्मारीतिरिति तस्य धर्मा गुणाः, 'इतिवैदर्भमार्गस्य प्राणा दशगुणा मताः, इति प्रथमपरिच्छेदे दण्डिकाव्यादर्शतोऽप्यवधेयम् ।

किंच 'चन्द्रालोकेऽपि सहित्यदर्पणकाव्यप्रकाशादिवत् ।

'अमी दश गुणाः काव्ये पुंसिशौर्यादयो यथा, इत्यादिना यथा ह्यात्मधर्मा गुणा शौर्यादयस्तथा रसधर्मा माधुर्यादयो गुणा इत्येव निर्णीतम् ।

अस्तु नाम तथापि गुणानां साक्षादुपकारकत्वम् अलंकाराणां त्वङ्गद्वारेण, तत एवच—

"रसभावतदाभासभावशान्तिनिबन्धनाः।
चत्वारो रसवत्प्रेयऊर्जस्विच्च समाहितम्" ॥

इत्येवमादीनामलंकाराणां साक्षादुपकारकत्वाभावात्, शब्दार्थालंकारवन्नालंकारत्वं किन्त्वौपचारिकमलङ्कारत्वमिति नियमः कथं स्वीक्रियते ।

तस्माच्च जानीमो वयं ये साक्षादुपकारकास्ते गुणाः, ये चाङ्गद्वारा रसोपकारकास्तेऽलङ्काराः । अयमेव च भेदो भेदहेतुर्वा यद् विभिन्नाश्रयत्वं नाम द्वयोः । यदि गुणालङ्कारयोर्द्वयोरेव शरीरमवस्थानं भवेत्तदा 'द्वयोः शरीरद्वारा काव्यशोभाकारकत्वा द्वैक्यं प्रसज्यते । यथा च मयापि—

जानन्तु साहित्य-कला-प्रवीणाः ।
शब्दार्थ धर्मा न गुणा मता मे ॥
मानं तु बोध्यं रसधर्मताया
मलं कृतेः स्याद् गुणतो न भेदः ॥ १ ॥

इत्याद्यन्यत्राभिहितम्—

नच 'काव्यशोभायाः कर्तारो धर्मा गुणाः तदतिशयहेतवस्त्वलंकाराः, इति प्राचीनाचार्यकृतो भेदः संगच्छते तावदिति वाच्यम् ।

तथाहि—'रीतिरात्माकाव्यस्य, सा च पदसंघटनात्मिका त्रिविधा वैदर्भी, गौड़ी, पाञ्चाली च । तत्र सर्वगुणव्यञ्जकवर्णवती वैदर्भी, प्रसादौजोव्यञ्जकवर्णवती गौडी, माधुर्यप्रसादवदक्षरयुता पाञ्चाली । तत्र रीतिधर्मा गुणाः, शब्दार्थोभयरूपं काव्यं शोभयन्ति । शब्दार्थाश्रयाश्चालंकारास्तच्छोभाया अतिशयं कुर्वन्तीत्युक्तम् ; तत्र वैदर्भ्यां माधुर्यस्य प्रसादस्य च सत्वेन संभोगश्रृङ्गारादौ लेशत ओजः सत्वेऽपि क्षत्यभावेन सैव काव्यस्यात्मा स्यात्, न तु गौडी, पाञ्चाली च । तत्र माधुर्याद्यभावेन समस्तगुणाभावाच्छोभाया अनुत्पत्तेः । अत एव काव्यप्रकाशेऽपि यदि समस्तै र्गुणैः काव्यव्यवहारस्तदा कथं तावत 'असमस्तगुणा गौडी, पाञ्चाली च रीतिः काव्यस्यात्मेत्युक्तम् ।

यदि च कतिपयैर्गुणैरपि काव्यत्वव्यवहारस्तदा कथं 'शुष्कोवृक्षस्तिष्ठत्यग्रे, इत्यत्र ।

अद्रावत्र प्रोज्ज्वलत्यग्निरुच्चैः प्राज्यप्रोद्यन्नुल्लसत्येष धूमः-इत्यत्रचौजःसत्वेपि कथं न काव्यत्वं स्वीक्रियत्वे । एवं च 'काव्यशोभायाः कर्तारो धर्मा गुणाः, इत्यनुपपन्नम् ।

न च'गुणाहितशोभाया अतिशयकर्तारो धर्मा अलङ्काराः, इत्यपि मन्तव्यम् । तथात्वे सति—

स्वर्गप्राप्तिरनेनैव देहेन वरवर्णिनी ।
अस्या रदच्छदरसो न्यक्करोतितरां सुधाम् ॥ १ ॥

इत्यत्र दिव्यदेहरूपैकगुणहानिकल्पनया सुखदायकत्वादिरूपसमस्तगुणदाढर्यकल्पनायाः सत्वात विशेपोक्तिः । उपमेयस्याधररसस्य चोपमानभूतसुधारसापेक्षयाऽऽधिक्योक्तेर्व्यतिरेकः ।

एतावलंकारौ गुणानां निराकाङ्क्षतयैव काव्यव्यवहारहेतुशोभाजनकौ । भवन्मते तु माधुर्यादिव्यञ्जकवर्णाभावेन, ओजसश्च प्रकृतविरुद्धत्वेन गुणाहितशोभाया अभावे गुणाहितशोभातिशयकारित्वरूपालंकारलक्षणस्योपर्युक्तालंकारलक्षणद्वयेऽतिव्याप्तेः काव्यत्वाभावः प्रसक्त इति गुणालंकारयोर्लक्षणमनुपपन्नम् ।

इत्थं च गुणानां रसधर्मत्व एव माधुर्यादयो गुणाः शौर्यादय इवात्मनि रसे च समवाय सम्बन्धेन, उपमादयो हारादय इव शरीरे शब्दार्थयोः संयोगसम्बन्धेनोपकुर्वन्तीतिभेदः संगच्छते नाम । यच्चोक्तम् 'आत्मा तावन्निर्गुणः" इति वेदान्तिनः । तेनात्मस्थानीयस्य रसस्य धर्मा माधुर्यादयो गुणाः कथमुपपद्यन्ते, । तदपि विचाराक्षमम् ।

तथाहि, वेदान्तिनस्तावद् व्यावहारिकमात्मानं नहि निर्गुणं निष्क्रियं च मन्यन्ते, किन्तु य आत्मा पारमार्थिकः स एव निर्गुणः । यदि नाम व्यावहारिकोऽयमात्मा निर्गुणो निष्क्रियश्च भवेत्तदा, हन्त ? सन्तोऽपि प्राणिनः सर्व एवामूलचूड़मुच्छिन्ना भवेयुः। सर्व एव संसारो निष्क्रियत्वात्पाषाणवद् भवेत् । एवं च परमार्थिक एवात्मा निर्गुणो न तु व्यावहारिकः प्रातिभासिकश्च । अत्र च 'रस आत्मा, इत्यादि

व्यावहारिको जीवात्मैव दृष्टान्तविधयोपन्यस्यते । यथाच जीवात्मानं नैयायिकाः 'प्राणापाननिमेषोन्मेषजीवनमनोगतीन्द्रियान्तरविकाराः सुखदुःखेच्छाप्रयत्नाश्चात्मनो लिङ्गानि" इति (वै०द०३।२।४) 'इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनोलिङ्गम्" इति (न्या० द० १।१।१०) प्रतिपादयांबभूवुः । यदिनाम पारमार्थिक एवात्मा दृष्टान्तस्तदा मृतशरीरे शौर्यादभावान्मनसि यथा शौर्यादयोगुणा गण्यन्ते, तथा च काव्ये मनःस्थानापन्नः कःपदार्थो येन तत्र माधुर्यादयो गुणा उपादीयेरन् । ननु मनःस्थानापन्नो हि स्थायिभावः स्वीक्रियतां, तत्रैव च गुणागण्यन्तामिति का नोहानिरिति चेन्न । भवतैव 'गुणे गुणान्तरानौचित्यादिति प्रतिपादितत्वात् । किं च "रसो वै सः" इत्यादिश्रुतीनां सगुण-ब्रह्मप्रतिपादनात्, ब्रह्मसादृश्येऽपि ब्रह्मतस्तत्त्वान्तरं रस इति स्वीकरणाच्च, गुणा रसधर्मा एव । अपिच काव्यप्रकाशलक्षणखण्डनावसरे 'शौर्यादिवदात्मधर्माणां गुणानां हारादिवदुपस्कारकाणामलङ्काराणां शरीरघटकत्वानुपपत्तेश्चेति, प्रतिपादयतां भवतां मतेऽपि गुणानां रसधर्मत्वं शिरस्यापततीति मन्यन्निव मध्ये स्थेयम् एवं युक्तियुक्तेन कथनेन, लौकिकपरीक्षकाणां बुद्धिसाम्यं प्रदर्शयता दृष्टान्तेन, प्रमाकरणेन प्रमाणेन च गुणानां रसधर्मत्वं सिद्धम्, अन्यथा तु गुणालंकारयोरविशेषेणैव काव्यशोभाधायकत्वात् तयोरैक्यं प्रसज्यते इति रसधर्मतापक्ष एव वरीयान्, इति समनोनियोगं कणेहत्य विभावनीयम् । अन्ते चेदमाशास्यते—

अज्ञानाद्वा विस्मृतेर्भ्रान्त्या यन्न्यूनमधिकं कृतम् ।
तत्सर्वं क्षम्यतां विज्ञैः प्रमोदध्वं सुधीवराः ॥ १ ॥
श्रीमज्जयपुराधीशकृपादृष्टिप्रभावतः ।
गुणानुगुरसगुणितो निबन्धोऽयं विपश्चितः ॥ २ ॥



# सुरभारतीप्रणयिनां कर्त्तव्यम् ।

निबन्धा—श्रीदीनानाथशर्म्मा शास्त्री सारस्वतः ।
( मुलतानस्थ-सनातनधर्म्म संस्कृतकालेजाऽध्यापकः )

" ॐ यां मेधां देवगणाः पितरश्चोपासते ।
तया मामद्य मेधयाऽग्ने ! मेधाविनं कुरु स्वाहा "
—यजुः ३२ । १४



अयि सुरसरस्वतीप्रणयिनो महाभागाः ! नेदं निह्नुतं श्रीमताम्; यद्—आस्माकीना भारतभारती एव सर्व्वाभ्यो वर्तमानभाषाभ्यः सर्व्वाऽङ्गीणं कात्स्न्यं, प्राचीनताञ्च सर्व्वपथीनां कलयति । परम् अद्यत्वे-अमुष्या यादृशी दुरवस्था वरीवर्ति; मन्ये साऽपि नाऽतिक्रामेद्वा भवदीयदृग्-विषयताम् । सुरभारत्या ह्यस्मिन्ने तदरातयस्तु चेष्टन्तामेव; परं विषादस्याऽयं व्यतिकरो यद्—एतदीया अकृतज्ञाः संस्कृतज्ञा बन्धवोऽपि अदसीये ह्रसिम्नि सहायभूताः सन्ति । अन्यथा—विचार्य्यताम्—सत्यपि तदितरभाषीय-समाचारपत्रभूम्नि कथं स्यात् तदीयविविधपत्राणामभावः; भावेऽपि तदीयग्राहकनैयून्यम् ।

अस्माकं कर्त्तव्यं त्वेतदासिद्; यत्—सुरभारतीं वयं प्रतिगेहं प्रचारयिष्यामः सर्व्वे प्रतिक्षणं संस्कृत-भाषिणोऽभविष्यन्; मित्रादिभिः साकं पत्रव्यवहृतौ किलाऽमुष्या एवोपयोगोऽभविष्यद्; एतस्या दैनिक-साप्ताहिक-पाक्षिक-मासिकपत्राणि प्रचार्य्य तद्ग्राहकभूयस्त्वाय चेष्टाऽभविष्यत्; परमधुना तत्प्र-

स्यनीकृतैव विभाव्यते। कोऽधुना परस्परं गीर्व्वाण-वाण्यां सँल्लपति । यो विदधीताऽप्येवम्; तत्र लोकास्ता उभयो वितन्यन्ते । पत्रव्यवहारकाले तु सुरसरस्वत्युपयोगे लेखन्येव कदाचिज्जिहेति । सुरसरस्वतीसन्देशसमाचारपत्राऽऽनायने च द्रविणस्य कालस्य वाऽपव्ययो विभाव्यते। यदि केचित् स्वाऽनुरागाटोपप्रदर्शनाय आनाययन्त्यपि संस्कृत-पत्राणि; तानि तथैव बद्धानि तिष्ठन्ति; दर्शनस्य तु कैव कथा आस्ताम् । अहह ! चेतस्ताम्यति; लेखनी स्रंसते; परं शत्रूणां कृते प्रमोद-मोदकाः । हन्त !!!

एतस्मिन् महति विषमविषमये समये क्रिया-समभिहारेण इतस्ततो विधीयमानानामाक्षेपाणां सन्निधौ सत्यपि महाविद्वांसो मौनमश्नुवते । ते वर्त्तमानसंस्कृतपत्रादिषु स्वकीयाशयकुशेशयनिबद्धनिबन्धाऽर्पणे भारतभारतीप्रचारनिष्पादकविविधविधेयोपदेशे वा निजलघिमानमिवाऽऽकलयन्ति । विपश्चितो धर्म्मविषये मर्म्मविधो वचोराशीन् प्रयुञ्जते; प्राचीनसंस्कृतग्रन्थांश्च दूषयितुम् आपार्ष्णिमस्तकं स्वेदस्रावं कुर्वन्ति; परं महान्तस्तूष्णीकामुपासते । लघवः किं कर्तुं क्षमेरन् । तेषां प्राचीनग्रन्थाऽवलोकनाऽलङ्कर्म्मीणतायां न प्रौढत्वम्; न च जागत्कानुभवाऽऽतिशय्यम्; महाप्राज्ञानाञ्च तटस्थता; एवङ्कारं कारंकारं भविष्यत्येव विपश्चितामानन्दसन्निधिः, भविष्यति च तत्सन्नियोगेन गीर्व्वाणवाण्या धर्म्मस्य च ह्रसिमा । भाषामूलक एव धर्म्मो भवति । तस्य प्रचारो वक्तृतया लेखेन वा भवितुमर्हति यदि महापण्डिताः सँस्कृतपत्रेषु विपश्चिद्वितीर्णाऽऽक्षेपान् समादधतः स्युः, तदा दृश्यताम्—कीदृगुन्नतिः स्याद् धर्म्म-भाषयोः। मया बहुशो दृष्टं संस्कृतपत्रेष्वपि; यद्-धर्म्मखण्डकास्तु लेखा प्रकाश्यन्ते; तन्मण्डका... वीथीषु विकीर्य्यन्ते । किमयमेव आर्य्यत्वाभिमानः? अत्र घोषणेयम्—संस्कृत प्रसारोऽऽपि यदि धर्म्मोपजीवको न भविष्यति; तर्हि विधर्म्मवृद्धि-सहाय एव सेत्स्यति । तेन संस्कृतपत्रेष्वपि केवलं काव्यनाटकाऽऽदिसम्बद्धा विषया एव न निवेश्येरन्; प्रत्युत धार्म्मिकाणामपि लेखानामादरो विधीयेताऽत्र व्यतिकरे भीतैर्भाव्यं तत्तत्पत्रसम्पादकैः।

अन्यदिदमपि निवेदनम्—सँस्कृतपत्रसम्पादक... नामयमप्याग्रहो दृश्यते, यद्-अत्यन्त सुगमै... लेखकैः! प्रहीयेरन्; न ज्ञायते-कोऽस्याऽभिसन्धिः... कदाचिदयं स्याद्; यद्-विद्याऽर्थिषु पत्रप्रचार... स्याद् । अभिप्रायोऽयं स्तुत्यः । परं तत्र निवे... मदः; यत्संस्कृतपत्रेषु विविधा लेखाः प्रका... रन् । कुत्रचिदर्थगरिम्णा भाव्यम्; क्वचिच्छ... ऽऽडम्बरेणाऽपि । कुत्रचिद् यमकाऽनुप्रासश्लेषा... रोधाऽऽदिच्छटा स्यात्; क्वचिच्चाऽर्थाऽलङ्कारा... एवमेव सति संस्कृतप्रसारव्याजेन छात्राणाम... षामपि उन्नतिर्भवितुं शक्यते । केवलसौकर्य... विन्यासे प्राचीनसाहित्ये शीघ्रं प्रवृत्तिरेव न भवि... शक्येत, साहित्योन्नतिमभिलाषुकाणां विद्याऽर्थिना... आशासे सम्पादका अत्राऽवधास्यन्ति विषये।

'ग्रामं गच्छंस्तृणं स्पृशती'ति नयेन एतदुक्त... अनुचितश्चेत् क्षमणीयम्। कथनस्येदमेवाऽऽकूत... यया कयाऽपि विधया सर्व्वे सुरभारती-प्रचारि...

'सुरभारत्याः' प्रचारणे बद्धपरिकराः स्युः । तस्या अर्थकरित्वविधाने राजपुरुषाणां साहाय्यं गृह्णन्तु । व्यावहारिकशब्दानां संस्कृतपदानि गवेषयित्वा प्रचारयन्तु । तदैव भवेत् क्रमशो जागतस्याः 'सुरभारत्याः' 'सुप्रभातम्' सौभाग्य-'सूर्योदय'श्च । अनन्तरमेव च सत्फल 'सहस्रांशो' र्भासमान 'उद्द्योतः' स्यात् ।

तथाऽपि हर्षस्याऽयमवसरो यत्—काशिकः कोविदकुलाऽऽकुलः संस्कृत प्रसाराय भगीरथप्रयत्नं विदधदास्ते । अदस्सदः—सदस्सदश्च तत्कृते 'सुप्रभातं' नाम मासिकं पत्रमप्याविर्भावयन्ति । तदेव 'सुप्रभात' मिदं धनाऽऽपत्तेऽपि सुरसरस्वतीसेविनो निषेवमाणमेवाऽऽस्ते । समये २ विशिष्टाऽङ्कप्रकाशनमपि विधत्ते । अधुना विश्ववैदुष्याणां सुरभारती-प्रणयिनामपि कर्तव्यमेतद्; यत्, तेऽस्य यथाशक्ति धनसाहाय्यम् एवञ्च लेखसाहाय्यं विदध्युः; येन सुरभारतीयमहरहरुन्नतिशिखरं प्राप्नुयाद्; एतत्सञ्चालकाश्चाऽपि सोत्साहाः सन्तो गीर्वाण-वाणीप्रसारे सुदृढं चेष्टन्ताम् इति कृतं निबन्धबन्धद्राघिम्णा ॥

## नारी-समाजः ।

( ले० म० म० देवीप्रसाद कविः )

या सर्वलोकविदिता चितिशक्तिरास्ते ।
तस्या विभूतय इमा विलसन्ति नार्यः ॥
आसामतः किल कलाविहभारतीयैः ।
सर्वात्मना समुचिताऽपचितिर्विधेया ॥

## आर्तपालः शिवभूपालः

लेखकः—श्रीशेषशर्मा हेब्बालकरः,



हर्षंकर उषःकालः, प्रसन्नानि हरिदन्तरालानि, विकच-कुसुम-सुगन्ध-वाही शीतलो मारुतः संचरतिस्म मन्दं मन्दम् । शार्वरं तमो गह्वरेषु चण्डकर-कर-निकर-संस्पर्श-भीतमिव निलीनं जातम् । तुहिनकिरणस्तारकागणश्च प्रभा-विहीनोऽभूत् । तदनु भगवानम्बर-मण्डल-मण्डनः कमलिनीवल्लभोऽपि पूर्वाचलमलं चकार । आनन्दमयेऽस्मिन् समये कुन्देन्दु-रदन-वदना, सौन्दर्य-जित-सुराङ्गना, समुदयद्यौवना काचन महाराष्ट्रललना सिस्नासुः श्रीसमर्थरामदासाऽऽदिनिषेवितं विमलमधुरनीरं सरोवरं गच्छतिस्म दासीदासाभ्यां साकम् । तत्क्षणमेव तत्समासाद्य सा समुद्युक्ता किल स्नातुम् । "अस्याः स्नानसमये मदवस्थानमनावश्यकमिति तदनुचरः समाश्रयत समीपतरुच्छायातरम् । प्रावर्तत निजनायिकावसनसेचनेऽपरा दासी । एतस्मिन्नेव काले करकलितकरालकरवालाः सबलाः स्थूलकलेवराः श्मश्रुभयंकराश्चत्वारः पुरुषाः सहसैव समाययुस्तत्सरस्तीरम् । ततो मल्लिकाप्रसूनकोमला महाराष्ट्रमहिला, इमे मोहमदीया एवेति भयविह्वला मूर्छां प्राप । तदनु दासीविहितशीतलोपचारलब्धचेतना सा "क्वाऽस्तिमामकः सेवकः" इति परितः समीक्षांचक्रे । नयनसरणिमेव नैवाऽऽरुढः परंपरिपठितपलायनसूक्तःसोऽनुचरः । सेयं सुन्दरी किंकर्तव्यतामूढा तदानीं चित्रलिखितेवाऽऽसीत् । अयि आर्याः! पाठक महोदयाः! सैनिका ननु समागता एते यवनाः श्रीमतो बीजापुर बादशाहस्य । कपटयतिवेषधराः सुन्दर-योषान्वेषणतत्पराश्चारा इमे बादशाह-नियुक्तकार्यपराङ्मुखाः स्वच्छन्द-

सटन्तिस्म । एषां प्रमुखस्तु रहिमानखाननामा । क्षुधार्तेनेव पायसपात्रं दरिद्रेणेव महानिधिः समीक्षिता किलमहाराष्ट्र-युवतिरेतैः । अनन्तरमेव समुदियाय खानमहोदये तत्सीमन्तिनी समपहरणदुरभिलाषः । ततस्ते पुनः पुनः समाह्वया मासुरनङ्गरंगाय तामङ्गनाम् । सोहमदीय-दुरुक्तिसमाकर्णनेन-समुपविष्टा सा समुदतिष्ठत् । तदनु तान् भर्त्सयांचक्रे नीचोक्तिभिः । अनुचकार स्वामिनीं स्वीयामेव दासी । माननीया मित्रमणयः! मानविहीनाः स्मरान्धा नराः किं दुर्वचोऽभ्यस्यन्ते?। अपिच ते स्वीकुर्वन्ति मन्दस्मिताः समादरा इवाऽवधीरणाफणितिम् । खानस्तेषामेव कोटिमवजगाहे । एवंस्थिते-व्यतीताः कतिचन घटिकाः । ततः खानकिंकरौ—(पुरतः समागत्य) भोः प्रभो! महाराष्ट्र-वनिता एता नूनं बालिश शिरोमणय एव । अयोऽप्यस्मदीयप्रार्थनया सुकुमारतरं भवेत्, नचाऽऽसां हृदयानि । किं बहुना, इमाः स्त्रियः स्वस्वमन्दिरेषु दारिद्र्यमेव समनुभवन्ति, न हि महावैभवं सन्तोष्य भवादृशवीरवरान् । समवलोकिताःकिलाऽस्माभिरीदृशः कामिन्यः साराऽसारविचारहीना बह्व्यः । ललनामणिरियं बाल्यात्परस्मिन् वयसि पदं निदधाना, परमरक्षका, लावण्यनिधिश्च । एवं सत्यप्यस्याः स्वान्तस्याऽविकारतां दर्शं दर्शं हास्याङ्गनाऽऽश्लिष्टवक्षसो भवामः । किमेतन्मूढानां विचारणया । समादिशन्तु किलेतःपरमावाम् बीजापुरं नेष्यावो जीवग्राहमिमाम् ॥

तदुक्तिमेवाऽन्वमोदत युवतिलावण्यमोहितः खानोऽपि । ततःसुन्दरीसमुपकण्ठमगमतां तौ किंकरौ । महाराष्ट्र सुन्दरी—(साऽणुक्षेपं) रे क्षुद्राः! पुरतः पादान् यदि विक्षिपेयुः, क्षणादेव परेतरक्षकभक्षिता भवेयुः । भवन्तु भवन्तो जागरूकाः ॥

खानः—मन्मनश्चकोरचन्द्रिके ! जीवितेश्वरे ! प्रिये ! मृगया मृगेन्द्र इव कोमलाङ्ग्या कुरङ्गाक्ष्या त्वया मदीयभटकेसरिणोऽपिहिंस्येरन् । येनाऽपि कोमलकुसुमेन विनश्येयुःप्राणिनस्तर्हि शस्त्राऽऽदीनां तूपभोगः क्व ? तव सतर्जनजल्पनैर्वयं भवेम कान्दिशीकाः । हे सुमुखि! क्षिप्रं विक्षिप कटाक्षकुसुमबाणान्" ॥ इति प्रजल्पिते खाने भृत्यास्तदीयाः पुरतः प्रययुः स्प्रष्टुं महाराष्ट्राङ्गनाङ्गम् । सुकुमारतरशरीरायां तस्यां राक्षसानां तेषां करस्पर्शात् संत्रस्य पश्चादपसरत्यां, कोऽपि—(सो पम् ) हे शान्ते माभैषीः । त्वद्रक्षणदक्षिणः खलु महाराष्ट्री योऽयं जनः । रे रे मूढाः, परासृशथ मदीयनिशितनिस्त्रिंशप्रहारं विपद्य तस्याः कलेवरम् ॥ "

ततः खानस्तत्सेवकाश्च परितः प्रेक्षिष्यन्ते, एकः शक्तिमान् धनुष्मान् महामहोमहितवपुष्मान् महाराष्ट्रतरुण आसीत् । संप्रेक्ष्य तंच रोषकषायितनयनः खानः खड्गधरः "चतुःसंख्यैरस्माभिरेव विजयश्रीः समालिंग्यते, न चैकेन तेनेति " मनसि निर्णीय बभूव युद्धसंनद्धः ।

वाचकवरेण्याः! परं महाराष्ट्रयुवाऽपि, नासीत् निर्बलः पुरुषः । खाननिभाननेकानपि हिनस्तिस्म सलीलम् । महाराष्ट्रवीरोऽपि कोपांगारितांगः स्वीकृततीक्ष्णकौक्षेयकश्च समासन्नोऽभवत् । उभयस्मिन् घोरतरे समरे संप्रवृत्ते चिच्छेद युगपदेव करं वामेतरं महाराष्ट्रशूरः खड्गाघातेनैकेनैव किलाऽहमहमिकामेतस्य यवनवीरस्य खानस्य, । पपात कृपणो वसुन्धरायाम् । समागमन् ननु हन्तुं महाराष्ट्रीयं तदनु तदनुयायिनः सकलाः । सोऽपि तैर्विग्रहमारचय्य प्रापयामास खलु भृत्यौ कृतान्तनिशान्तम् । दर्शयामासपलायनपथमेकस्मै, ततः खाने करवालमाकलय्यैकेनैव हस्तेन समागते समायोद्धुं तमप्यनुचरानुसृतमार्गमभिमुखीचकार । एवमेवबहुलेकाले पावनं तत्सरोवरं तत्संहारजातरुधिरनिर्झरं जातम् । अथ महाराष्ट्रतरुणो विजयहर्षरोमांचप्रपंचांचितगात्रः सहार्दप्रैक्षत मानिनीमणिं ताम् । साऽपि कार्तज्ञ्येन तं निपीय नेत्राभ्यां निर्निमेषं "प्रभाविनोऽस्याऽनागमने नूनं मां वशीकरिष्यन्तिस्म यवनाः! करुणाऽकूपारः परमेश्वरो, हर, एव, आपन्नार्तिहर, इति भगवन्तमनावीत् । कुशलधिषणाः सुप्रभातपाठकधीराः! प्रायशो भवन्तः " कोऽयमस्यास्तरुण्या रक्षक " इति विचाराक्रान्तस्वान्ता भवेयुः । प्रियमहाशयाः सोऽयं महाराष्ट्रवीरपुंगवः शिवराजस्य दक्षिणः पाणिरिव स्थितः पीडितजनपालकः "पालकरे" त्युपपदांकितो नेताजीनाम । स शिवाजिसंदर्शनायशिवनेरिदुर्गमितो वनश्रीशोभाविलोकनाय समायात आसीत् । नेताजिवीरस्य सरः समीपागमनं तरुण्याः यवनेभ्यो यवनबलात्करणं च काकतालीयमिवाऽभूत् । भारतीयांश्चातं साक्षात् सुजनसुखंकरः शंकर एव शिवराजरूपेण

समवतीर्ण आसीत् । तत्सहायका अपि तद्व्रतमेवांग्यकार्षुः । अतएवनेताजीपरिपालयामास यवनेभ्यो महाराष्ट्रवरवर्णिनीम् । समायातेषु खानप्रभृतिषु कश्चन महाराष्ट्रसुन्दरीकिंकरः समाशिश्रिये छायातरुमिति पूर्वोक्तं विस्मृतं न भवेत् पाठक महाभागैः । सोऽनुचरो यवनानां भयानकं विलोक्य रूपं भीतः क्रन्दन्नेव पलाय्य शिवनेरिदुर्गं स प्राप शिवाजिवासागारम् । विस्मितास्तमेव पश्यन्तिस्म दुर्गवासिनो जनाः । तदानीं भोजनायसमुद्युक्तः शिवप्रभुः । तदनु शिवभूपालः समाकर्ण्यार्तनादं भक्तप्रार्थनयेव भगवान् सहसा बहिरागत्य पुनः पुनः प्रलपन्तं प्रणमन्तं तमद्राक्षीत्, किंवृत्तमित्यप्राक्षीच्च, । अनुचरः—(सदीनाक्षरम्) अयि महाराष्ट्रकुलजलधिकलानिधे ! स्वामिनी मदीया सोहसदीयैरवस्कन्दिता वर्तते । भवन्तोऽत्र प्रमाणम् ॥ ततः क्षुधितासाऽसमाकुलोऽपि शिवाजिनृपालः कवचधरः शिरोधृतोष्णीपश्च संप्राप तत् सरोवरं जवजितकुरंगं तुंगतरं तुरंगमारुह्य कतिभिः साकमश्वारोहैः । सहोदयाः ! न गणयतिस्म प्रजापालनायस्वप्राणानपि श्रीमान् शिवाजीप्रभुः । अतएव धन्यः शिवराजन्य इति श्लाघयन्तिस्म लोकाः । आकस्मिकेन समागमेन शिवराजस्य, मयूरइव नीरदागमेन, चकोर इव हिमकरोदयेन, नितरां प्रमुदितो नेताजी साष्टांगं प्रणनाम प्रजावत्सलंशिवाजिभूपालम् । महाराष्ट्रवनिताऽपि सप्रश्रयं तं प्राणंसीत् । निवेदयामास तदनु नेताजी भूतपूर्वमुदन्तं सर्वम् । शिवप्रभुः—(सहर्षम्) हे आयुष्मन्! भवान् मम पाणिर्दक्षिण इव मत्कार्यसहायको वर्तते । नूनं धन्यवादार्होऽस्ति । यावज्जीवं विधाय देशसेवां विधेहि सुकृतपात्रं भावत्कं गात्रम् ॥ इत्यवसर एव पीराजीनाम कश्चन सिवनेरिदुर्गस्थः पूज्यपादो वृद्धः शिवराजान्तिकमेत्य—भो महाराज! पिताकिलाऽहमस्याः कुमार्याः (शान्तायाः) । यः पुण्यश्लोकस्तनयामेनां मदीयां संजुगोप यवनेभ्यः । स एव मद्दुहितृपाणिपीडनार्हः ॥ श्रीमन्तः पाठक महाभागाः ! महाराष्ट्रयूनो तदानीन्तन प्रमोदमभ्यूहन्तु भावुकाग्रेसरा भवन्तएव । श्रीमान् वीरवरः शिवच्छत्रपतिः स्वयमेव तयोर्विवाहोत्सवमकार्षीत् । आर्तजनपालनाय "शिवराज" स्तदनुयायिनश्च बद्धप्रतिसरा इति निवेदयितुमिवाऽद्यापि कर्णकुहरं भिनत्ति कीर्तिभेरी नन्वस्माकमिति सर्वं शिवम् * ॥

* कस्याश्चन कर्नाटकपत्रिकायाः कथाभागः संगृहीतः, ।

# शास्त्रंव्यवसायिनां कुत्सितं कर्म !

लेखकः— "प्रणवः"

इदमिह विदाङ्कुर्वन्तु लौकिकाः परीक्षकाश्च प्रेक्षावन्तः सज्जनाः, यदुत कथमियं मातृभूरस्माकं सर्वथा पराधीनत्वं चिरादनुभवति । अहो ! अपारे खलु भारत-महार्णवेऽत्र निवसतोऽगणितानस्मानेव सर्वतः खादन्तो जयन्ति कतिपये वैदेशिकाः श्वेतजन्तव इति कल्पनयापि कम्पते नूनमस्माकं हृदयम् ! अतः सम्प्रति सर्वं विहाय देशस्य स्वातन्त्र्यमेव विद्यते भारतीयानां साध्यं वस्तु । किञ्च "सङ्घे शक्तिः कलौ युगे" इत्यालोचयतां देशनायकानां राष्ट्रसंघटनेनैकत्वमेव वर्त्ततेऽतितरां समीहितम् । हिन्दु-संघटनादिना शक्तिसञ्चयमभिलषतां साम्प्रदायिकानामपि नितरामेकतैव विद्यते विरामभूमिः । अत एव यथा मिथोविवादो माभूत् तथा सर्वदा यतन्ते नेतारः । किन्तु हन्त ! अद्यापि केचन कलहप्रियाः स्वार्थपरायणा वा शास्त्रव्यवसायिनः स्वभावं न जहति । ते हि छिद्रमन्विष्यन्तस्तथाऽवसरं प्राप्य स्वकार्यमेव साधयन्ति, न पापाद् विभ्यति, नापि लोकान्मनागपि लज्जन्ते । एतादृशानां देशस्य समाजस्य वा कृते न भवति किमपि कर्त्तव्यम् । सर्वथा शास्त्रविरुद्धमेव कार्यं कुर्वाणा अपि इन्द्रियारामा उदरम्भरयः किलैतेऽन्येभ्यः शास्त्रीयामेव व्यवस्थां ददतीति चित्रमेतत् ! एतादृशानामेव

हस्ताक्षरैर्दूषितं व्यवस्थापत्रमेकं पौषस्य पूर्णिमायां जाते "सूर्योदये" प्रकाशितं दृश्यते । व्यवस्थापत्रमेतद् गोस्वामिनां यज्ञोपवीताधिकारविरोधार्थमेव प्रस्तुतमिति सकृदनुवाचनेनैव विज्ञायते । व्यवस्थापत्रमिदं येषां विदुषां हस्ताक्षरैरनुगृहीतं तं विद्यते, तेषामन्यतमः प्रधानश्च म० म० श्रीलक्ष्मणशास्त्री द्रविड एवेति तत्रत्यसम्पादकीयटिप्पण्येन स्फुटं प्रतीयते । अस्तु, तदुत्तरन्तु व्यवस्थापकानां विदुषां संक्षिप्तजीवनवृत्तान्तेन, गृहरहस्योद्घाटनेन, कुलाचारालोचनेन, आतिविमर्शेन च सहैव नातिचिरादेव पुस्तकाकारं प्रकाशिष्यते । यद्यपि तादृशानामुपेक्षैव भवति, साधुतरम्, तथापि बहूपेक्षयापि दुर्जनत्वमेधत एवेति लोकसेवकोऽप्यहमनिच्छन्नपि दुर्वादिशिक्षणकर्मणि प्रवृत्तः । उत्तरपुस्तकं त्वरितमेव निर्यास्यति, पाठका अवसरं प्रतीक्षन्ताम् । एतर्हि तु द्वित्राः प्रश्ना एव क्रियन्ते, श्रीलक्ष्मणशास्त्रिभिरुत्तरं "सुप्रभात" एव देयम् ।

१—भवद्भिः स्वयमेव व्यवस्थापत्रं विधाय तत्र हस्ताक्षरोऽपि विहितः, उत केनचिल्लिखिते व्यवस्थापत्रे शुल्कमादाय हस्ताक्षरमात्रमेव कृत्वा तदीयो महन्निन्दामहापातकभारः स्वशिरसि निहितः ? आद्ये कथमेवा गोस्वामिकुत्सायां भवतां दुष्प्रवृत्तिः ? न च गोस्वामिनां त्रैवर्णिकत्वाभावेन यज्ञोपवीतादावनधिकारादिति वाच्यम्, त्रैवर्णिकगुरूणामेषां वर्णविचारचिन्तायां ब्राह्मणेष्वपि श्रेष्ठत्वेन तदधिकारस्याक्षुण्णत्वात् । विभिन्नप्रान्तेषु गोस्वामिनां शिष्या ये त्रैवर्णिका अद्यापि सन्ति, तेषां कियतां पूर्णसङ्कलनमन्वितां सूचीं पूर्वोक्तोत्तरपुस्तकान्ते नियोजितामचिरादेव द्रक्ष्यन्ति श्रीमन्तः । तस्मादविमृश्यकारिणामतएवाप्रतिपाद्यमेव प्रतिपादयतां प्रेक्षावद्भिरुन्मत्तवदुपेक्षणीयानां भवतां का नाम स्यादवधेयवचनता जनतायाम् ? अन्त्ये शुल्कमधिगत्य शास्त्रव्यवसायं कुर्वतां शास्त्रमर्यादामतिक्रम्य धर्ममवधीर्य च व्यवस्थां ददतां भवादृशानां हस्ताक्षरस्य कियदस्ति मूल्यमिति रहसि हृदि हस्तं निधाय स्वयमेव विभावनीयम् ।

२—द्विविधा हि ब्राह्मणाः साम्प्रतमत्र भारते श्रूयन्ते । एके पितामहादय यावदविच्छिन्नसन्ताना वंशपरम्परयैव विशुद्धाः । अपरे च सम्प्रति आर्यैः शुद्धिं विधाय ब्राह्मणत्वङ्गमिता इव यवनादयः श्रीशङ्कराचार्यैरन्यैश्च राजभिः समये २ यथाप्रयोजनं संस्कृत्य ब्राह्मणीकृता अनार्याः । तत्र के भवन्तः, प्रथमे, द्वितीया वा ? आद्ये किमस्ति विश्वासयोग्यं प्रमाणम् ? अन्त्ये-भवतामेव व्यवस्थया गोस्वामिनां यज्ञोपवीताधिकारविरोधः कथमिव शोभते ?

हंहो बत ! स्वयं सीसकभवने निवसन्तोऽपि भवन्तः परेषामुपरि पाषाणखण्डं निक्षिपन्तीति महदिदं भवतां साहसिक्यं नश्यतेसि चमत्कारमाविष्करोति !

यदि सर्वे भवन्तः सम्प्रति ब्रह्मसन्तानत्वेनैवात्मानं ख्यापयन्तो व्यवहरन्ति, लोका अपि भवतस्तथैव जानन्त्यतो नास्ति भवतां कोऽपि कृत्रिमो ब्राह्मण इत्युच्येत, तर्हि तत्रापि कः प्रत्ययः ? दृश्यन्ते हि साम्प्रतमार्यसमाजिकैः संशोध्य ब्राह्मणपदमापादिता यवनादयः, कियत्कालानन्तरं तेषामेव पुत्रादयः साक्षाद ब्रह्मणः पौत्रत्वादिनैवात्मानं ख्यापयन्तः सद्ब्राह्मणानेवाधरीकरिष्यन्ति, लोका

अपि तान् तथैव मंस्यन्ते । को हि नाम तदानीं तेषां यवनमूलतां शङ्कितुमपि शक्ष्यति !

३—श्रीमन्तः शास्त्रमर्यादारक्षकाः सन्ति । किन्तु समाजे नहि सर्वे भवादृशाः संभवन्ति । केचन वेश्यामभिसरन्ति, केचिद्गम्यागमनं कुर्वन्ति, बहवो गर्भं पातयन्ति, भूयांसो ब्रह्महत्यां सम्पादयन्ति, कतिपये मद्यमपि पिबन्ति ब्राह्मणाश्चपीति नास्ति तिरोहितं भवताम् । तादृशैः सह साक्षात् परम्परया वा विवाहादिसम्बन्धं भोजनादिव्यवहारं च कुर्वन्ति न वा धर्मभीरवो भवन्तः ?

४—श्रीमतां मतौ समुद्रयात्रादिकार्यमपि धर्मशास्त्रविरुद्धमेव विद्यते । किन्तु धृष्टः समाजस्तु भवतामेकमपि न शृणोति ! समुद्रयात्रां विदधात्येव । ये नापि तथा कुर्वन्ति, तेऽपि तथाविधैः सहागत्या केनापि प्रकारेण संबद्धा एव सन्ति । अतः श्रीमन्तः प्रागुक्तदिशा दूषिते समाजे तिष्ठन्ति न वा ?

५—आचारवन्तो भवन्तः कदाचिद्वा वाष्पयानमारोहन्ति न वा ? यतः सहयानमारूढा यवनादयो वीटिकां नीपीय धूममुदरे निगीर्य पुनरपि बहिरुद्गिरन्ति । वान्तः खलु धूमः सहसा सहचराणां-मुखकर्णनासिका-विवरैस्तः प्रविश्य धर्मं धुनोति ! तत्रावस्थानं भवादृशानां धर्मधुरीणानां कथं सम्भवति ? किञ्च गवां चर्मादियोगेन सर्वथा हिन्दुसन्तानैर्हेयानि वैदेशिकानि वस्तूनि, स्यात्, भवन्तो न स्पृशन्ति ?

६—श्रीमन्तस्तु धर्मावतारा एव जयन्ति । किन्तु हन्त ! भवतां समक्ष-मेव सनातनधर्मो बराकः शुद्धि-अस्पृश्योद्धार-विधवाविवाहादिभिः प्रसभं हन्यते । तदर्थं किं कुर्वते दयामया भवन्तः ?

७—गोस्वामिनां यज्ञोपवीतधारणरूपं दुष्कर्म दृष्ट्वा चिन्ताकुलाः श्रीमन्तः सुमेरुमिव दन्तेन भूदारा व्यवस्थापत्रेणैव गोस्वामिवंशं-चेष्टन्ते खनितुमित्यत एव भवतां लोकोत्तरधार्मिकत्वमनुमीयते । परन्तु प्रत्यहं यवनादयो गाश्छिन्दन्ति, मन्दिराणिभिन्दन्ति, मूर्त्तीः खण्डयन्ति, हिन्दुरमणीरपहरन्ति, बालकानपि चोरयन्ति-चेति सर्वं भवन्तः पश्यन्ति, शृण्वन्ति, जानन्ति च । तदर्थं किं विदधति ?

८—आभीरादयोऽपि यज्ञसूत्रं धारयन्ति, क्षत्रियत्वेनात्मानं ख्यापयन्तः स्वधर्मं प्रचारयन्ति च । तेषामिदं कर्म शास्त्रविरुद्धं मन्यन्ते न वा भवन्तः ? आद्ये तादृशमधार्मिकं कृत्यं समालोचयन्तोऽपि नेत्रे पिधाय कर्णयोस्तैलञ्च निधाय कथं तूष्णीं शेरते भवन्तः ? अन्त्ये तु सदैव वयमपि श्रीमतो धन्यान् वदामः !

९—न संस्कारच्युतिमात्रेणैव पातित्यं भवति, किन्तु स्वकर्मत्यागात्-कर्मान्तरपरिग्रहाच्चापि । इत्थं प्रायेण बहवः पतिता इव दृश्यन्ते । तेषां ब्राह्मणत्वमप्यूरीकुर्वन्ति न वा भवन्तः ? आद्ये धन्याः खलु महात्मानः शास्त्रविधिमनुवर्त्तमानाः । अन्त्ये कथं न ते समाजबहिष्कृता भवद्भिः क्रियन्ते ?

# शुद्ध्यर्थमैतिहासिकानि प्रमाणानि

लेखकः—धर्म्मदेव वर्म्मा शास्त्री, वाराणसी

ॐ उतदेवा अवहितं देवा उन्नयथा पुनः ।
उतागश्चक्रुषं देवा देवा जीवयथा पुनः ॥ ऋग्

ब्राह्मणः क्षत्रियो वैश्यस्त्रयो वर्णा द्विजातयः ।
चतुर्थ एकजातिस्तु शूद्रो नाऽस्तितु पञ्चमः ।
मनुः—

शनकैस्तु क्रियालोपादिमाः क्षत्रियजातयः ।
वृषलत्वं गता लोके ब्राह्मणादर्शनेन च ॥
—मनुः १०।४३।

देशभङ्गे प्रवासे च व्याधिषु व्यसनेष्वपि ।
रक्षेदेव स्वदेहादि पश्चाद्धर्म्मं समाचरेत् ॥
पराशर ७।४२।

अयि पाठकाः निरुक्तसंक्षिप्तश्रुतिस्मृतिप्रमाणेषु शुद्धयुपोद्बलकेषु सत्सु 'इतिहासः पुराणञ्च पञ्चमो वेद उच्यते' इति वचनादेव मामकोऽयमैतिहासिकप्रमाणोदाहृत्युपन्यासरूपःप्रयासः, यद्वाश्रुतिस्मृतीरितकर्तव्यताकल्य समयोचितस्य शुद्धिरूपस्य कार्य्यस्याऽकृतिरस्माकम्पूर्वजानां कथं सम्भाव्येतेति वार्ता स्फुटीकर्तुं वा मेऽयं प्रयत्न इति सुधीभिर्ज्ञेयम् । पूर्वं हि यथासमयमास्माकीनाः पूज्या पूर्वजा ब्राह्मणा क्षत्रिया वाऽकुर्वन्नेवशुद्धिमित्यर्थम्प्रमाणानि दास्यन्ते—

( २ ) कण्वेन हि सरस्वत्याज्ञया दशसहस्रसंख्याका म्लेच्छाः संस्कृत्य पूर्वं शूद्रवर्णाय-पश्चात् वैश्य वर्णाय-केचन च क्षत्रियवर्णायाऽक्रियन्त इति भविष्यत् पुराणे प्रतिसर्ग-पर्वणि खं० ४३।२२ इत्यत्र समागात्-तथाहि—

" सरस्वत्याज्ञया कण्वो मिश्रदेशमुपाययौ,
म्लेच्छान् संस्कृत्य चाऽऽभाष्य तदा दशसहस्रकान् ॥ १६ ॥
वशीकृत्य स्वयं प्राप्तो ब्रह्मावर्ते महोत्तमे ।
ते सर्वे तपसा देवीं तुष्टुवुश्च सरस्वतीम् ॥ १७ ॥
पञ्चवर्षान्तरे देवी प्रादुर्भूता सरस्वती ।
सपत्नीकांश्च तान्म्लेच्छान् शूद्रवर्णाय चाकरोत् ॥ १८ ॥
कारुवृत्तिकराः सर्वे बभूवुर्बहुपुत्रकाः ।
द्विसहस्रास्तदा तेषांमध्ये वैश्या बभूविरे १८ ॥ इत्यादिकम् ।

( २ ) मौहम्मदराज्ये मन्दिरेषु मस्जितीभूतेषु आर्य्येषु च मौहम्मदीभूतेषु वैष्णवधर्म्मानुयायिभिः कृष्णचैतन्याऽन्तेवासिभिर्यथागुर्वादेशन्ते प्राग्वत्स्वस्ववर्णं प्रापिताः—यथाच-" रामानन्दस्य शिष्यो वै चायोध्यायामुपागतः ।
म्लेच्छास्ते वैष्णवाश्चासन् रामानन्दप्रभावतः ।
आर्यांश्च वैष्णवा मुख्या अयोध्यायां बभूविरे "

( ३ ) वल्लभाचार्य्यमतस्य ख्यातासु, २५२ वैष्णवानान्तथा ८४ वैष्णवानां वार्तास्वपि-" अलाखानमुख्याः पठानजातीया मौहम्मदा मानवा आचार्य्येण कण्ठी-तिलकादिकं योजयित्वा वैष्णवा व्यधायिषत, पूजायाश्चाधिकारमापिता " इति लिखितम् ।

( ४ ) महात्मबुद्धप्रचारेण त्रिंशत्सहस्रसंख्याका आर्य्या अनार्या अभूवन्-ते च समेऽपि श्रीस्वामिशङ्कराचार्येण शङ्खध्वनिनैव शोधिता इति शङ्करदिग्विजये प्रकटरूपतया लिखितमास्ते ।

( ५ ) ( क ) अजामिलोऽत्यन्तपापोऽपि सकृद्धरि-नामग्रहणेनैव शुद्धइति सर्व्वं विदितम् ।

( ख ) शिवपुराणेचाऽजामिलतोऽप्यधिक पापी गुणनिधिनामा दुष्कर्म्मा शङ्करकृपाकटाक्षेण शुद्ध इति लिखितम् । ऋषिसदृशश्चाऽभूत् ।

( ६ ) सिकन्दरेण सार्धमायाता बहवो ग्रीकजातीया आर्य्यत्वेन परिणताः ।

चन्द्रगुप्तेन सल्यूकसनाम्नः कन्यया सार्धं विवाहो व्यधायि ।

( ७ ) पुष्करस्य पुरातन इतिहासे लिखितं यत् ऋषि-भिर्निरीतिनामा राक्षसः शोधितस्तथा वैदिक धर्मे मेलितः

( ८ ) पार्सी जातीया हि-अद्यावध्यपि गोरक्षेश्वपूजका विद्यन्ते-नित्यं प्रातःस्नानं संध्याञ्च विदधति । तेन तदीयं प्राक्तनं हिन्दूत्वं प्रतीयते ।

( ९ ) शालिवाहनस्य १०२८ शकसंवत्सरस्य शिलालेखेन "मगजातीयानां" ( ये अधुनाऽपि पर्शिया, सीरिया, एशियामायनर, रोमदेशेषु विस्तृता विद्यन्ते ) ब्राह्मणवर्णप्राप्तिवार्ता लिखितास्ति ।

(१०) इतिहासेषु हि एतादृशानि शतशः प्रमाणानि दृश्यन्ते तथा च—

"मार्डनरिव्यू" इत्यत्र एको लेखो मुद्रितः यत् अवरङ्गजेबीय सेनया "नेताजीपालकर" नामा चरवारः मौहम्मदीकृतः—

कतिचिद्वर्षानन्तरं समागतोऽपि पुनरसौ पेशवीकृत इति ।

( ११ ) 'बाजीराव निंबालकरः, बीजापुरनृपते र्न्यायालये निवसतिस्म, सचकेनाऽपि केनचनाऽपराधेन योजितः विपद्गतो निंबालकरोऽधर्म्मदीक्षामग्रहीत, तदनन्तरं स स्वकीय "फलटन" नाम्नि सम्पत्तिस्थाने समागत, कतिचिद्दिनानन्तरं शिवाजीत्यनेन तन्मात्रा-'जीजीबाई, इत्यनयाचाऽसौ स्वपुरोहित "पण्डितरावीय व्यवस्थातः शोधितः ।

इत्यादीनि प्रमाणानि बहूनि सन्ति । आशासेऽशुद्धिम्परिहृत्य स्वीयसन्तः करणं शोधयित्वा, मामकीं लेखाऽशुद्धिमपि शुद्धित्वेन परिणतां कुर्व्वन्तो विद्वांसोऽवश्यमेव शुद्धिकार्य्ये दत्ताऽवधानाः स्वार्थहीना देशोपकारं विधास्यन्ति । व्यर्थ-कोलाहलञ्च त्यक्ष्यन्ति । दुष्टत्वे सल्लेखस्य परिहारमेव, स्वयुक्तियुक्तायुक्तीर्वा मुद्रापयिष्यन्ति ।




# गंगा-गीतम्



प्रणेता—श्रीकविश्रेष्ठ परमानन्दभट्टाचार्यः

सम्पादकः—श्रीपीताम्बरभट्टाचार्यः ( छात्रः )
काव्य-पुराण-भूषणः, राज्य अजयगढ़, ( मध्यभारत )

"ग्रन्थकर्तुः संक्षिप्त परिचयः"

(१) एते खलु पूज्यपादानां, विश्वविदितयशसाम्, कविश्रेष्ठानाम् श्रीब्रजचन्द्रभट्टाचार्याणाम् आत्मजा अपि कवीश्वर-दानाध्यक्ष-धर्माध्यक्ष-राज्याचार्य-राज्यपौराणिक प्रभृतिविविधोपाधिधारिणः परमानन्देति अभिधया बुन्देलखण्ड-मण्डलान्तर्गताजयगढाभिधाम् राजधानीम्, १८७२ तमे विक्रमवत्सरे माघशुक्ल प्रतिपदायाम् भौमवासरे निजजन्मनाऽलञ्चक्रुः ॥

( २ ) एतेषां गुरवः श्रीमदाचार्याः श्री १०८ मुकुन्दलाल भट्टाचार्याः, एतेभ्यः सकाशात् एभिः श्रीपरमानन्द-भट्टाचार्यैः षट्शास्त्राणि अधीतानि—

( ३ ) एभिःनिर्मिता ग्रन्थास्त्वेते —

( १ ) श्रृङ्गार-सप्तशती ( २ ) राजवंश-प्रस्तारः ( ३ ) "गङ्गातरङ्ग नाटकः" ( ४ ) प्रतापमार्तण्डः ( ५ ) वेदान्तसारः ( ६ ) श्रृंगारतिलकः ( ७ ) नवरस-दर्पण

( ८ ) कविप्रमोदः ( ९ ) रसगंगाधरः ( १० ) सहोक्ति-भूषण ( ११ ) माधवविलासः ( १२ ) राजवंश-कल्पद्रुमः ( १३ ) सन्तमिलापः ( १४ ) कवित्तबंध रामायण ( १५ ) राधानखशिखवर्णन ( १६ ) राजनीतिदर्पणः ( १७ ) वेदस्तुति-दर्पणः ( १८ ) एकमुखी-हनुमत-पचासा ( १९ ) पंचमुखी-हनुमत-पचासा ( २० ) हनुमत-पचीसी

( ४ ) एभिः कृताः सन्ति स्वतन्त्राः स्फुट-सवैया, कवित्वादयः बहुधाहिन्दी भाषायाम्

( ५ ) एतेषामुपर्युक्तानाम् ग्रन्थानामेकां शृंगारसप्तशतीं विहाय शेषाः अद्यापि असुद्रिताः । अस्मत् पुस्तकागारे येन केन प्रकारेण संरक्षितास्सन्ति, तेषां मुद्रणार्थं यतामहे ( द्रव्याभावोहि प्रधानकारणम् )

( ६ ) उपर्युक्त साहित्य ग्रन्थरत्नानामेकस्मात् "गंगा-तरंगनाटकात्" कानिचिद् चिराणि पद्यानि सुप्रभातपाठकानां मनोरञ्जनायात्रोद्धरामः

(क) सुचन्द्र चूड चूडिका चलत्तरंग रंगभू,
विहारि वारि वारिद स्फुरत्प्रवर्ष हृद्वेद-
त्रिविक्रमक्रमाक्रमाद्विशीर्णनीरसंभवं,
सदा मुदेऽस्तु स्वर्नदि त्वदीय ताण्डवं शुभम् ॥१॥

(ख) सुमेरुपर्वताश्रयात्पतत्पुरारिपर्वता,
क्रमाद्विशेष विक्रमं प्रदर्शयन् शिवे शिवम् ।
ततस्त्रिलोकमण्डलप्रशंसनीयपावनं,
भगीरथानुगामिनि त्वदीय ताण्डवं शुभम् ॥२॥

(ग) मिलत्सरस्वती सखी कलिन्दकन्यका द्वये,
प्रयागयाम मण्डले त्रिवेणितां ततो गतम् ।
ततः सुविंध्यवासिनीविलासलासभूचलत्-
प्रकाशि काशिकापुरी निवासि ताण्डवं शुभम् ३॥

(घ) सहस्रवारिधारया स्फुरत्प्रभाविशेषव-
द्विलोलवीचि वल्लिका भुजप्रबन्धबन्धुरम् ।
समुद्र संगमागमे पुटप्रभेदसंभव
ध्वनिप्रतान मूर्च्छनालयाग्रखण्ड ताण्डवम् ४॥

(ङ) तट द्वये नदन्महा मुनीन्द्रनारद-
प्रभृत्यशेषशेषशेखरैः स्तुतं नतं प्रपूजितम् ।
पुरन्दरादिवृन्दवन्द्यदेवसुन्दरीलसद्विमान
क्षुद्रघण्टिका रणत्कलापि ताण्डवम् ॥५॥

(च) सुचारुचन्द्रमण्डलप्रभाकरप्रदीपिका,
प्रकाशवत्त्रिलोकरंगभूमिचित्रचत्वरम् ।
उपेन्द्रसत्पदारविन्दसूत्रधारधारितानुराग-
रागरागिणि त्वदीयताण्डवं शुभम् ॥ ६ ॥

(छ) नरेन्द्रजह्नुकन्यकानटी पटीयसी
चलत्तटी तटीषु रेणुराशि तूलिका पटी ततम् ।
सदांससांभ्रमभ्रमत्समुत्थफेनफेणिका
विनोदमोदहासवद्विलासिताण्डवं शुभम् ॥७॥

(ज) परास्तदण्डधृक् पुरि प्रचण्डपातकाकुल-
प्रतापताप शान्ति कृत्सुवासित वारि निर्मलम् ।
पिबन्ति ये मुदा सदा लभन्ति ते पदाम्बुजं
त्रिविक्रमस्य भक्तिदं त्वदीय ताण्डवं शुभम् ॥८॥

## पाणिनीय प्रकाशः ।

परेऽच्यम्परेणान्तस्य पदस्य द्विरुर्भवेत् ।
प्रशानित्यस्य शब्दस्य नत्वित्युक्तं महर्षिणा ॥ ६१ ॥
विसर्गस्य सकारस्यात्परे खरिसतिध्रुवम् ।
शार्ङ्गिंश्छिन्धि महद्दुःखं शार्ङ्गिंश्छिन्धि सदा रिपून् ॥६२॥
चक्रिंस्त्रायस्व मां चक्रिंस्त्रायस्व कृपया द्रुतम् ।
पदस्येति विनिर्देशाद्धन्तीत्यादौ न दुष्टता ॥ ६३ ॥
अम्परे चेति निर्देशात्सन्त्सर्वादौ न दुष्टता ।
अप्रशानिति निर्देशात्प्रयोगेषु न दुष्टता ॥ ६४ ॥

प्रशान्तनोत्यादिकेषु बोध्यमेतद्बुभुत्सुभिः ।
नॄनित्यस्य भवेद्रुर्वा पकारेतु परे सति ॥ ६५ ॥
विसर्गस्य कवर्गे च पवर्गेच परे सति ।
जिह्वामूलीयस्तथोप-ध्मानीयो भवति क्रमात् ।६६॥
पक्षान्तरे विसर्गोऽपीत्युक्तं पाणिनिना स्फुटम् ।
नॄँ ᳵ पाहि शिव नॄँ ᳶ पाहि विष्णो नॄः पाहि भास्कर॥
नॄँः पाहि देवि नॄन्पाहि गणेशेति सदा जप ।
कानित्यस्य नकारस्य रुःस्यादाम्रेडिते परे ॥ ६८ ॥
उत्तरस्य विसर्गस्य कस्कादिकगणेत्विणः ।
षकारो भवति स्थाने सकारश्च ततोऽन्यतः ॥ ६६ ॥
कस्कःकैातस्कुतोभ्रातुष्पुत्रोऽहस्करभास्करौ ।
अयस्कान्तो यजुष्पात्रं सद्यस्कालस्तथै वच ॥ ७० ॥
सद्यस्कीश्चैव साद्यस्कः काँस्कान् वर्हिष्पलं तथा ।
मेदस्पिण्डस्तथा सर्पिष्कुण्डिकाच वर्हिष्पलम् ॥७१॥
धनुष्कपालमपि च शुनस्कर्णस्तथैव च ।
अयस्काण्डस्तमस्काण्ड इति कस्कादयस्स्मृताः॥७२॥
तथाऽऽकृति गणः प्रोक्तो मुनिभिर्महितैरयम् ।
काँस्कान्निहन्ति कस्कोऽयं कांस्कान्नेतिविलोकय ७३
परेसतिच्छकारेतु ह्रस्वस्य स्यात्तगागमः ।
संहितायां यथा भाति शिवच्छाया निरन्तरम् ॥७४॥
परेसतिच्छकारे स्यादाङ्माङोर्हि तुगागमः ।
लोकानाच्छादयत्यस्य कीर्त्तिस्तां माच्छिदद्भवान् ॥
परे सतिच्छकारे स्याद्दीर्घस्य हि तुगागमः ॥
चेच्छियते महापापान्यपि संस्मरणं हरेः ॥ ७६ ॥
दीर्घस्य स्यात्पदान्तस्य च्छे परे वा तुगागमः ।
लक्ष्मीच्छायाऽवताल्लक्ष्मीछायामे मङ्गलं क्रियात् ॥७७॥

॥ इति हल्सन्धिः ॥

## श्रीकृष्णनाम प्रचारकसमितेः विशिष्टाधिवेशनं

अस्मिन् सम्वत्सरे भाद्रपदकृष्णे श्रीकृष्ण-जन्माष्टम्याम् श्रीकृष्णनामप्रचारकसमितेः विशिष्टाधिवेशनम् श्रीभट्टमुरलीधरजी तैलङ्गानाम् सभापतित्वे महता सम्भारेण सम्पत्स्यते । तस्मिन्नेवावसरे सनातनधर्मप्रचाराय श्रीकृष्णनामप्रचाराय छात्राणां संग्रथनाय विदुषां आंग्लछात्राणाम् हृदयाकर्षकानि विचित्राणि व्याख्यानानि भविष्यन्ति । अतः साञ्जलिप्रार्थयामहे सर्वमान्याः सनातनधर्मप्रधानकेन्द्रश्रीकाशीस्थाः विश्वविदितयशसः विद्वांसः ३१ अगस्त पर्यन्तम् सर्वजनहितकरान् सरलान् लेखान्नुल्लिख्यप्रे षयेयुः ।

अजेयगढ (सी० आई०)

निवेदकः—
श्रीकृष्णनामप्रचारकसमिति-
प्रधान मन्त्री—
*श्रीपीताम्बर भट्टाचार्यः*

## श्री सनातन धर्म सभा चूरू ।

चूरूस्थश्रीसनातनधर्म-परिषदोऽष्टादशवार्षिकोत्सवो भाद्रपद शुक्ल १०-११-१२ तिथिषु महता समारम्भेण सम्पत्स्यते । अत्रावसरे श्री वेद भगवतः शिविकाऽपि, अति समारोहेन निस्सरिष्यति । सनातनधर्मस्य च प्रकाण्ड पण्डितानां मनोहरप्रभावोत्पादकभाषणानि भविष्यन्ति । अतः सर्वेषामुपस्थितिः प्रार्थनीया ।

स० मंत्री स० ध० सभा । चूरू B. S. Ry.

निवेदको
*वी० जोशी "विशारदः"*



## स्त्रीणां संस्कृत-शिक्षा ।

ले०—श्री महादेवशास्त्री पाण्डेयः, साहित्याचार्यः

विश्रूयन्ते यतो वेदे मन्त्रपश्या वराङ्गनाः ।
समाधिभाजां महतामृषीणां समशक्तयः ॥ १ ॥
शास्त्रार्थे कृतबुद्धीनां वादिनामूर्ध्वरेतसाम् ।
विजेत्री स्त्री श्रुता गार्गी बृहदारण्यके यतः ॥ २ ॥
वाल्मीकिपार्श्वादायान्ती निगमाधिजिगांसया ।
अगस्त्यतोऽधिलिखिताऽऽत्रेयी यद्‌ भवभूतिना ॥३॥
द्रौपदी, विदुला, कुन्ती, दमयन्त्यादयस्त्रियः ।
वैदुष्येऽभिहिता यस्मात् पुराणेषु मुहुर्मुहुः ॥ ४ ॥
गृहे विहरमाणानां बालानां देशसम्पदाम् ।
शिक्षा विनिहिता सर्वा यस्मात् स्त्रीष्वेव नैत्यिकी ॥५॥
आयुष्याहारसम्पत्तिः प्रबन्धो गृहसम्पदाम् ।
शिक्षितास्वेव योषित्सु स्थिरं यस्मादहर्निशम् ॥६॥
विदुषां वीर्यसम्पत्तिजुषां काले शुभेऽशुभे ।
कार्यानुष्ठानसम्पत्तौ स्त्रीषु शिक्षा यतो ध्रुवा ॥ ७ ॥
ज्ञानजन्ये परामोदे सर्वानुभवसाक्षिके ।
योग्यता सत्त्वसम्पत्तावधर्म्या च पृथक्कृतिः ॥ ८ ॥
पाश्चात्यभाषाणां शिक्षा प्रकृतीनां गिरां तथा ।
दीयते दास्यते यत्नात् सर्वस्त्रीभ्यो यतो द्रुतम् ॥ ९ ॥
अतोधर्म्यात् प्रधानत्वात् देशसम्पत्तियोगतः ।
पाश्चात्यभाव-संस्कार-वैमुख्यात् सुखवृद्धितः ॥१०॥
सौकर्य्याच्चाथ संवादात् सर्वसद्व्यवहारतः ।
सर्वाः कुमार्यः शिक्ष्यन्तां देवीं संस्कृत्रिमां गिरम् ११
विद्वद्भिश्चैव सर्वैश्च च्छात्रैः पाठालयैः शुभैः ।
वाराणस्यां विशेषेण यदियं संस्कृता पुरी ॥ १२ ॥
भवन्तः परमेशश्च भावनां नो हृदि स्थिताम् ॥
पूरयेयुरिमामन्ते प्रार्थयामः पुनः पुनः ॥ १३ ॥





## धारा यन्त्रम् ।

तिपू तिपू तिपेति स्वनितं वितन्वत्
आगन्तुकानां नयनानि कर्षत् ।
रौप्याः शलाका इव तोयधारा
उच्चैर्विमुञ्चच्छविमेति यन्त्रम् ॥ १ ॥
चित्तं नराणामिव कामनाभि—
र्धाराभिरूढं मुहुरुच्छलन्तम् ।
क्रमेणपार्श्वं परिवर्तयन्तं
तं कन्दुकं भो ! अवलोकयध्वम् ॥ २ ॥
जाता अभिन्ना ऋजवः समाना
धारा इमा यन्त्रमुखात्स्रवन्ति ।
किन्तून्नतिं प्राप्य पृथग्भवन्त्य—
आशासु शीर्णा शतधा पतन्ति ॥ ३ ॥
आलोकसम्पर्कसमुज्ज्वलाभाः
कीर्णाः समन्तान्निपतन्त्यधस्तात् ।
व्यस्ता निपाने जलबिन्दवः किं
मुक्ताफलानामुतवृष्टिरेषा ? ॥ ४ ॥
धाराः कणा बुद्बुदशीकराश्च
इत्येवमासाद्य तु नामरूपम् ।
जलं जले संमिलदेतदाह
जीवः कथं ब्रह्मणि यात्यभेदम् ॥ ५ ॥

उत्पद्यमाना जलबिन्दुपातं
　　ध्मातोदराः सुन्दरमुल्लसन्तः ।
क्व बुद्बुदा यान्ति नु पश्यतां नो
　　हा हन्त ! वस्तुक्षणभङ्गुरत्वम् ॥ ६ ॥

विस्तारयन्बर्हमतीवहृष्टः
　　पर्जन्यवर्षामवयन्वराकः ।
धाराप्रपातोद्भव-चारुशब्दं
　　शृण्वन्नयं नृत्यति मत्तबर्हो ॥ ८ ॥

इन्द्रेण पृथ्वी परिषिच्यते यत
　　यन्त्रं तदेवर्णमपाचिकीर्षत् ।
वेगेन धारा उपरि प्रकीर्य
　　मार्गं सुरणां प्रतिषिञ्चतीव ॥ ८ ॥

कर्णाय गीतं नयनाय शीतं
　　चित्ताय शातं मतये प्रसादम् ।
उदारमुत्सर्जयते कलाय
　　यन्त्राय तुभ्यं स्पृहयामि नित्यम् ॥ ९ ॥

( बहादुरचन्द्रः शास्त्री )

## रामोलक्ष्मणमब्रवीत् ।


एकदा कश्चिद्रामानुयायी ( *वैरागी ) छात्रो नगरे भ्रमन् कस्यचित्पण्डितस्य मुखात् "रामो लक्ष्मणमब्रवीत्" इति वाक्यमश्रृणोत् । स वराकः स्वमनसि बहुधा विचारयन्—निरुक्तवाक्यात "रामः-रामचन्द्रस्यार्थकः, लक्ष्मणः-लक्ष्मणदेवस्य बोधकः"—इति शब्दार्थं निर्धारितवान् । पर 'मब्रवीत्' इत्यस्य किमर्थो भविष्यतीति चिन्तयन्निजसहपाठिवर्गस्य समीपं जगाम, पप्रच्छ च तान् 'मब्रवीत्' इत्यस्यार्थम् । सर्वे ते परस्परं बहुतर्क-वितर्कैः 'मब्रवी इति दीर्घ-ईकारान्तः सीताया नाम साधितवन्तः । परं 'त्' कारस्यार्थो नाद्यापि ज्ञातः । अतस्ते परमोद्विग्नमानसा निजाचार्यचरणानामुपकण्ठेऽगमन् । अकथयंश्च—

भगवन् ! 'रामो लक्ष्मणमब्रवीत्' इति वाक्ये-रामः, लक्ष्मणः, सीता, इति नामानि ज्ञातानि, परन्तु 'त्' कारस्यार्थो न ज्ञायते कृपया स्फुटीक्रियताम् ।

आचार्यपादाः—भो मूर्खाः ! एतावान्समयो ममोपकण्ठेऽतिवाहितः, किमद्यापि न ज्ञायते; पुच्छयुक्तस्य तकारस्यार्थः । बालिशाः ! 'त्' कारोऽत्र लाङ्गूलिनं हनुमन्तं द्योतयति । तज्ज्ञातम् !

छात्राः—आः भगवन् ! ज्ञातम् । धन्या गुरवो धन्याः ! यैः पुच्छयुक्तस्य तकारस्यार्थो हनुमानिति निर्दिष्टः, हूँ, हुँ, धन्या गुरवो †धान्या गुरवश्चेति शिरः चालितवन्तः ।

चक्रधरशर्म्माबहुगुणः ।

---

* विरागिणः प्रायः शब्दानामर्थं स्वेच्छया निरर्गलं स्वाभिमतं कुर्वन्ति ।

† तेषामन्ते धन्यधान्ययोरपि विशेषो न स्यात ।

---

## सूचना ।

सौराषाढश्रावणयोः सुप्रभातं विलंबेन प्रकाशितं, तत्र सर्वेषां संपादकादीनां शरीराऽस्वास्थ्यं हेतुः । सत्वरमेव भाद्राङ्को यास्यति भवतां सविधे ।

—सम्पादकः

# वैदिकर्षीणां समुद्रज्ञानम्

( लेखकः—पं० कृष्णदत्तभारद्वाजः शास्त्री, बी. ए. )

सम्प्रति खल्वाङ्गलदेशीया विद्वांसो वेदानधीत्य भारतीयानां प्राचीन-सभ्यताविषये यल्लिखन्ति तन्न सर्वथा निर्दोषम् । संस्कृत-साहित्य-निष्णातेन ऑर्थर ए. मैकडॉनल नाम्ना महोदयेन वेदानां पौरुषेयत्वं[1] प्रतिपाद्य "ऋग्वेदसमये आर्य्याः समुद्रेण परिचिता नासन्" इत्युक्तम् । स्वमतपोषणे तेनेमा युक्तय उपन्यस्ताः ।

प्रथमन्तावत् सिन्धु-( नदी )-सागर-सङ्गमे सिन्धोरनेकविभागानां वर्णनं वेदे नास्तीतिहेतोर्ज्ञायते यत् तेषामृषीणां सागरज्ञानन्नासीत् ।

द्वितीयम्, आधुनिकजनैरुपसागरं यथा मत्स्यमारणमनुष्ठीयते तथा ऋग्वेदे वर्णनं न कृतम् । यद्यपि बहूनां पशूनां विहङ्गमानाञ्च नामोल्लेखो विहितस्तथापि मत्स्यशब्दस्य केवलमेकवारमेव प्रयोगः । अतः समुद्रोऽज्ञात एवासीत् ।

तृतीयम्, ऋग्वेदे समुद्रोपमाऽभावः । अतो ज्ञायते यत्ते वैदिका ऋषयोऽज्ञातसागरा अभूवन् ।

चतुर्थम्, ऋग्वेदप्रयुक्तेन समुद्रपदेन सिन्धुसरिदेव व्यजतेऽतो हेतोर्मुनीनां समुद्रस्य ज्ञानन्नाऽऽसीत् ।

पञ्चमम्, समुद्रे गमागमौ नासीत्, जलयात्रा-यानद्या मेव प्रचलितत्वात् ।

एतासा मुक्तीनां सन्तीमाः प्रत्युक्तयः ।

( १ ) ननु सिन्धो रनेक विभागवर्णस्य वेदेऽदर्शनात्प्राचीना आर्य्याः समुद्रेण परिचिता नाऽऽसन्निति न । वेदे निखिलपदार्थानां वर्णनस्याशक्यत्वाद्विशिष्टानामेव वस्तूनामुल्लेखः । अर्वाचीनजनमतानुसारं लवणप्रधाने पञ्चनदप्रदेशे ऋषिभिर्निर्मिते ऋग्वेदे लवणस्योल्लेखमदृष्ट्वा किमिदं वचो युक्तं स्याद् यद् वैदिका ऋषयो ऽलवणमेव खाद्यमाहुः ? नहि, एतादृग्वचो नितान्तं भ्रान्तमेव स्यात् ।

( २ ) ननु समुद्र-सञ्जात-मत्स्यमारणस्य ऋग्वेदे ऽनुल्लिखितत्वादार्य्याः समुद्रं न जज्ञिरे इति न । परिसंख्यावाक्यैर्जीवानां नैसर्गिकीं मांसभक्षण-प्रवृत्तिं निरोधयति वेदे मत्स्यमारणावर्णनस्य वीक्षणेच्छाऽऽकाशकुसुम-लाभ-कामना-तुलामधिरोहति।

( ३ ) ऋग्वेदे समुद्रोपमाऽभाव इति वचनमपि न युक्तम् । समुद्रपदपर्यायः खलु अर्णवशब्दः । महामहाजलाशयत्वादेव समुद्रोऽर्णव इति कथ्यते । क्वचित्तु वेदे अर्णवशब्दः समुद्रस्य विशेषणमस्ति, क्वचिच्च स स्वतन्त्ररूपेणाऽपि प्रयुक्तोऽवलोक्यते—यथाऽघमर्षणसूक्ते "ततः समुद्रो अर्णवः समुद्रादर्णवात्" इत्यत्र विशेषणतया प्रयुक्तः । तथा "महान्केतु र्रणवः सूर्यस्य" इत्यस्मिन्पदे स्वतन्त्रतया प्रयोगः । अर्णवः अर्थात् सागरः इव विस्तृतश्चलो वा सूर्यस्य केतुः । अत्र समुद्रेण सह उपमा विशदैव ।

( १ ) लेखकमते तु वेदानामपौरुषेयता ।

(४) ननु समुद्र-पदेन सिन्धुनदे व्यज्यमाने सागरज्ञानमृषीणान्नाऽभूदिति चेन्न । सन्ति भूयिष्ठा ऋचो यत्र समुद्रशब्देन सागर एव ध्वन्यते—उदाहरणार्थम्

" समुद्रार्था याः शुचयः पावकाः
ता आपो देवीरिह मामवन्तु "

अर्थात् येषां सागर एव प्राप्तव्यं स्थानम् तानि सलिलानि मा पालयन्तु । अत्र समुद्रपदात् सिन्धु-नदी-ग्रहणे मानाभावात्सागर एव वाच्यः । स्वयमुक्तमहोदयेनापि

" समुद्रज्येष्ठाः सलिलस्य मध्यात्
पुनाना यन्त्यनिविशमानाः "

इति मन्त्रव्याख्यावसरे " Having the *occan as their chief* अर्थात् सागरो यासामपां प्रधानम् " इति प्रोक्तम् । अतः स्पष्टमेव वदतोविरोधः । सिद्धमेव सारूप्तं वैदिकर्षीणां समुद्रज्ञानम् ।

(५) ऋषीणां समुद्रज्ञाने सिद्धे, वेदे च नौकादिशब्देषु विद्यमानेषु कथंकारं कोऽपि वक्तुं समर्थो यत्ते समुद्रे जलपथेन यात्रान्नाऽकार्षुरिति । वेदतस्तु ऋषीणां कूप-सरः-सरित्-सागरादि-कानां विविधानां जलाशयानां ज्ञानं सिध्यतीति निश्चयः । प्रमाणं चात्रायमन्त्रः—

" या आपो दिव्या उत वा स्रवन्ति
खनित्रिमा उत वा याः स्वयंजाः
समुद्रार्था या शुचयः पावकास्ता
आपो देवी रिह मा मवन्तु " (ऋ० ७,४९,२)

तथा च :—

" इति न शुष्कं सरसी शयानम् " ७।१०३।२
" सरो न पूर्णमभितो वदन्तः " ७।१०३।७
" आर्ष्टिषेणो होत्र मृषिर्निषीदन्दे-
वापिर्देवसुमतिं चिकित्वान् ।
स उत्तरस्मादधरं समुद्रमपो
दिव्या असृजद् वर्ष्या अभि " ॥

" समुद्रः कस्मात् ? समुद्द्रवन्त्यस्मादापः, सम-भिद्रवन्त्येनमापः, सम्मोदन्तेस्मिन्भूतानि समुदको भवति, समुनत्तीति वा ' निरुक्तम् ॥ इति

—०००—



## ॥ पृथिवीशयनम् ॥

(ले०—श्री विन्ध्येश्वरीप्रसादपाण्डेयः, ज्यौतिषाचार्यः, ज्यौतिषतीर्थः)



यद्यपि महर्षिप्रणीतेषु प्राचीन-ग्रन्थेषु पृथिवी शयनविषय-मवलम्ब्य न कुत्राऽपि विचारः समुपलभ्यते तथापि अर्वा-चस्तु—

" प्रद्योतनात् पञ्चनगाङ्कसूर्य-नवेन्द्र षड्विंशमितानि भानि ।
शेते मही नैव गृहं विधेयं, तडागवापीखननं न शस्तम् " ॥

इति मन्यते । सूर्यनक्षत्रात् पञ्चमेसप्तमे नवमे, द्वादशे, एकोनविंशतौ, षड्विंशतौ च दैनिके चान्द्रे भे मही शेते । तत्र च तडागवापीकूपादि-

महोदयाः सन्ति । सम्पादकाश्च त एव भवतां परिचिता भूतपूर्व-सुप्रभात-सम्पादकाः श्रीमन्तः पण्डित-केदारनाथशर्माणः सारस्वताः । काशीस्थानाञ्च बहुश्रुतानां विदुषां महामहोपाध्यायपदभाजामत्र लेखास्तिष्ठन्तीत्यपि सुवर्णे गन्धसमवायः । मूल्यं वार्षिकम् २) प्राप्ति-स्थानम्—

व्यवस्थापक-सनातनधर्मोदय, टेढीनीम,

वनारससिटी

*　　*　　*　　*

## वाढनगेर सतीत्वपरिणामः ।

सर्वेषामेव समाचारपाठकानां विदितमिदम् । यद् वाढ़नगरे काऽपि सती स्त्री स्वपतौ मृते तच्छरीरमादाय चितामारुह्य स्वीयमपि नश्वरं शरीर मग्नौ हुत्वा भारतीयोज्वलं रत्नं सतीत्वं पुनरपि भारतेऽस्मिन् कलौ प्राचीकशत् । परन्तु तदीयबान्धवानां तत्सतीत्वानुज्ञादानापराधे पाटलिपुत्र-न्यायालयतः सपरिश्रमः कारागारे वासोऽभूत् । तत्रैव न्यायपतेर्विचारपद्धतेरालोचनया कतिपयानाम् विहारप्रान्तीयनेतॄणां 'जगत्लाल'-' सर्चलाइट्'-सम्पादक-महोदयानामपि तस्मिन्नेव गृहे सपरिश्रमो वासो जातः । वृत्तमिदमाकर्ण्य कस्यच सनातनधर्महितेच्छोर्हृदयं क्रोधेन शोकेन च न क्षुभ्येत । परन्तु केऽपि धर्मशास्त्राचार्य्या अत्र विषये स्वमुखमुद्रां नविघटयन्तीत्येतदेवाश्चर्य्यम् । इदानीं वङ्गीय-ब्राह्मणसभयाऽखिलभारतवर्षीय-ब्राह्मणानां महासम्मेलनं विधातुमुपक्रान्तम् तयैवम्भूतानां विषयाणां विचारो यदि कृतः स्यात्तर्हि स्यादपि तस्याः साफल्यम् । केवलं कोलाहलमात्रेणैव विरतायां तस्यां न भविष्यत्यस्माकं सन्तोषः । अतो वयमनुरुन्धमहे तत्संयोजकान् यदेवम्भूतानां विषयाणां विचारन्तेऽवश्यं कुर्य्युः । पश्यन्तु भारतीयसभ्यताया हृदयं सतीत्वं विद्यते । तस्य रक्षणं यदि भवतामभीष्टञ्चेत्पुनरपि सतीत्वप्रथायाः प्रचाराय यतन्ताम् । तद्विषयकं राजकीयं निरोधनियमञ्चापसारयन्ताम् नो चेत् एकतः सतीत्वनिरोधोऽपरतश्च पुरुषवहुविवाहानिरोधोऽन्यतश्च कामवासनावृद्धिकरवैदेशिकसभ्यता-प्रचारोऽपरतश्चभवदनुमोदितपुंस्त्वविघातकवालविवाहवृद्धविवाह-प्रसार इत्येते समुदिताः कारणकलापा आर्य्यनारीणां चरित्रगौरवं हठाद्विनाश्य व्यभिचारमुत्कर्षयन्तो भ्रूणहत्यादिमहापापान् समेधयन्तो यवनसंख्यां वर्द्धयिष्यन्त्येवेति शृण्वन्तु सत्यमप्रियम् ।

---

## समालोचनासारः ।

### स्तुति-कुसुमाञ्जलिः—

श्रीमज्जैनाचार्य्य श्रीदेवचन्द्र सूरिभिर्विरचितेयं स्तुतिः पार्श्वचन्द्रसूरीश्वराणां हेमचन्द्रसूरीश्वराणाञ्चाष्टकप्रयुक्ता अतीव सरससरलैः भावभूषितैः पदैरलंकृता सर्वैरेव तदुपासकैरन्यैश्चापि सज्जनैरवश्यं द्रष्टव्येति । तत्प्राप्तिस्थानम्—

श्रीहेमचन्द्रसूरि,

जैन-पुस्तकालय, वीकानेर ( राजपूताना )

या महाशक्तिः प्रादुर्भूता तामेव सर्वतः पवित्रतमया तपश्चर्यया प्राप्तुं प्रयतन्ते स्म । भगवत्याः पार्श्वद्वये सरस्वतीलक्ष्मीगणेशानां मूर्तिं पश्यामः, सरस्वती कला तथा विद्याऽस्ति विघ्नराजो विज्ञानमूर्तिश्चेति । पूर्णशक्त्युपासकैर्विद्यायास्तथा कलाया विज्ञानस्य चोन्नतिः करणीया । अथ तावद्देशस्य सुखसमृद्धये श्रीमहालक्ष्मीमूर्तेर्भावसाधनं कर्तव्यम् । इदमेव शक्तिपूजाया मुख्यरहस्यम् शक्त्युत्पादनस्य साधनश्चास्ति । तेषामनुष्ठानं शारदीयनवरात्रे महिषासुरमनोविकाराणां विनाशनेऽजायत । इदमेव शारदीयनवरात्रस्य महत्वमप्यस्ति । पुराऽमन्यतास्माकं पूर्वजैरपि विजयादशमी, अस्माभिरपि साम्प्रतं मन्यते । तैर्वास्तविकी विजयादशमी मन्यते स्म । सांप्रतमस्माभिस्तस्याः प्रतिविम्बमात्रमपि मानयितुं न शक्यते । अद्य वयं विजययात्राया वार्तामपि ध्यातुं न शक्नुमः । यतो वयं निर्बलाः स्मः । विजययात्रा निरन्तरं न भवति । किन्तु शक्तेरावश्यकताऽत्रास्ति । यतोऽनया विनाऽऽत्मरक्षामपि कर्तुं न कोऽपिशक्तः । साम्प्रतमस्माभिरप्यात्मरक्षा कर्तुं न शक्यते । एतत्प्रत्यक्षम् । वयं बलशालिनो भवेम इति विजयादशमी मानयितव्या । प्राक्काले विजयादशम्यां परस्परं मिलनस्य व्यवस्थाऽऽसीत्, सांप्रतमपि कतिपुचित् स्थानेष्वेवमेवास्ति । वयमपिमिलामोऽधुना विभिन्नैः परिवारैः सम्बन्धिभिश्च । विजयादशमी केवलं पारिवारिकमहोत्सवो नास्ति किन्तु राष्ट्रमहोत्सवोऽयं हिन्दूजात्याः सर्वासां व्यक्तीनामन्तर्गतानां विभिन्नसंप्रदायानां च परस्परं मिलनस्य व्यवस्था कर्तव्या । विजयादशम्याः सङ्गमे स्पृश्यास्पृश्यभेदोऽपि दूरीभवति विन्ध्याचलादिषु बहुत्र देव्यालये सर्वेऽपि स्पृश्यास्पृश्याः परस्परं सङ्घर्षमाचरन्तो देवीमर्चन्ति ।

हिन्दुजातौ संमिश्रणेन शक्त्युत्पन्नार्थमेव अस्योत्सवस्य सृष्टिर्जाता । यस्यभग्नावशेष एवायं यत्र कुत्रचनोपलभ्यते । अधुनापि हिन्दुराजानां साधारणतः सर्वेषां क्षत्रियाणामयं महोत्सवः क्षात्रधर्मस्य भावं प्रकटयति । प्रायोऽत्र खड्गस्य पूजा भवति, मल्लयुद्धस्यायोजनं जायते, व्यायामालयस्य (अखाड़ा ) व्यवस्था क्रियते । किन्तु साम्प्रतमिमानि कार्याणि नष्टप्रायाणि दृश्यन्ते । किं बहुना, एषां सार्वजनिकरूपं च नष्टमभूत् हिन्दुजातिः धर्मप्रधाना जातिः किन्तु धर्मत्राणाय देशरक्षार्थं च वीरजातिरप्यासीदिति । अतः खल्वस्या अन्यगुणानां यथावश्यकताऽस्ति, तथैवास्या जातेरस्त्रवलस्याप्यावश्यकताऽस्ति । वहुधा पश्यामो वहवः खलु हिन्दुयुवका यवनानां पैगम्बरोत्सवे (ताजिया) यवनव्यायामस्थाने गच्छन्त्यन्योन्यं वाहुयुद्धं व्यायामञ्च कुर्वन्ति । तस्मिन्समये यवनदेवलकैरन्यैरपि यवनैःशिल्पकार-काम्बविक-लोहकारादिभिः हिन्दुयुवका यवनमतावलम्बिनः क्रियन्ते । यवनैश्च प्रतिव्यक्ति नियमोऽयं कृतोऽस्ति यत् स्वजीवने दश हिन्दवो यवनमते कर्तव्याः । मान्या भारतीयाः ! अतोऽयंदशमीमहोत्सवः श्रीमद्भिः पुनरपि स्वहृदे स्थापनीयः पुनरपि श्रीदुर्गा देवी शुद्धैः स्वदेशजैर्वस्त्रैः शक्तिसञ्चयायैव पूजयितव्या वयंतु मन्यामहे यदेवमेव भारते पुनरपि बलवृद्धयै प्रतिग्रामं व्यायामशालाप्रभृतयो विनिर्मेया येन स्यात् पुनर्विजयो भारत-वसुन्धराया इति निगद्य विरमति भवतां विधेयः ।

# सम्पादकीयम्

## व्यवस्थापिकासभायामनधिकारचर्चा

इदानीं व्यवस्थापिकासभायां श्रीहरिसिंह गौडमहाशयेन श्रीहरविलासशारदा महोदयेन च क्रमशो विवाहसम्बन्धविच्छेदविषये विवाहकाल-नियमविषये च नियमौ निर्मापयितुं प्रस्तावद्वय-मुपस्थापितम् यदाशयश्च क्रमश एवं विद्यते—

तत्र प्रथमे यदैव दम्पत्योर्मध्ये कश्चन विवाद उपतिष्ठेत् उत कोऽपि दोषः स्त्रिया पुरुषे उपलक्षितश्चेद्वा आहो पुरुषेण स्वपत्न्याः कश्चनामर्षणीयो दोषो दृष्टश्चेत्तर्हि उभाभ्यामपि यथेच्छं विवाह-सम्बन्ध-त्यागः परस्परं कर्तुं पार्य्यते। तत्र राजनियमतस्ताभ्यामन्योऽन्यसम्बन्धत्यागं कृत्वा स्त्रिया च पुरुषान्तरेण पुरुषश्च स्त्र्यन्तरेण पुनः सम्बन्धः कर्तुं पार्य्यत इति।

द्वितीये च—चतुर्दशवर्षतो न्यूनवयस्कायाः कन्यायाः परिणयं कर्त्ता कारयिताऽनुमोदकस्त-त्संस्कारकर्ता पुरोधाश्च, एवमष्टादशवर्षतो न्यून-वयसो बालकस्य परिणयं कर्त्ता कारयिता तत्सं-स्कारकश्च पुरोहितोऽर्थदण्डेन कारागारवासदण्डेन च दण्डिता भविष्यन्तीति।

अत्र विषये ममेयानेव वक्तव्यो विद्यते यत् क इमे एवंभूतानां नियमानां निर्मातारः प्रस्तावका वा यतो हि भारतमहाराज्ञ्या श्रीव्यक्तोर्जया ( विक्टो-रिया ) देव्या त्वेवं प्रतिज्ञातमस्ति 'यन्नाहमार्य्यधर्मे हस्तक्षेपं करिष्यामि, नापि मदुत्तराधिकारिण इति' एवं सति मध्ये मध्ये व्यवस्थापिकासभायां श्रीगौड-श्रीशारदामहाशय-प्रभृतीनां धार्मिकविषये नियमादिनिर्मापणप्रयासोऽनधिकृतिचर्चैव प्रति-भाति। नियमोऽयं समीचीनोऽसमीचीनो वेति विचारणायामपि प्रथमनियमस्तु भारतीय-संस्कृति-विनाशक एव। यतो हि आर्य्यधर्मे दाम्पत्यबन्धनं हि धार्मिकं बन्धनम्। न केवलमैहिकोपभोगायैवा-र्य्याणां भवति विवाहबन्धनम्। किन्तु संसारया-त्रापारमासादयितुं वैदिककर्मकाण्डादिविधान-योग्यतालाभायैवेति। अपरश्च लौकिकविचारे-णापि दाम्पत्यप्रेम्णः स्थैर्य्यं यथा सम्बन्धाविच्छेद-नियमे भवति, न तथा, सति सम्बन्धविच्छेदनि-यमे पश्यन्तु पाश्चात्यदेशेषु प्रतिदिनमीदृशैरेवा-भियोगै र्न्यायालयाः सम्भृता भवन्ति। तत्र तु गार्ह-स्थ्यसुखं दुःखबहुलमेव भवति। पत्नी कथयति यत् मम पतिर्मे हस्ते मोदकमदत्वा ममाग्रे निहितवा-नतोऽहम् पत्यन्तरं करिष्यामि। एका कथयति यन्मम जन्मदिनोत्सवे मे पति र्मह्यं किञ्चिदुपा-यनं बहुमूल्यं नाददतोऽहं तं विहाय पत्यन्तरं करि-ष्यामि। इत्यादि। किमिमामेव दशामत्रापि द्रष्टुमिच्छति गौडमहोदयः? श्रूयते प्रस्तावोऽयं

स्थगितो भूदिति । अहो भारतभाग्यत एव प्रस्तावोऽयन्नोपस्थितः संसदि, नो चेदेकतो विलुप्तगौरवस्यास्य देशस्यायं द्वितीयो गण्डस्योपरि विस्फोटकः सम्वृत्तः स्यादिति ।

द्वितीयः शारदीयः प्रस्तावस्तु उपस्थित एवास्ति संसदि । सोऽपि तु महानर्थकारी । यद्यपि आधुनिकीं वालविवाहप्रथां दर्शं दर्शं तु सर्वेऽपि विज्ञा देशकालविदस्तत्समर्थका एव । परन्तु नायं पन्था वालविवाह–निरोधस्य साधीयान् । एवन्तु अनर्थपरम्परैवोदेष्यति । यतोहि आधुनिकी शासनपद्धति र्नास्माकं कल्याणमीहते, अपि तु स्वहस्तप्रसारमेव । एवं कृते तस्या एव वलवृद्धि र्भवति इदमस्त्रप्रदानेन । अस्त्रमिदमासाद्य सास्माकं धार्मिककृत्येऽपि पादं प्रसारयिष्यति । तत्रापि उत्कोचादिदानादाने प्रचलिष्यतः, येन दैनन्दिनं भारतस्य नैतिकवलह्रासश्चरित्रपातश्च स्यादेवेति । आश्चर्य्यन्तु मामिदम्प्रतिभाति यत् स्वराज्याभिलाषुकाः ‘ लाला ’ ‘ लाल ’ प्रभृतयोऽपि नियममिमं राजतः प्रचालितमभिलषन्ति । अयि महात्मानोयदि भवन्तो वालविवाहं निरोद्धुमिच्छन्ति चेद्‌ व्यवस्थापिकासभातो निःसृत्य जनतासु कार्य्यं कुर्वन्तु । तत्तज्जातीय, तत्तद्धर्मीय-सभाभिः प्रस्तावमिमं स्वीकार्य्य प्रचालयन्तु, जनान् सुबोधयन्तु । यावान् प्रयासो भवतां तत्र वाग्युद्धे भवति, ततोऽणुरपि प्रयास एतादृशेषु विषयेषु जनतामध्ये समये समये कृतश्चेन्महान्स्याल्लाभोऽस्य देशस्येति । किम्बहुना एवंभूता विषयाः सनातनधर्म-सभाहिन्दुसभा-प्रभृतिष्वेवोत्थापनीयास्तथा तद्‌द्वारैवेषां जनतासु प्रचारो विधेयो न राजसभयेति विमृशन्तु स्वपारतन्त्र्यपाशदार्ढ्यम् । कथं गज निमीलिकया व्रजन्ति भवन्तो दीर्घं पश्यन्तु मा ह्रस्वं परं पश्यन्तु मा परम् ’ ।

भारतीयजनता धर्मदण्डतो यथा विभ्यति न तथा राजदण्डत इति निश्चितं विदन्तु । अतो धर्मसभाभिः स्वीकारिते वालवृद्धविवाहनिषेधे झटित्येव ताः स्वीकरिष्यन्ति । राजसभया तुशिरस्फोटनेनापि तत् कारयितुं न पार्य्यते यच्चानायासेनैव धर्मसभाभिः साधितं स्यादिति ।

* * *

# सनातन-धर्मोदयः ।

एतन्नामकं पाक्षिकं राष्ट्र-भाषा-( हिन्दी ) पत्रं श्रीकाशी-सनातनधर्म-पण्डित-सभायाः मुखपत्ररूपेणेतः काशीतो निःसरति पत्रमिदमद्यत्वे बहूपकरिष्यति सनातनधर्मजनतायामित्यस्माकं धारणा । यच्च, इदानीं सर्वेऽपि पत्र-पत्रिका-सम्पादका वराकं वृद्धं सनातनधर्ममेवाभिक्रामन्ति । तेषां मुखमर्दनं विदधत् स्ववर्गे च चिरकालतः प्रवृत्तां कुरीतिं कुप्रथां कुसंस्कारमुन्मूलयत् श्रुति-स्मृति सदाचारप्राप्तं देशकालोपयुक्तं च नियमजातं सर्वेषां पुरतः प्रस्थापयत किङ्कर्तव्यविमूढश्च विद्वत्समाजं कार्य्यक्षेत्रेऽवतारयत् सर्वतो विप्लुतश्च धार्मिकं समाजं नियमयच्चिरञ्जीव्यादिति श्रीकाशीविश्वेश्वरमभ्यर्थयमानोऽहमस्याभ्युदयं शाश्वतिकं कामयेऽनुरुन्धे च सनातनधर्मसमाजमन्यधर्माणश्च यदस्य ग्रहणेन विदाङ्करोत्वखिलधर्म-रहस्यं शास्त्रनिर्दिष्टं स्वीयं कर्तव्यञ्चेति । अस्य प्रवर्त्तकाः पूज्यपादाः पण्डितसम्राजो महामहोपाध्यायाः श्रीप्रमथनाथ तर्कभूषण-

महोदयाः सन्ति । सम्पादकाश्च त एव भवतां परिचिता भूतपूर्व-सुप्रभात-सम्पादकाः श्रीमन्तः पण्डित-केदारनाथशर्माणः सारस्वताः । काशीस्थानाञ्च बहुश्रुतानां विदुषां महामहोपाध्यायपदभाजामत्र लेखास्तिष्ठन्तीत्यपि सुवर्णे गन्धसमवायः । मूल्यं वार्षिकम् २) प्राप्ति-स्थानम्—

व्यवस्थापक-सनातनधर्मोदय, ढेढीनीम,
बनारससिटी

* * * *

## वाढनगेर सतीत्वपरिणामः ।

सर्वेषामेव समाचारपाठकानां विदितमिदम् । यद् वाढ़नगरे काऽपि सती स्त्री स्वपतौ मृते तच्छरीरमादाय चितामारुह्य स्वीयमपि नश्वरं शरीर मग्नौ हुत्वा भारतीयोज्वलं रत्नं सतीत्वं पुनरपि घोरेऽस्मिन् कलौ प्राचीकशत् । परन्तु तदीयबान्धवानां तत्सतीत्वानुज्ञादानापराधे पाटलिपुत्र-न्यायालयतः सपरिश्रमः कारागारे वासोऽभूत् । तत्रैव न्यायपतेर्विचारपद्धतेरालोचनया कतिपयानाम् विहारप्रान्तीयनेतॄणां 'जगत्लाल'-' सर्चलाइट्'-सम्पादक-महोदयानामपि तस्मिन्नेव गृहे सपरिश्रमो वासो जातः । वृत्तमिदमाकर्ण्य कस्यच सनातन-धर्महितेच्छोर्हृदयं क्रोधेन शोकेन च न क्षुभ्येत । परन्तु केऽपि धर्मशास्त्राचार्य्या अत्र विषये स्वमुखमुद्रां नविघटयन्तीत्येतदेवाश्चर्य्यम् । इदानीं वङ्गीय-ब्राह्मणसभयाऽखिलभारतवर्षीय-ब्राह्मणानां महासम्मेलनं विधातुमुपक्रान्तम् तयैवम्भूतानां विषयाणां विचारो यदि कृतः स्यात्तर्हि स्यादपि तस्याः साफल्यम् । केवलं कोलाहलमात्रेणैव विरतायां तस्यां न भविष्यत्यस्माकं सन्तोषः । अतो वयमनुरुन्धमहे तत्संयोजकान् यदेवम्भूतानां विषयाणां विचारन्तेऽवश्यं कुर्य्युः । पश्यन्तु भारतीयसभ्यताया हृदयं सतीत्वं विद्यते । तस्य रक्षणं यदि भवतामभीष्टञ्चेत्पुनरपि सतीत्वप्रथायाः प्रचाराय यतन्ताम् । तद्विषयकं राजकीयं निरोधनियमञ्चापसारयन्ताम् नो चेत् एकतः सतीत्वनिरोधोऽपरतश्च पुरुषबहुविवाहानिरोधोऽन्यतश्च कामवासनावृद्धिकरवैदेशिकसभ्यता—प्रचारोऽपरतश्च भवदनुमोदितपुंस्त्वविघातकबालविवाहवृद्धविवाह-प्रसार इत्येते समुदिताः कारणकलापा आर्य्यनारीणां चरित्रगौरवं हठाद्विनाश्य व्यभिचारमुत्कर्षयन्तो भ्रूणहत्यादिमहापापान् समेधयन्तो यवनसंख्यां वर्द्धयिष्यन्त्येवेति शृण्वन्तु सत्यमप्रियम् ।

——

## समालोचनासारः ।

### स्तुति-कुसुमाञ्जलिः—

श्रीमज्जैनाचार्य श्रीदेवचन्द्र सुरिभिर्विरचितेयं स्तुतिः पार्श्वचन्द्रसूरीश्वराणां हेमचन्द्रसूरीश्वराणाञ्चाष्टकप्रयुक्ता अतीव सरससरलैः भावभूषितैः पदैरलंकृता सर्वैरेव तदुपासकैरन्यैश्चापि सज्जनैरवश्यं द्रष्टव्येति । तत्प्राप्तिस्थानम्:—

श्रीहेमचन्द्रसूरि,
जैन-पुस्तकालय, वीकानेर ( राजपूताना )

## प्रश्नोत्तरी—

इयं हि परिव्राजकाचार्य्य जगद्गुरु श्रीमच्छङ्कराचार्य्यपादैर्विरचिता ।

वेदान्तविषयविबोधिनी सा सान्वय-हिन्दीभाषाविभूषिता प्रश्नोत्तरी सर्वैर्मुमुक्षुभिः साधुभिः संसारसागर-निमज्जद्भिर्जनैश्चावश्यमेव द्रष्टव्या । अस्याः सम्पादकष्टीकाकारश्च 'साहित्य-शास्त्री, पं० श्रीसरयूप्रसाद पाण्डेयः (द्विजेन्द्रः) काव्य-तीर्थ विशारदः' । समुचितया टिप्पण्या बहुमूल्यतामधिगतवत्या अप्यस्याः मूल्यं सुतरां न्यूनतरं पणषट्कमेव । अतो ग्रहेप्सुभिरधोलिखितेन संकेतेन गृहेलिमा । प्राप्तिस्थानम्:—

मास्टर खेलाड़ीलाल, संस्कृत-बुकडिपो, काशी ।

—श्रीशिवकुमार शास्त्री ।

## हिन्दू-पञ्च ।

साप्ताहिक-पत्रस्यास्य श्रीकृष्णजन्मोत्सवोपलक्ष्ये प्रकाशितोऽतीव मनोहरः सहृदय-हृदयानन्द-सन्दोह-जनकः सम्पादन-कलाकलितो रसिकजनमनोरञ्जको विविध-विषय-विभूषितो गद्य-पद्यपुष्पितो हृदयहार इव सचित्रोऽयं श्रीकृष्णाङ्कः श्रीकृष्णाङ्कं विभूषयतीति हर्षास्पदं राष्ट्रभाषाऽभिज्ञानां सहृदयपाठकानाम् ।

अस्य च स्तम्भगा लेखाः कविताश्च सर्वाः सर्वेषां सहृदयानां सन्तोषमावहन्तीति सम्पादक-पाटवविलसितम् । अङ्कस्यास्य मूल्यमपि स्वल्पमेवाष्टाणक-मात्रम् । अतो वै सर्वैं राष्ट्रभाषोदयाभिलाषुकैरयमङ्को द्रष्टव्य इत्यस्माकमभीप्सितम्—

—'द्विजेन्द्रः' ( स० सम्पादकः ) ।

# संस्कृत-समाचाराः

[ १९२९ तमे खिस्ताब्दे पुनर्युद्धम् ]

### विचित्रा गणना ।

भारतवर्षे किमपि महायुद्धमागामिनि १९२९ तमे खिस्ताब्दे भविष्यतीति कश्चिद्दैवज्ञः प्रोक्तवान् । युक्तयश्च तेनैवं प्रोक्ताः-१८५७ तमे खिस्ताब्दे भारतवर्षे किमपि युद्धं प्रावर्ततेति सर्वेऽपि जानन्ति । तत्संवत्सरीय-संख्याङ्कानां १+८+५+७=सङ्कलने २१ एकविंशतिर्भवति । अस्याश्च संख्यायाः १८५७ संख्यया योगे १८७८ भवति, तस्मिन्वर्षे वङ्ग-प्रदेशे किमपि युद्धमभूत् । अथ चैतत्संख्यागताङ्कानां १+८+७+८=योगे २४ लभ्यते । पूर्वसंख्ययास्या योगे १९०२ भवति । अस्मिंश्चापि वर्षे वङ्गेषु प्रजानां राज्यशासक-विरुद्धमान्दोलन मुद्धृतं वङ्ग-विच्छेदमूलकम् । अथ त्वैतत्संख्यागताङ्कानां सङ्कलने १+९+०+२=१२ लभ्यन्ते, पूर्वसंख्ययास्य योजने १९१४ भवति । अस्मिन्वर्षे ब्रिटिशराज्य-शासकानां पाश्चात्यमहायुद्धे योगः कर्तव्यो ऽभूत । अथैतत्संख्याङ्कानां सङ्कलने १+९+१+४=१५ । लभ्यन्ते । अस्य तु पूर्वसंख्यया योजने १९२९ भवति । अतो वै पूर्वानुभव-संगृहीतव्याप्त्यनुरोधेन तस्मिँश्च वर्षे युद्धमवश्यं भावीति गम्यते । ततश्चापि परं १९५० तमे वत्सरे भवितुमर्हति । १+९+२×९=२१ संख्यायाः १९२९ संख्यया योजने १९५० लभ्यते इतित्ववगन्तव्यम् ।

—*—

Published by Gaurinath Pathak and prin ted bs Rameshwar Pathak at the Tara Printing Works, Benares.

सौरकार्तिके १९८५ वैक्रमाब्दे ।

पञ्चमवर्षं
Vol. 5

November 1928.

सप्तमोऽङ्कः
No. 7



# सुप्रभातम् ।

संस्कृत-साहित्य-समाजस्य मुखपत्रम् ।

तिमिरततिमुदस्यद् भेदतारा विलुम्पन्-नयदधिसुरभाषाभाषि जागर्तिमुच्चैः ।
विबुध-विहग-वादैराह्वयद् भाग्यभानुम्, विलसतु भुवनेऽस्मिन् सर्वतः 'सुप्रभातम्'

निरीक्षकः—

महामहोपाध्याय-श्रीदेवीप्रसादशुक्लः, कविचक्रवर्ती, साहित्य-वारिधिः

सम्पादकः—

दर्शनकेसरी श्रीगोपालशास्त्री त्रिपाठी "साहित्याचार्य्यः"

व्यवस्थापकः—

श्रीगिरीशशुक्लः, "न्यायाचार्यः"

वार्षिकम्मूल्यम्—३)
माननीयेभ्यः—१२)

छात्रेभ्यः—१॥)
वैदेशिकेभ्यः—५)

अस्याङ्कस्य मूल्यम् ।)

इत्थमिह प्रतिविधीयते—

अत्र तावत्तर्कतीर्थमहोदयेनाकाण्ड एव स्वतार्किकतां परिचाययता प्रसिद्धत्वेन विषयमननुमित्सोरपि वाक्ये न्यायत्वमारोप्याप्राप्तकालत्वेन परं निजिघृक्षुणाऽऽत्मैव निरनुयोज्यानुयोगेन न्यग्राहीति प्रथमग्रासे मक्षिकापातमनुहरति,

प्रसिद्धिश्च सहस्रनामस्तवघटकनामनिष्ठवाचकताया मूलकारस्यैव तृतीयपरिच्छेदेऽधिकारिनिरूपणे "यतस्तद्विषया मतिः" इत्युपक्रम्य; "हरेर्नामपदैस्तद्वाचकैः शब्दैः" इत्युपसंहाराद्वरैः; टीकाकृतश्चारम्भ एव "षष्ठ्या च संबन्धवाचिन्या वाचकत्वम्" इति वाक्येन; अभिधायकनामानुशासनपरकोशादिघटकविष्णुनारायणकृष्णादिपदेषु भगवद्वाचकतायां कस्याप्यविमतेर्निष्प्रत्यूहैवेत्यपि सुधिय एव विचारयन्तु,

यत्तु प्रथमकिञ्चेत्यादिना—अवाचकत्वमननूद्य; कृतमबोधकत्वानुवादमाक्षिपता तीर्थेनानावश्यकव्याप्तिज्ञताहेवाक आरब्धः सोऽपि प्रेक्षावद्धासास्पदमेव—

शब्देष्वर्थबोधकतायां शक्तिलक्षणाऽन्यतरप्रयुक्तत्वस्य सर्वतन्त्रसिद्धान्तसंमततायां; स्तवादिघटकनाम्नां लक्षणाया भगवद्बोधकतायाः श्रुतिस्मृतिपुराणादिभिरननुमोदिततायां च तेषां तदबोधकत्वं तदवाचकत्वापर्यवसायीति कथंकारमनुन्मत्तोऽङ्गीकुर्यादित्यस्मिन्नर्थे किं साक्षित्वे पाठका मूकायिष्यन्ते?

यत्तु-द्वितीयकिंचेत्यादिना—स्थूलप्रक्रियाशरणीकरणेनात्माऽऽयास्यते स्म तीर्थेन; तत् किमर्थमिति न वयं जानीमः,

अत्र हि टिप्पणीस्थं "तेषां नाम्नाम्" इति पदद्वयं त्यक्त्वा; स्वकल्पितव्याप्त्याभासमवलम्ब्यै नमस्मदीयव्याप्तित्वेन प्रख्याप्य साधु तीर्थताया आदर्शो दर्शितः,

यत उपक्रमोपसंहारादिग्राहिततात्पर्यज्ञानादि घटितसामग्रीनिबन्धनबोधेच्छयोच्चारितशब्दात्तादृश बोधानुत्पादे तादृशशब्दस्य वैयर्थ्यं दुर्निवारमेव

न हि लोके प्रयोजनसामान्याभावमेवोपलभ्य व्यर्थशब्दो व्यवह्रियते "न हि बीजप्रयोजनाभ्यां विना" इत्यादिन्यायेनासंभवात्; किन्तु स्वाभिमत प्रयोजनाभावज्ञानात्; तस्मात्प्रकृते विशेषतात्पर्ये प्रयुक्ते व्यर्थशब्दे,सामान्यतात्पर्येण प्रत्यवस्थानं छल रूपमसद्वर्त्म नातिक्रामिष्यति,

भवति च भगवद्विषयकबोधजनकत्वतात्पर्ये प्रयुक्ते सहस्रनामस्तवघटकनाम्नि तदबोधकत्वं वैयर्थ्यव्याप्यम्,

यदपि तृतीयकिंचेत्यादिना—स्तवघटकनाम्नां भगवद्बोधकत्वमुपगम्योच्चारणमात्रेणादृष्टद्वारा पापनाशकत्वादिकथनं; तदपि शास्त्रविरुद्धत्वाच्छलमेव

तादृशनाम्नां तदबोधकत्वोक्तौ न किमपि प्रमाणं; प्रत्युत श्रीविष्णुसहस्रनामस्तवारम्भे महाराजयुधिष्ठिरेण "स्तुवन्तः कम्" इत्यादि पृष्टे पितामहगाङ्गेयेनोत्तरितं "जगत्प्रभुं स्तुवन्नामसहस्रेण" इत्यादि; "सर्वदुःखातिगो भवेद्" इत्यन्तं ग्रन्थं "नामसहस्रेण स्तुवन् गुणकीर्त्तनं कुर्वन्" तथा "निमित्तशक्त्योर्नाम्नां भेदिन्यस्तदुदीरणाद्" इति विष्णुधर्मोत्तरोक्तवाक्यं प्रमाणयतां "षष्ठीगुणक्रिया जातिरूढीनां शब्दप्रवृत्तिहेतूनां संभवात् सर्वे शब्दा

परस्मिन् पुंसि प्रवर्त्तन्ते" इत्थं व्याचक्षाणानां श्रीशंकराचार्य्यपादानामुक्तयस्तद्बोधकत्वप्रतिष्ठापनपरा एव जाग्रति

स्तवघटकनाम्नामवाचकत्वे हि भगवन्निष्ठगुणादीनां भगवत्तत्तन्नामप्रवृत्तिनिमित्तत्वोक्तिः स्पष्टमेव विरुद्धा भवेत्, तस्मात्तेषां तदीयतत्त्वे स्थिते भगवतोऽपि वाच्यत्वं दुरपह्नवं, " वाच्यत्वे सति वाच्यवृत्तित्वे सति वाच्योपस्थितिप्रकारत्वस्यैव प्रवृत्तिनिमित्तलक्षणत्वात्, ततश्चावाचकत्वोक्तिरसूयाऽऽदिप्रयुक्तदुराग्रहमूला; शास्त्रज्ञानवैधुर्यनिबन्धना वा नास्त्यत्राणुरपि विचिकित्सा

एतेन प्रथमकिञ्चोक्तौ भगवदवाचकत्वेऽपि बोधकत्वं लक्षणाऽऽदिना स्यादित्युक्तिरप्यव्युत्पन्नतां द्रढयति

यच्चोच्चारणद्वाराऽदृष्टेत्याद्युक्तं; तदप्यसंगतं,-भगवन्नाम्नामुच्चारणद्वाराऽदृष्टजनकता तदैव स्याद् यदा भगवद्विषयकबोधजननसामर्थ्यं तत्र स्याद्, अन्यथा विश्वादिनाम्नां भगवत्संबद्धत्वमेवाप्रामाणिकं प्रसज्येत,

यच्चेत्याद्याक्षेपोऽप्यसमञ्जस एव संभाव्यमानार्थस्याक्लृप्ततयाऽनुवाद्यत्वानर्हत्वाद्

यच्चेत्याद्याक्षेपोऽप्यसूयाकलुषित एव, टिप्पणीस्थलेखात् स्फुटमेतदवगम्यते यत् शक्यसंबन्धो लक्षणा चेद्? यस्मिन् पदे शक्तिरेव किंचिन्निरूपिता नास्ति तत्र किंचिन्निरूपिता लक्षणाऽप्यसंभवेति निरूपकभेदतात्पर्येण निर्दिष्टविषये निरूपकैक्यमास्थाय पर्यनुयोगशृङ्खलपद्धतिमध्यास्ते न वेति निरपेक्षप्रेक्षावन्तः परिशीलयन्तु,

यच्च वाचकत्वशक्त्योरैक्याक्षेपः सोऽप्यत्यन्तं हेयः, शक्त्याऽर्थविषयकबोधजनकत्वं वाचकत्वमुच्यते, तथा च व्यापारस्य व्यापारिनिष्ठधर्मस्यैक्यमेवेति केनानुभवेन तीर्थेनाधिगत इति तादृशा एव ज्ञातुमलम्,

यच्च तथा हीत्यादिना-आक्षेपे स्तोत्राद्बहिस्तेषामुच्चारणं पापक्षयसाधनमित्यत्र शास्त्रप्रमाणाभावादित्युक्तं तदपि नितान्तशास्त्रानभिज्ञतासाधकं-
"सर्वरोगोपशमनं सर्वोपद्रवनाशनम् ।
शान्तिदं सर्वरिष्टानां हरेर्नामानुकीर्त्तनम्'' इति
"सर्वार्थशक्तियुक्तस्य देवदेवस्य चक्रिणः ।
यच्चाऽभिरोचते नाम तत्सर्वार्थेषु योजयेद्"

इत्यादिप्रमाणैर्भगवन्नामोच्चारणं पापक्षयकारीत्यर्थस्य स्पष्टप्रतिपत्तेः,

यत्तु टीकाकृदाशयवर्णनं तदपि स्वदोषस्य परत्रार्पणजातीयं, न हि टीकाकारोऽस्त्येतादृगनवधानवान् यत्स्वयं बहुत्र पूर्वोक्तवचनतत्तुल्यान्यन्यानि वाक्यानि प्रदर्श्यापि भगवन्नामोच्चारणस्य पापक्षयसाधनत्वाभावसमर्थनेन प्रत्यवेयाद्, एतेन शास्त्रप्रमाणाभाव एव प्रतिबन्धक इत्युक्तिरपि च्छिन्नमूला; तत्सद्भावस्य दर्शितत्वाद्,

यच्च तदपीत्यनेनाक्षेपः सोऽप्यज्ञानविजृम्भित एव, यतो वाचकत्वं चेन्नास्ति लक्षकत्वं त्वसति बाधके नैव संभवीति फलितमेवानुपस्थापकत्वम्,

एवं यच्चोच्यत इत्यपि हेयं-विश्वादिशब्दानां भगवद्वाचकतायां कथं तात्पर्य्यानुपपत्तिरागता यन्निबन्धना शक्तिं विहाय लक्षणाऽऽद्रियते

शेषे च यदपीत्याक्षेपोऽप्यश्रद्धेयतमः-स्वाव्युत्पत्तिदोषविशेषवशात् परत्रारोप्याक्षेपेणोक्तेः, जीवे-

श्वरसाधारणात्मशब्दस्य चेतनत्वे वाच्यताऽवच्छेदकत्वसत्त्वेऽपि नेश्वर आत्मशब्दवाच्य इति कुतोऽवधारितं तर्कतीर्थेन, ? यथा प्रमेयद्रव्यादपदानां पृथिवीत्वघटत्वादिषु वाच्यताऽवच्छेदकत्वाभावेऽपि पृथिवीघटादयः प्रमेयत्वद्रव्यत्वादिभिः प्रमेयद्रव्यादिपदवाच्या एव, कथमन्यथा घटः प्रमेयो द्रव्यं पृथिवी वेत्यादयोऽभियुक्तव्यवहाराः प्रामाणिकाः स्युरिति कृतं विस्तरेण ।

निरपेक्षविज्ञपाठकवृन्देभ्यः सप्रश्रयमेतन्निवेदनम्-प्रबन्धेऽस्मिन् क्व चित् क्व चिद्धूतभाषाव्यवहृतिर्जाता किन्त्वत्र न नो दोषः, तीर्थमहोदयेनैवात्मना समंभाषां प्रयुञ्जानं स्वस्मै रोचमाना परिपाटी स्वप्रबन्धे प्रदर्शिता सुतरामस्माभिरपि तत्प्रसत्त्यै तथैव भाषा व्यवहारीति । शम् ।

## सात्त्विकं साहाय्यम् ।

*श्रीसार्वदेशिकार्यसभायाः प्राधान्यपदमलङ्कुर्वद्भिः समण्डलैः—*

### श्रीनारायणस्वामि-महोदयैः ।

काशीस्थ-संस्कृत-साहित्य—समाजस्य-विपन्नां दशामुपश्रुत्य तस्मै प्रतिमासं १०) रूप्यकं साहाय्यं वितीर्णमिति तेभ्यः समण्डलेभ्यः साधुवादान् वितरति समन्त्रणासमितिसदस्यः ।

श्रीप्रभुदत्तशर्म्माऽग्निहोत्री (महामहोपाध्यायः)

सभापतिः—

श्री संस्कृत-साहित्य-समाजस्य काशीस्थस्य ।

## परिभाषेन्दुशेखर-व्याख्या ।

पद्यमयी, रुचिराख्या ।

( आदितः )

( ले० शास्त्री अमृतलाल शर्म्मा व्या० वेदान्त-तीर्थः )।

सच्चित्सुखस्वरूपं ध्यात्वा विश्वेश्वरं गुरूंश्च हृदि।
परिभाषाणां व्याख्यां रचये रुचिराभिधां पद्यैः ॥१॥
गद्योक्तोऽर्थो दुर्धर उक्तः पद्यैः स एव सुधरः स्यात्।
इति मत्वा व्याख्येयं पद्यैर्विहिता विदां प्रमोदाय॥२॥
प्राचीनेऽस्मिन्नपि च व्याकरणे वाचनिक्यो याः।
ज्ञापकतो न्यायाद्वा सिद्धा भाष्येऽथ वार्त्तिके पठिता
पाणिनिना चापठिता व्याख्येया अत्र परिभाषाः।
तासां नागेशकृतां व्याख्यामनुसृत्य गुरुभिरुक्तांश्च॥४
विजयाभिधटीकायां संगृह्यावश्यकान्परिष्कारान्।
अथनामि पद्यबन्धं यथामति मतेः परिष्कृत्यै ॥ ५॥
यद्बोधो[1] विधिशास्त्र-प्रवृत्तिमथ वा निवृत्तिमातनुते।
शब्दस्य[2] साधुतां वा शक्तिं[3] या नैव बोधयति ॥६॥
अधिकारादतिरिक्ता[4] सा परिभाषेति लक्षणं बोध्यम्
त्रीण्यत्र च प्रकरणान्याद्यं शास्त्रत्वसाधकं[5] तदनु ॥७॥
बाध-प्रयोजकोक्तिर्द्वितीयमन्त्यं च शेषोक्तिः।
एकांशविकृतमपि नैवान्यवदित्यन्तमाद्यमथ ॥ ८॥

---

(१) यद्बोध इति, विधिशास्त्रप्रवृत्तिनिवृत्त्युपयोगि साधुत्वाप्रकारक-शक्त्यविषयक-बोधजनकत्वे सत्यधिकारशास्त्रभिन्नत्वं परिभाषात्वम् । (२) अपवादसूत्रव्यावृत्तय इदम् ( ३ ) संज्ञासूत्र व्यावर्तनायेदम् । ( ४ ) पूर्वत्रासिद्धमित्य धिकारसूत्रव्यावृत्तय एतत् ।

( ५ ) प्रवृत्तिप्रयोजकनिर्णयात्मक-बोधजनकत्वं शास्त्र तत्साधकत्वं व्याख्यानत इत्यारभ्य एकदेशविकृतमनन्यवदि त्यन्तानां परिभाषाणाम् ।

पञ्चम्या निर्देशो वलवत्तर एतदन्तमपरं च ।
अवशिष्टं च तृतीयं प्राधान्याच्छास्त्रसाधकं प्रथमम् ।
अइउण् सूत्रे लणिति च सूत्रेऽप्येकस्य णस्यैव ।
ग्रहणादखिण् पदार्थे सन्देहान्निर्णयार्थमिदमाह ।१०।
व्याख्यानाच्छिष्टकृतादन्यतरायर्थ-निर्णयः कार्यः ।
नहि सन्देहाच्छास्त्रं स्यादननुष्ठापकं किमपि ॥११॥
पुण्यजनकतारूपेष्टसाधनत्वस्य निश्चयेनैव ।
प्रवृत्तिर्भवेत्पुंसां साधुपदोच्चारणे नियतम् ॥ १२ ॥
तन्निश्चयार्थके यत्सन्देहोत्पादकं वचः शास्त्रे ।
व्याख्यानात्सन्देहो निवर्त्य इत्यर्थसूचकं तद्धि ॥ १३ ॥
तेनाणुदिदिति हित्वा पूर्वेणैवाण् परेण चेण् ग्राह्यः'

---

परिभाषेन्दु-शेखरस्य कारिकानिबद्धेयं रुचिरा टीका यदि पाठकेभ्यो रोचेत, तदा स्वानुमतिप्रदानेनानुगृह्णन्तु । अग्रे प्रकाशनीया नवेति

( सम्पादकः )

## संस्कृत-भाषा-महत्त्वम् ।

[ ले० श्रीसरयूप्रसाद शास्त्री ( द्विजेन्द्रः ) काव्यतीर्थः ]

प्राचीनतमेयं सुरभारती संस्कृतभाषैव या मुनीन्द्रैर्वाल्मीकि-व्यास-वसिष्ठादिभिरपि व्यवहृता, समादृता च परस्परं कालव्यवहितानपि श्रुति-स्मृति-पुराणेतिहासादिग्रन्थान् माणिक्यभूतान् एकसूत्रे प्रथ्नन्ती मञ्जुमालेव विभाति । कथमन्यथा सृष्ट्यादौ चतुर्मुखनिःसृताश्चत्वारो वेदाः, ततोऽर्बुदाधिकवत्सरादपि पश्चाद्भाविनां मन्वादि-मुनिप्रवराणां स्मृतयश्चाद्यत्वेऽप्यस्माकं कर्णकुहरान् पावयकरिष्यन् ।

या चेयं संस्कृतवाणी मधुरतमवर्णालङ्कारैरलङ्कृता, स्मृति-पुराणादिभिः संसेविता, वेदैरध्युषिता, पुरातनयुगमभिव्याप्याद्यावधि सनातनधर्मैकप्राणा नित्या चेति निश्चीयते न जानीमहे कैर्दुष्कृतकर्मभिः कृतघ्नैः सततमनाद्रियमाणा सरस्वतीयं पातालमूलं वलादिवाभ्युह्यते ।

सैव सुरभारती कलियुग-प्रभावेणान्तर्हितैर्विबुधैर्विरहिताऽपि स्ववात्सल्येनैवैकेन त्रिविधान् तापान् दूरयन्ती शाश्वत-धर्मावलम्बिनोऽस्मानवति । यथा दिनावसानेऽस्तंगच्छतो भगवतो भास्करस्य परमपावनी प्रभा परितस्तूत्तमे शिखरेऽत्यन्तं क्षीणतरा विभाति तथैवाद्यत्वे सायंसमयविडम्बिनि कलिकालेऽस्मिन्नस्तं जिगमिषोः सार्वभौमस्य सनातनधर्मसूर्यस्य शोभाऽपि सुरसरस्वतीगुणैरनुत्तमैरुच्चतमे भारतवर्ष एव क्षीणतां संजायमानेव भातीत्यहो ! आश्चर्य्यम् ।

यतो यत इयं गीर्वाणवाणी प्रान्तर्हिता भवति ततस्ततः खद्योतसमा ह्यनेकशोऽवलम्बविस्तृताः पाखण्डधर्मा अवैदिकाः प्रोद्यन्ति; परन्तु नायमस्तं गमिष्यति सनातन-धर्मसूर्य्यो न च तत्प्रभाऽपि संस्कृतभाषा । सनातनो हि भगवानेष धर्मभास्करः, नास्य कदाचिदस्तत्वं सम्भाव्यते । अत एवायं शाश्वतिको धर्म इति व्यवह्रियते सर्वैः ।

हा हन्त ! ईदृश्या विशुद्धायाः प्राञ्जलगुणगणगुम्फितायाः सुरभारत्या एव अस्तित्वोन्मूलनार्थं मोघश्रमां क्रियां क इव विमूढः संश्रयते ? इदानीन्तनानां नवीन-शिक्षा-दीक्षितानामथ च सर्मेषां विदुषां सहृदयानामपि जनानामश्रद्धा दरीदृश्यते किलास्यां भारत्यां भारतेऽस्मिन्नेव ।

किमत्र कारणम् ? सत्सु बहुष्वपि कारणेष्वे-कोऽनुवादोऽपि कारणतया परिगण्यते यतो वै कस्याश्चिद्भाषायाः कस्याश्चिदन्यस्यां भाषायां पुनः परिवर्तनमेवानुवादः । अथानूदिते वाक्यसमूहे मूलस्थ-शब्दानां याथार्थ्यं कदापि नायातीति निर्विवादसिद्धम् ।

यथा चाध्यात्मिकगम्भीरभावोद्बोधकानां शब्दा-नामनुवादोऽन्यासु भाषासु कथं सम्पद्येत ? यथा-कथमपि सम्पद्यमानेऽप्यनुवादे मूलग्रन्थानामभि-प्रायः प्रायो विलुप्येत एव उदाहरणार्थमत्रानू-दिता ग्रन्था एवालम्भविष्यन्ति, ते च सर्वत्रैव सुलभाः । यथा कस्य चिन्मन्त्रस्य सूत्रस्य, श्लोकस्य वा पदार्थो यादृक्संस्कृते भासते, नानूदिते तादृगिति सुरभारतीसमुपासकैरनुभूयत एव ।

साम्प्रतन्तु बहूनां बहुभाषाभाषिणामत्रेयं सम्म-तिर्यत् "प्रचुर-प्राचीन-पुस्तकानामन्यस्यां विशेषतो हिन्दीभाषायामनुवाद एव लोकोपकाराय श्रेया-निति, एतेनैवास्य भारतवर्षस्य समुन्नतिरपि सम्भविष्यतीति" ।

किन्तु समीचीना नेयं सम्मतिर्न च वयमत्र श्रद्दध्महे । समीचीनविचार-समलङ्कृताः सहृद-यास्तु कथयन्ति । यत्—

"सर्वासां भारतीयानां भाषाणामुपजीव्यता ।
संश्रिता सुरभारत्यां तत्त्यागो न मतो वरः ॥

अपिच—

"जह्युः संस्कृतभाषाञ्चेत् हिन्दीभाषाश्रिता जनाः ।
तदाऽसौ ग्राम्यभाषातोऽप्यधमत्वं गमिष्यति ॥"

अतोऽयं निष्कर्षः समुत्पद्यते, यन्मूलं विना, केवलमनुवादेन कालान्तरे तस्य मूलस्य विनाश एव भावीति । अतो यद्यनुवादः कस्यचित्कार्य्य एव तदाऽसौ मूलेन सहैव प्रकाशयितव्यो नो चे-दस्याः सुरभारत्या नूनमेवाधोगतिर्भविष्यतीति । सर्ववादि-सिद्धान्तः ।

अयि भोः ! कः खल्वत्रेदृगृषिसन्तानो यः स्वमातरमपि सुरभारतीमधो निनीषेत् ।

अतोऽस्माभिः स्वीयार्य्यभाषोन्नत्यभीप्सुभिः सा-वधानैर्भवितव्यं समालोच्यैवानुवादो विधेयः । अस्माकमनवधानमेवैर्विपद्धञ्जतोयोत्सर्जकैस्तिरोभव-तीयं संस्कृतभाषारविभाः । ते वेगप्रचलतोत्साहवायु-वेगेन क्षणादेव तिरोधातुं शक्यन्ते । किमधुना काला-तिपातेन यैर्यैर्विविधोपायैः सुरभारत्याः समुन्नति-र्ध्रुवा चेति सम्भाव्यते तैस्तैरुपायैरस्माभिः सत्वरमेव प्रयतितव्यमिति । अयि भोः सहृदयाः संस्कृत-साहित्य-समुपासकाः ! संवदध्वं सङ्गच्छध्वम् ।

अपरञ्च—

" धर्मप्राणाः ! कुरुत सततं देववाणी-विकाशे
बुद्धिं तामुन्नयत सततं तीव्रयत्नावधानैः ।
अन्तर्धानं सुरमुनिगिरः सम्भवेद्यर्हि तर्हि,
नायं धर्मो न च खलु यशो नामशेषोऽपि तिष्ठेत् ॥"
" तस्मात्कायेन मनसा वाचा चापि सदा द्विजैः ।
यतितव्यं देववाणी-जीर्णोद्धाराय सन्ततम् ॥"

इतिशम् ।

# धन्वन्तरि-वन्दना ।

[ रचयिता—हरिनारायण शर्मा वैद्यः ( आयुर्वेदाध्यापकः )

विशिष्टरोगौषध-बोधभावात् ।
रोग-प्रजाभाव-विधान-वीरम् ॥
न तत्र यान्तश्च कदापि मोहम् ।
धन्वन्तरिं वैद्यवरं नमामि ॥

( २ )

पीयूषपाणिं कुशलं क्रियासु ।
धीरं निरीहं शुभदं दयालुम् ॥
प्रवृद्धसाङ्गागद--वेद--विद्यम् ।
धन्वन्तरिं वैद्यवरं नमामि ॥

( ३ )

स्वस्थेषु मैत्रीं करुणां रुजार्ते ।
प्रीतिं सुसाध्ये विदधानमेव ॥
उपेक्षणञ्चासु-मुमुक्षुमर्त्ये ।
धन्वन्तरिं वैद्यवरं नमामि ॥

( ४ )

इच्छन्तमग्र्यं परमं स्व-धर्मम् ।
दुःखात्प्रयत्नेन सदातुराणाम् ॥
निजात्म-जानामिव रक्षितारम् ।
धन्वन्तरिं वैद्यवरं नमामि ॥

( ५ )

भूतानुकम्पेति परो हि धर्मः ।
निश्चित्य पथ्येन गदघ्नमस्मात् ॥
सुसिद्धिमन्तं सुखिनम्प्रशान्तम् ।
धन्वन्तरिं वैद्यवरं नमामि ॥

( ६ )

पुंसां गदानां विविधे निदाने ।
लिङ्गे सुशान्तौ च भवाप्रवृत्तौ ॥
चतुर्विधज्ञान-विशेषभाजम् ।
धन्वन्तरिं वैद्यवरं नमामि ॥

( ७ )

देशस्य कालस्य तनोर्गदानाम् ।
द्रव्यस्य दोषस्य रसस्य चापि ॥
अशेष-तत्त्वज्ञवरं प्रभावात् ।
धन्वन्तरिं वैद्यवरं नमामि ॥

( ८ )

स्पर्शावगम्यैर्बहुभिस्तु भावैः ।
शरीर-जातैर्गदपीडितानाम् ॥
आयुः प्रमाणान्यवबुध्यमानम् ।
धन्वन्तरिं वैद्यवरं नमामि ॥

( ९ )

असाध्यवर्जं परियाप्य याप्यान् ।
साध्यामयान् सिद्धसुयोगसङ्घैः ॥
निघ्नन्तमव्याहतबुद्धिवेगम् ।
धन्वन्तरिं वैद्यवरं नमामि ॥

*प्रतापगढीय वी. एन्. मेहता-संस्कृत-विद्यालय- धन्वन्तरि-जयन्त्युत्सवे पठिता ।

## ब्रह्मचर्य्यम् ।

लें०—धनेशदत्तशर्मा छात्रः ( दानापुर सं० विद्यालयस्थः, )

अत्र धराधाम्नि ब्रह्मचर्यं विना न केऽपि कामपि समुन्नतिं कर्त्तुं शक्नुवन्ति। अस्यामेवार्यभूमौ प्राचीनाः प्रातःस्मरणीया महर्षयो वशिष्ठप्रभृतयो ब्रह्मचर्य-वैभवेनैव जगच्चमत्कृतवन्तः। अर्वाचीना अपि भगवत्पूज्यपादाः शङ्कररामानुजवल्लभ-निम्वार्क-माध्व-प्रमुखा धर्माचार्या ब्रह्मचर्यमहिम्नैव विश्वं विस्मापयन्ति स्म। किं बहुना, लोकमान्याः स्वर्गीय-"बालगंगाधर"-महोदया, ब्रह्मचर्य-प्रभावेणैव राजनीतौ नैपुण्यमासाद्य देशविदेशान् निर्मलैरात्मयशोभिरलञ्चक्रुः। स्वर्ग-सोपानमेतद् ब्रह्मचर्यं, मुक्तेर्व्योमयानमेनद् ब्रह्मचर्यमिति। असाध्या अपि व्याधयो ब्रह्मचर्यबलेन निःसंशयमनायासमचिरादेव विलयं व्रजन्ति। ब्रह्मचर्यमाधिवर्गं क्षिप्रं समूलमुन्मूलयति, ब्रह्मचर्यमाध्यात्ममाधिदैवमाधिभौतञ्च बलमुत्पादयति, जनयति च निरन्तरं प्रसादमन्तःकरणे। ब्रह्मचारिभिः त्रिलोकमपि स्ववसात्कर्त्तुं प्रभूयते। किं पल्लवितेन क्षिति-तले नास्ति तादृशं किमपि कार्यं यद् ब्रह्मचर्येण निष्पाद्यं न भवेत्। पूर्वाचार्यैर्ब्रह्मचारिणां यान्यनवद्यानि कर्त्तव्यानि निर्दिष्टानि तानि निखिलानि त्रिष्वेवान्तर्भवन्ति, वीर्य-रक्षा विद्याध्ययनं गुरुशुश्रूषाचेति। शरीरमाद्यं खलु धर्मसाधनमिति शास्त्रदिशा निखिल-धर्म-धर्माङ्गरक्षायै प्रथमं शरीर-नैरुज्यं निष्पादनीयम्। एतमेवादर्शं "नायमात्मा बलहीनेन लभ्य" इति श्रुतिरपि पुष्णाति। वीर्य-रक्षणं बिना न कदाचित् कथमपि वपुर्बलं वृद्धिमुपेयात्। शरीरेऽस्मिन् निखिल-मर्मभूता मनोवहा नाम नाडी वरिवर्ति, वीर्यपातनावसरे मनोवहाभिधाना नाडी सातिशयं चञ्चलायते, तदाघात-प्रतिघाताभ्यां सर्वा धमन्यः विकम्पन्ते। अतः शुक्रनाशकाः तस्मिन्नवसरे मृतप्राया वोभवन्ति। अत एव शास्त्रे निगदितं खलु कविना "मरणं बिन्दुपातेन जीवनं बिन्दुधारणादिति" अपि चाद्य भुक्तमन्नं सप्तविंशति-तमे दिने वीर्यरूपेण परिणमति। इत्थमेव चत्वारिंशद्बिन्दुरुधिरत एकबिन्दुवीर्यमुत्पद्यते। ये जनाः प्रत्यहं शुक्रस्य नानाबिन्दुवर्गं पातयन्ति तेषां शरीरतः कियन्तो रुधिरौघा निःसरेयुरिति स्वयमेव ते विभावयन्तु॥

तेषां वीर्यव्ययिनां देहे न कथमपि शक्तिरुपचीयेत। तस्माद् शारीरिक-बलवृद्ध्यै वीर्यरक्षणं नितान्तमावश्यकम्। काये द्विविधाः कीटाः भवन्ति, श्वेता, रक्ताश्च, शारीरकाः श्वेताः कीटा रोगजनकं वाह्यकीटकदम्बं विजित्य शरीरमभिरक्षन्ति रक्ताश्च सन्ततं शरीरस्वास्थ्यं समेधयन्ति। समधिकशुक्र-नाशतो नितान्तं श्वेताः कीटाः दुर्बलायन्ते। येन मानवानां शरीराणि वाह्यतो रोगकीटा निरन्तरमाक्रामन्ति। तस्माद् रोगभीतिभञ्जनाय ब्रह्मचर्यपालनं नितान्तं प्रयोजनत्वमावहते।

निसर्गतोऽहर्निशं प्राणिनां श्वासप्रश्वासाः षट्शतोत्तरैक-विंशतिसहस्रमिताः शरीरान्निःसरन्ति। इयं श्वासानां स्वाभाविकी गतिः; सा च गतिः स्वभावाद्द्वादशाङ्गुलिर्लम्बायमाना प्रवर्तते। इयमेव द्वादशाङ्गुलिपर्यन्त-गमन-शीला गतिर्भोजनादि-कार्यवशादधिकाधिकमुपजायते। यथोक्तं हठयोगे—

"देहाद्विनिर्गतो वायुः, स्वभावाद्द्वादशाङ्गुलिः।
भोजने षोडशाङ्गुल्यो, गायने विंशतिस्तथा॥
चतुर्विंशाङ्गुलिः पान्थे, निद्रायां त्रिंशदङ्गुलिः।
मैथुने षट्त्रिंशदुक्तो, व्यायामे च ततोऽधिकम्॥

उक्तप्रमाणपुञ्जं प्रमाणीकरोति यत् वीर्यविनाशे सातिशयं श्वासा निर्गच्छन्ति, अतः प्राणिनामायुः क्षीयते। अतो दीर्घायुः-प्राप्तये प्राणिभिरवश्यं ब्रह्मचर्यम्पालनीयम्, प्राणानां केवलं श्वास-प्रश्वासनिर्भरत्वात् "असंकल्पाज्जयेत्काममिति" शास्त्रतो मदन-विजयाय त्वसतां कामानां संकल्पो हेयः। स्मरणाद्यष्टविध-मैथुन-त्याग एव ब्रह्मचर्य-लक्षणम्। अतो ब्रह्मचारिभिरष्ट-विधमैथुनत्यागे प्रवर्तितव्यम्, ब्रह्मचर्यामृतेन च शरीरं पोषणीयम्, मनो निग्रहणीयम्, वचः संयमनीयम्, नियमेन च जीवनमवनीयम्। इत्येवास्माकं सहृदयान् सहाध्यायिनो ऽन्तेवासिनः प्रति सादरं सानुनयं सानुरोधञ्च निवेदनमिति दिक्॥

---

## पाणिनीय-प्रकाशः।

[ ले० म० म० देवीप्रसाद शुक्लः कविचक्रवर्ती ]

### ॥ अथ स्वादि-सन्धिः॥

सकारान्तं पदं यच्च सजुषुशब्दान्तकञ्च यत्॥
तस्य रुस्स्यात्सचाऽन्त्यस्याऽलः स्थान इति निश्चितम्
अतोऽप्लुतात्परस्य स्याद्रोरुरत्यप्लुते परे॥
तोत्वं प्रति रुत्वस्याऽसिद्धत्वन्तु न जायते॥ २॥
अनूद्य रुत्वमुत्वस्य विधानादिति बुध्यताम्॥
शिवोऽर्च्यस्सर्वदा पुम्भिर्निजोन्नतिविधायिभिः॥३॥
अतोऽप्लुतात्परस्य स्याद्रोरुर्हशि परे सति॥
शिवो वन्द्यस्सदा प्रीतैः पुरुषैर्मोक्षलिप्सुभिः॥ ४॥
भोपूर्वस्य भगोपूर्वस्याऽघोपूर्वस्यरोस्तथा॥
भवेदवर्णपूर्वस्य यकारोऽशि परे सति॥ ५॥
देवा इह विराजन्ते देवायिह सुरक्षकाः॥
अशीतिग्रहणाद्देवास्सन्तीत्यादौ न दुष्टता॥ ६॥
पदान्तयोर्वयौ स्यातां वा वकारयकारयोः॥
परे तु सत्यशि लघूच्चारणाविति सम्मतम्॥ ७॥
रसनाग्रोपाग्रमध्यमूलानां यस्य भाषणे॥
शैथिल्यं जायते नूनं स लघूच्चारणः स्मृतः॥ ८॥
पदान्तस्य यकारस्याऽलघुयत्नस्य सन्ततम्॥
ओकाराद्धि परस्य स्याल्लोप एतन्मुनेर्मतम्॥ ९॥
भो अच्युत! स्वभक्तं माम्पाहि पाहि कृपां कुरु॥
लघुप्रयत्नपक्षे भोयच्युतेति विबुध्यताम्॥ १०॥
पदान्तस्येति निर्देशात्तोयशब्दे न दुष्टता॥
अवर्णपूर्वयोर्लोपः स्याद्यकारवकारयोः॥ ११॥
पदान्तयोरुञि पदे परे त्विति मुनेर्मतम्॥
स उ एकाग्निराभाति ज्वालाजालकरालितः॥ १२॥
पद इत्युक्तितस्तन्त्रयुतेत्यादौ न दुष्टता॥
भोपूर्वस्यभगोपूर्वस्याघोपूर्वस्य चापि वै॥ १२॥
स्याल्लोपोऽवर्णपूर्वस्य यकारस्य परे हलि॥
भोदेवाः कृपया दीनं भवन्तोऽवन्तु मां सदा॥ १४॥
भगोनमस्तेऽघोयाहि देवा नम्या ननु त्वया॥
हलीतिग्रहणाद्देवायिहेत्यादौ न दुष्टता॥ १५॥
रेफादेशो भवेदह्नः परे सुपि न तु ध्रुवम्॥
शङ्करोऽहरहस्सेव्योऽहर्गणो मागमद्व्यथा॥ १६॥

अस्रुपीत्युक्तितोऽहोऽभ्यामित्यादौनाऽस्तिदुष्टता ॥
रूपशब्दे रात्रिशब्दे शब्दे चाऽपि रथन्तरे ॥ १७ ॥
परे सति भवेदह्नोरुत्वमेतन्मुनेर्मतम् ॥
अहोरूपं गतश्चाहोरात्रिरेषा विभासते ॥ १८ ॥
अहोरात्रजपस्तस्याऽहोरथन्तरमुच्यताम् ॥
भवेद्रेफोऽहरादीनाम्पत्यादिषु परेषु वा ॥ १९ ॥
अहश्च गीश्च धूश्चेमेऽहरादय उदाहृताः ॥
तथा पतिर्गणः पुत्रश्चैते पत्यादयस्स्मृताः ॥ २० ॥
उदेत्यहर्पतिस्साक्षादहःपतिरहःपति ॥
इत्याकुलतयाऽवोचत्कामुकं कापि कामिनी ॥ २१ ॥

क्रमशः

## रघुवंश-महाकाव्ये

# चोरपल्लीयटीका



वत्सोत्सुकापि स्तिमिता सपर्या-
म्प्रत्यग्रहीत्सेति ननन्दतुस्तौ।
भक्त्योपपन्नेषु हि तद्विधाना-
म्प्रसादचिह्नानि पुरः फलानि ॥ २२ ॥

सा धेनुः स्तिमितापि निश्चलापि वत्सोत्सुका सती असपर्यां प्रत्यग्रहीत् सेति सहिता ईतिर्यत्र अथ सहिता इतिर्यत्र कर्मणि तद्यथा तथा तौ ननन्दतुः हि अपि तु उ वितर्के भक्त्या अपपन्नेषु अयुक्तेषु तद्विधानां तयोर्विधा इव विधा येषां तेषां फलानि पुरः नगर्य्याः प्रसादचिह्नानि प्रकृष्टः सादो येषु तादृशानि चिह्नानि येषां तादृशानि भवन्ति ॥ २२ ॥

गुरोः सदारस्य निपीड्य पादौ
समाप्य सांध्यं च विधिं दिलीपः।
दोहावसाने पुनरेव दोग्ध्रीं
भेजे भुजोच्छिन्नरिपुर्निषण्णाम् ॥ २३ ॥

निषण्णां निर्गताः षट् वर्गाः कामादयः येषां तेषां रिपुः चौरः पुनरेव दोहावसाने दोग्ध्रीं न भेजे किं कृत्वा सदाचारस्य गुरोः सती आरा चर्मभेदिका यस्य तस्य गुरोः पादौ निपीड्य संवाह्य तथा सान्ध्यं सन्धिभवं विधिं समाप्य कीदृशः चौरः दिलीपः दिलीं यवागूं पिबति तथाविधः पुनः कीदृशः भुजोच्छित् भुजयोः उद्गता छित् छिदा कर्तनं यस्य चौरत्वात् सः "दिली यवागू विरूपा" इति हैमः। छेदनं छित् संपदादित्वात् क्विप् ॥ २३ ॥

तामन्तिकन्यस्तवलिप्रदीपा-
मन्वास्य गोप्ता गृहिणीसहायः।
क्रमेण सुप्तामनु संविवेश
सुप्तोत्थितां प्रातरनूदतिष्ठत् ॥ २४ ॥

गोप्ता अपलापकः अनु यथा तथा तां आस्य आक्षिप्य गृहिणीसहायः सन् गृहिणीसहितः, अथ गृहिणीसहः आयो यस्य, अथ गृहिणीं स्यति तादृशः हायः हानं यस्य सः क्रमेण सुप्तां तां गृहिणीम् अनु संविवेश प्रातः सुप्तोत्थितां तां गृहिणीम् उदस्थात् कीदृशीं तां धेनुम् अन्तिके नितरां अस्तः वलिप्रदीपो यस्याः तां कीदृशीं गृहिणीं अन्तिके स्थापितः वलिप्रदीपो यया सा ताम् ॥ २४ ॥

इत्थं व्रतं धारयतः प्रजार्थं
समं महिष्या महनीयकीर्तेः।
सप्तव्यतीयुस्त्रिगुणानि तस्य
दिनानि दीनोद्धरणोचितस्य ॥ २५ ॥

तस्य त्रिगुणानि सप्त दिनानि व्यतीयुः कीदृशस्य अमहनीयकीर्तेः चौरत्वात् न महनीया कीर्तिर्यस्य तस्य तथा दीनोद्धरणोचितस्य दीनानां पान्थानां उत् उच्चैः यत् हरणं सर्वस्वमोचनं तत्र उचितस्य तथा प्रजार्थं प्रसवार्थं महिष्या समं हयं द्विषन्त्या सह इत्थं व्रतं धारयतः धारं कुर्वतः अथ इत्थं एतादृक् व्रतं यत्र कर्मणि तद्यथा तथा प्रजानां अर्थं धनं धारयतः, अथ प्रजार्थे धारं कुर्वतः अथ महिष्यां सैरिभायां प्रजार्थं इत्थं समं तुल्यं व्रतं धारयतः अहनि दिवसे ईया ई लक्ष्मीं याति, अथ इया ईकामं याति तादृशी कीर्तिर्यस्य तस्य ॥ २५ ॥

( क्रमशः )




*श्रीमन्तः सुप्रभात-सम्पादक-महोदयाः पत्रमिदं सुप्रभातस्यैव कृते लिखितमित्यविकलप्रकाशनेनानुगृह्णन्तु*

*ओरुगण्टि वेंकटेश्वर शर्मा*

काशीस्थाः कियन्तः पण्डिताः स्वविचारानुरूपं श्रुति-स्मृति-पुराणादीनामर्थं कुर्वन्तो देश-कालानुपयुक्तां प्रत्युत देशविध्वंसकरीमर्वाचीनकालत एव प्रवृत्तां सनातनधर्मस्य बाह्याचारपद्धतिं कियतीं तद्रूपं मन्वानाः स्वाज्ञानेन, दुराग्रहेण वा वैयक्तिकासूयामात्सर्यादिदोष-पारवश्येन वा कियतो नेत्राभ्यामन्धान् चित्तेन पूर्णाञ्छ्रेष्ठिनो वशीकृत्यतेषामेव वित्तैर्बह्वायाससाध्यं बहुव्यय-सम्पाद्यञ्चोदर्क-शून्यमब्राह्मणमहासम्मेलनायोजनमारचयन्ति— इति समाचारपत्रतो ज्ञायते । आरचयन्तु नाम न मे तत्र किञ्चिदस्ति वक्तव्यम्—

"विस्तीर्णा पृथिवी जनश्च विविधः
किं किन्न सम्भाव्यते ।"

वक्तव्यन्त्वत्रेयदेवास्ति यदिमे महात्मान आत्मानं शुद्धसनातनधर्मानुयायिनम्प्राचीनतममार्गानुगामिनं मन्यमाना अपि कथमीदृशीं बाह्याडम्बरबहुलामन्तःसारविरहितां पाश्चात्य-पद्धतिमाश्रयन्ति धर्मनिर्णये तत्र तु केवलं धर्मशास्त्रविदामेव भवति प्रयोजनं न राज्ञां नापि साधारणजनतायास्तत्र विषयेऽकिञ्चित्कराया इति । कथञ्च "कलावाद्यन्तयोः स्थितिरिति" वाक्ये जडश्रद्धतया कलौ केवल-ब्राह्मणशूद्रयोरेव सत्वात् क्षत्रिय-वैश्ययोरभावे स्व-मतेन शूद्ररूपाणामेवात्रत्यमरुभूमिस्थ-वैश्यजातीनां द्रव्यान्नग्रहणादि-पातित्याधायकदुष्कर्मकर्तृत्वमाश्रयन्ति ।

कथं वा स्वसिद्धान्ततो म्लेच्छानां ( यवनानां ) मलकाना-क्षत्रियाणां ( अस्मन्मते तु व्रात्य-क्षत्रियाणां ) शुद्धिविधायकत्वात् स्वसिद्धान्तानुसारं पातित्यभाजि परार्थ्यैव घोषणापत्रादावसहयोगार्हादि-विशेषणेन कृतनिन्दे भारतधर्म-महामण्डले गत्वा-साहाय्यदानार्थं तत्सञ्चालकेभ्यो बद्धाञ्जलि-प्रार्थना-करणम्—तत्सभापतिना च महाराजेन दर्भङ्गाधिपतिना पुनः सम्पर्कमाचरन्तीत्याद्यैवैतेषां कृत्यानि विभ्रमयन्ति सनातनधर्मावलम्बि-समाजम् । सर्वसनातनधर्मविद्वद्सम्मतं साइमन्सप्तकस्वागतं कुर्वतस्तस्यैव राज्ञोऽखिल-ब्राह्मण-महासम्मेलनस्यास्य

सभापतित्वमुपश्रृएवतां कथमिवज्ञानां सनातनधर्मानुयायिनां केषामपि भविष्यत्र सम्मेलनेऽणुरप्यास्थाऽदरदृष्टिर्वेति विचारणीयमेवैभिर्महात्मभिः । अपरञ्च कथमिमे महात्मानः स्वस्मिन्सङ्घटमानानि—

" न शूद्र-राज्ये निवसेन्नाधार्मिकजनावृते"

इत्यादि धर्मशास्त्रीयवचनान्यनाद्रियमाणा अन्येषांकृते धर्मशास्त्रीयनियमान्निखिलानविकलानेव पालयितुमुपदिशन्ति ।

अन्यच्च—अपरिवर्तनवादिन इमे सम्मेलनसञ्चालका महामहोपाध्यायाः प्रतिमासं १०) दशरूप्यकं म्लेच्छराजप्रतिग्रहं गृह्णन्तः स्वयं पातित्यं जुषमाणाः कथं धर्मशास्त्रनिर्णेतारः ?

इतरच्च यदीमे महात्मनो नूतनं कमपि निर्णयमकृत्वा वर्तमानामन्धपरम्परागतां रुढिमेव समर्थयितुमुद्युक्तास्तर्हि कथमियन्तं प्रयासमाश्रित्य पर्वतं खनित्वा मूषकं निःसारयन्ति । तावन्मात्रस्य कृते इयत्प्रयासाचरणन्तु व्यर्थमेव भाति ।

अथवा यथा किम्वदन्त्या श्रूयते यदत्र वाराणस्यां चिरकालतो बहुभिर्विद्वद्धौरेयैः प्रतिष्ठापितां काशीपण्डितसभां शिथिल-प्रायां विलोक्य पण्डितप्रकाण्डा देशकालात्मविदो बहवोऽद्यत्वे चालयितुं पुनर्यतन्ते । वर्षद्वयतः साधु प्रचालयन्त्यपि । यत्र च बहवः प्रसिद्धाः काशीस्था विद्वांसः सदस्याः । तस्या विरोधकरणमेवास्य सम्मेलनस्य प्रयोजनमिति ।

यतोहि तस्याः सभायाः पदाधिकारिणो महानुभावाः स्वनामधन्याः सनातन-धर्माभ्युन्नत्यै सर्वत्रैव तन्महत्व-प्रख्यापनाय च विधर्मिभिः कृतान् सर्वविधानाघातप्रत्याघातांश्चापाकृत्य द्वीपद्वीपान्तरेष्वपि प्रचारयोग्यं वर्तमानकालक्षमं सनातनधर्मस्वरूपं परिष्कर्तुं प्राणपणतश्चेष्टन्ते । तादृगेव च तस्योद्देश्यपत्रमपि मुद्रितं विद्यते ।

तस्याः सभाया मुखपत्ररूपेण सनातनधर्मोदयनामकमेकं हिन्दीपत्रमपि निःसरति । (जिघृक्षुभिः काशीपण्डित-सभा-कार्य्यालय, काशीनरेशमन्दिर, गोदवलिया, बनारससिटी इतिसङ्केततो ग्राह्यम् ।)

अन्यच्च तत्सभासदस्या अखिलभारतवर्षीयसनातनधर्मसभायाः प्रयागीयाधिवेशननिर्णीतान् प्रस्तावान् समर्थयन्ति । महासम्मेलन-सञ्चालकाश्चैतद्विरोधमाचरन्तीत्येतदपि काशीपण्डितसभातो विद्वेषकरणनिमित्तमेषाम् । अत एव यत्र कुत्र मूर्खसमाजे काशीपण्डित-सभा-सदस्यान् अपवदितुं तैः सह शामण्यमाचरितुमिमे स्वशक्त्यनुरूपं स्वकटिबलं यावद्यतन्त एव । परन्तु एवङ्कुर्वाणा इमे महात्मानः धर्म-शास्त्रविगर्हितं महा जनापवादापमानजन्यमहापातककलङ्कितमात्मानञ्च विदन्त्यहो स्वार्थान्धतैषाम् ?

किम्ब्रवीम्यहं सम्मेलन-पक्षाश्रितानां कतिपयानां पण्डितानां जघन्यकृत्यं । ते हि सर्वतोऽप्यात्मानं निर्बलं गणयित्वा पण्डित-सभासदस्यान् विधवाविवाहसमर्थनान्त्यजस्पृष्टान्नभोजनादिविविधस्वकल्पितदोषैःसमाजदृष्टौ पातयितुं यतन्ते । परन्त्वत्रापि इमे विफलप्रयासा एव भवन्ति, भविष्यन्ति चेति निश्चयः ।

पश्यन्तु, यत्र पण्डित-सभायाम् महामहोपाध्यायाः पण्डितराजाः श्रीप्रमथनाथ-तर्क-भूषणमहोदयाः, महामहोपाध्यायाः श्रीदेवीप्रसादशुक्ल-कविचक्रवर्तिमहोदयाः, ज्योतिर्विदां मूर्धन्यमणयो महामहोपाध्यायाः श्रीमन्तोमुरलीधरझामहोदयाः,

पूज्यपादाः सनातनधर्मैकशरणाः श्री-अनन्त-रामशास्त्रिमहोदयाः, प्रातःस्मरणीयाः श्री-काशीनाथशास्त्रिमहोदयाः, विश्वविदिता वैया-करणशिरोमणयो विनयावताराः श्री (देव) हरनारायणत्रिपाठिमहाशयाः, देशकालविदः श्री-हृषीकेशोपाध्यायज्योतिषाचार्य्यमहोदयाः, सदा-चारनिरताः श्रीगोपालशास्त्रिणोदर्शनकेशरि-महोदयाः, श्रीमन्तोमहादेवशास्त्रिणः साहित्या-चार्य्याः, इत्यादयः ।

अन्ये च बहवः स्वनामधन्याः सनातनधर्मादर्श-स्वरूपाः सदाचारपूता विद्वांसः सन्ति । तत्र सभाया-मेव धर्मविपर्य्यासस्यैवम्भूत-विषयाणां वा स्वप्नेऽपि सम्भवो नास्ति परन्तु

"स्वार्थी दोषन्न पश्यति"

इति नियमनिगडिताः कियन्तः सूर्य्योपरि थूत्कृ-तिरूपव्यापारान्नैव विरमन्तीत्याश्चर्य्यतरम् । सर्व-तोऽपि पराहतास्ते–हिन्दुविश्वविद्यालयीयविदुषामे-वेयं पण्डितसभेत्यपि बहुत्र कथयन्ति, परंतु नि-ष्पक्षपातिनां विदुषां दृष्टिकोणमहमित उपरिनिर्दिष्ट-विद्वत्प्रवरसमुदाय-नामोपरि समावर्जयितुमिच्छा-मि। पश्यन्तु-कियन्तोऽत्र सन्ति, येषां हिन्दु-विश्व-विद्यालयतोऽणुरप्यस्ति सम्बन्ध इति । सर्वेऽपि तु ततः स्वतन्त्राः काशीस्थाः प्रसिद्धा विद्वांसः सन्ति किम्बहुना ते तु स्वविचारदृढिम्नि पर्वतवदकम्प्याः सन्ति। गत-प्रयागीय-सनातनधर्म-महासभाधिवेशने श्रीमद्भिर्देवीप्रसादशुक्ल-कविचक्रवर्त्तिमहोदयैरेव स-वर्णेभ्यः समणव-दानस्य विरोधो विहितस्तस्मि-न्विषये तेऽधुनापि तादृग्विचारा एव सन्ति । तथा द्विजाति-कृत-लाङ्गल-चालनप्रस्तावो दर्शनकेशरिणां श्रीगोपालशास्त्रिणां विरोधेनैवास्वीकृतोऽभवत् । अहन्तु जाने यत्—

'सम्मानाद्ब्राह्मणो नित्यमुद्विजेत विषादिव,
अवमानस्य चाकांक्षेदमृतस्येव सर्वदा ॥ इति

मानव वचनस्य तु काशी पण्डित-सभासदस्या एव परिपालकाः । यत् सम्मेलनसञ्चालक-समर्थक-परिपोषकप्रभृतीनां दुरुक्ति-वादानाकर्ण्यन्तोऽपि सनातनधर्मशाश्वतिकाभ्युदय-जनमङ्गलादि-जनक स्वपवित्र-विचारान्नैव विरमन्तीति । ईदृशानामेव दृढविचाराणां विदुषां सनातनधर्म्मेऽद्यत्वे आवश्य-कता विद्यते यैश्च पुनरपि समेधितः स्यात्सनातन धर्मं-महिमा। येन च सर्वेऽपि जगतीतलगा जन्तवोऽ-स्योदारधर्म्माश्वत्थस्य च्छायातलाश्रिताः सुखिनः स्युरिति । ब्रा० सम्मेलन-सञ्चालकादि-सुधियस्तु राग द्वेषादि-परवशाः सन्तः—

"धर्मं चरत,माऽधर्मं सत्यं वदत माऽनृतमिति"

धर्म-शास्त्ररहस्यमपि विस्मृत्य किङ्कर्तुं व्यवसिता इति न विद्मः । श्रूयते तेषां रागद्वेषदम्भाहङ्कारा-दिबहुलव्यवहारत एवोद्विग्ना जात-घृणा बहवः काशीस्थाः प्रसिद्धा विद्वांसो ब्राह्मण-सम्मेलन न्नैव समुपतिष्ठन्ते । प्रत्युतास्य सर्वथा बहिष्कारमेव कुर्वन्तीति कथं स्यात् साफल्यं द्वेषासूयामूलकस्या-स्य सम्मेलनस्येति विदध्यादीश्वरः शिवम्

ओरुगण्टि वेंकटेश्वर शर्मा
( आन्ध्राभिजनः काशीवास्तव्यः )

# उरगाजिह्व-(औरंगजेब) स्य पुत्रपार्श्वे प्रहितम्पत्रम् ।

( अवशिष्टांशः )

( अवधप्रसाद शर्म्मा का० ती० आयुर्वेदरत्नम् ।
खगौल-स्थ- ई० आई० आर० स्कूल हेडपण्डितः ) ।

( ९ )

नाऽयाता हि विभूतयः सह मया सेना न वा दुर्जया ।
सर्वैता हि समर्जिता भुजबलेनात्रैव हा ! सम्पदः ।
किन्त्वेतत् समुपार्जनं मम पुनः पुण्येन नाभूदहो,
दुष्टं मामनुयाति केवलमतः पापं सखे ! वाऽधुना ॥

( १० )

उद्धारो मम हा ? कथन्नु भविता दुःखादितो घोरतो,
भोक्तव्यं कथमस्य रे प्रतिफलं पापस्य दैवाधुना ।
किं कुर्य्यां विवशोऽस्मि हन्त कठिनं कष्टं पुरो वर्त्तते,
हाऽऽवर्त्ते विषमे प्रभो निपतिता जीर्णा तरीयं मम ॥

( ११ )

यद्यत् कार्य्यमिदं मया कृतमहो सर्वं शुभं वाऽशुभम्,
तत्तत्सर्वमिदं ब्रवीम्यवितथं हा! हा! कृतं त्वत्कृते ।
दोषः कोऽपि सुत त्वया मयि पुनर्नो पातनीयोऽधुना,
हा!हा! पुण्यकृदस्मि वा कलुषकृत् किन्तु त्वदर्थं ननु ।

( १२ )

बुद्धिर्मेऽद्य पराङ्मुखी स्मृतिरपि प्रायेण नष्टाऽभवत् ।
जाता हा धनुषाकृतिः कटिरहो दृष्टिस्तथा विह्वला
जीर्णां मेऽत्र तनुं विहाय सकलै र्वीर्य्यादिभिः प्रस्थि-
तम् ॥ शेषो मद्गमनं नु केवलमहो युष्माकमग्रेऽधुना ॥

( १३ )

चित्ते हन्त ! पदे पदे भवति मे तापः प्रमादस्य हा !,
पाषाणोपममप्यहो नु शतधा भिन्नं हृदेतन्मम ॥
नष्टो मे समयोऽधुना न भगवन् ! यत्नः परो दृश्यते ।
हस्ताद्धन्त ! विनिर्गतो ननु सरः कुर्य्यां किमद्य प्रभो!

( १४ )

भित्वा पापघटं स्वकीयमभितो गन्ता यमस्यालयम्,
गर्वादैहिकमत्र सर्वनियमं न्याय्यं विनाश्य क्षितौ ॥
हित्वैतत्प्रियमप्यहो निजवपुःप्रेमास्पदम् जीर्णकम् ।
दुष्कृत्तिः 'सहधर्मिणीव' नहि मामेकाऽधुना मुञ्चति ।

( १५ )

किञ्चिन्न प्रथमं विचारितमहो ! मूढेन मोहान्मया, ।
बद्धो दुष्कृतिरज्जुभिः कपिरिव भ्राम्यामि हाहाऽवशः।
रे रे!! संप्रति कुत्र कोऽस्मि शरणं कं वा व्रजामीह रे
शोकार्त्तस्य ममाद्य हन्त! सकला गाढान्धकारा दिशः॥

( १६ )

व्यर्थं नैव कदापि पुत्र ! भवता हा ! पीडनीया प्रजा,
कर्त्तव्यात् किल पूर्वमेव सुधिया चिन्त्यं भविष्यत्फलं
हा!हा! किल्विषकारिणं प्रथमतो मामेव पश्याधुना,
कीदृक् पापफलं चिरेण विषमं पुत्राद्य वोभुज्यते॥

( १७ )

दुर्लभ्यः समयस्त्वया नु सुधिया व्यर्थन्न नेयः किल,
वक्तव्यं मधुरं वचोऽनिशमहो रक्ष्यं सुशीलं चिरात्।
स्वाद्वीयं सरसा सुधा हि सुखदा वाणीषु संवर्त्तते,
तास्वेवासु-हरं विषं च विषमं हा ! दुस्सहं तिष्ठति॥

( १८ )

पूर्वं पुत्र ! सदैव कार्य्यमखिलं साम्नैव कार्य्यं त्वया,
दर्पान्धेन पदे पदे हि भवता ध्येयो न दण्डः पुनः।
जेतव्या रिपवस्त्वया नु सुधिया रागादयो दुर्जयाः
रक्ष्यं दुर्व्यसनान्मनश्च चपलं नित्यं निजश्रेयसे।

( १९ )

निर्दोषं यदि पीडयिष्यसि जनं कञ्चित् सुखस्याशया,
तन्नूनं भवितासि पुत्र ! मम भो दुःखस्य हेतुश्चिरात्।
जागर्तीह चिरेण मेऽद्य हृदये ह्याशा त्वदीयाऽन्तिमा,
ब्रूमः किन्तु हृदेव केवलमहो जानाति दुःखं हि यत्।

( २० )

दृष्ट्वैतत् प्रियपुत्र ! पत्रमखिलं मद्दुःख-संसूचकम्,
उद्बुद्ध्या करणीयमत्र सकलं कार्य्यं पुनर्निश्छलम् ।
नैतद्विस्मरणीयमत्र सकलं वाक्यं मदीयं शुभम्,
दत्वाऽन्त्याशिषमद्य यामि भुवनात्त्वद्दर्शनैर्वञ्चितः ॥

## श्रीसुप्रभाताशीः

श्रीसारस्वत-वैभवं समुदयन् साहित्य-सत्पूरुषम् ।
नानालङ्कृतिरीतिनीति-निपुणैर्भावैः समुद्भावयन् ॥
विद्यावारिधिषु गौरवं प्रकटयँस्तल्लब्धेषु सर्वोन्नतिम् ।
लोकेऽस्मिन् खलु सुप्रभात-महिमा नित्यं समुज्जृम्भताम् ॥

धन्यास्त उद्योगिनो महात्मानो येषां महाकष्ट-साध्याऽऽशालतेदानीं पुष्पिता फलिता सती नितरां निखिलमधीतं जगत् प्रीणाति । महद्भ्यस्तेभ्यो धन्यवादवितरणमनुचितमिति ज्ञात्वाप्यनेकशः सादरं हार्दिकान् धन्यवादान् दत्वा दत्वापि न विरमत्यन्तरात्मा । एवमेव नितरां श्लाघ्याः पण्डित मनोरञ्जकाः, सुप्रभाताङ्का भवेयुरित्याशंसति,

श्रीसत्यप्रसादशास्त्री "बहुगुणः"
टकोली, देवलगढ़, गढवाल ।

---

## मासिकं मुद्राशतम् ।

गुरुकुलविद्यालये वृन्दावने दार्शनिकस्य विदुषः प्रयोजनम् । प्रमाणपत्रेणाध्यापनादियोग्यतासूचकेन सह पत्रं प्रहिण्वन्तु ।

श्रीरुद्रदेवशुक्लोवेदाचार्य्यः,
काशी विद्यापीठ वनारस ।

गार्भाधानं विधानं किमु भवति पुरेवाऽद्य तावद्विजानां ।
संस्काराणां प्रकाराः किमु तदनुभुवां भव्यभावं भजन्ति ॥
सद्रीतिः क्वोपनीतेः श्रुति-विहित-कृतिः कीदृशीदं विचार्य ।
प्राचीनाचार्यचर्या-समुचित-समयो नायमस्तीति मन्ये ॥ १ ॥

म० म० देवीप्रसादशुक्लः कविचक्रवर्ती

# सम्पादकीयम्

सुप्रभातपाठकैः पठितमेव भवेत् श्रीमताम्बेकटेश्वरशर्मणाम्पत्रम्। तत्पत्रावलोकनेन तु ब्राह्मणमहासम्मेलनसञ्चालकानां कर्तव्योपरि दयैवोदेति ते हि अखिलभारतवर्षीय-सनातनधर्ममहासभाया विरोधमाचरन्तीत्येतदपि गेहेनर्दित्वन्तेषां हास्यास्पदमेव। यस्याश्च सभायाः सर्वस्मिन्नपि प्रान्ते प्रतिनिधिस्वरूपाः सहस्रशः शाखासभाः सन्ति तस्य विरोधार्थमेवमेकत्र गृहकोणे कोलाहलकरणेन कथमिमे सफलमनोरथाः स्युः। अहन्तु कथयामि यदिमे स्वमनोवेगं स्ववाक्कण्डूयनं शान्तयितुमेवेयत्कूर्दनमुत्प्लवनादिकमाचरन्ति। महासभाविरोधमाचरद्भिरेभिः स्वात्मापि विस्मर्य्यत इत्येतदेवाश्चर्य्यम् सनातनधर्म-काशी पण्डित-सभा तु नैकस्य कस्यचन विदुषः सम्पत्तिः सा तु सर्वेषामपि काशीस्थविदुषां सभास्ति। तस्या विरोधाचरणं तत्सदस्यविदुषोऽपवदितुमनेक-कपटपाशप्रसारणम्। तैः सह ग्रामण्यप्रयोगः कियद्रोचेत सत्पथपथिकेभ्यः सुरभारतीसमुपासकेभ्यः। अहमत्र विषये न बहु वच्मि स्वयमेव स्वेदृग्गर्हिताचारेण लज्जितांस्तान्।

तेषामीदृग्व्यवहारेणैव भूयांसः काशीस्थाः प्रसिद्धाः पूज्यपाद पण्डित पद्मनाभशास्त्रिमहोदयप्रभृतयोऽपि नैकतरपक्षगा विद्वांसो ब्राह्मणसम्मलनतस्तटस्थाः सञ्जाताः।

जगत्प्रसिद्धानां स्वनामधन्यानां पण्डित राजानां श्रीमहामहोपाध्याय प्रमथनाथ तर्कभूषणमहोदयानां श्री म० म० श्री देवीप्रसादशुक्ल कविचक्रवर्तिमहोदयानां, सर्वतन्त्रस्वतन्त्र पण्डित श्री पद्मनाभशास्त्रिमहोदयानां, म० महाध्यापक राधाप्रसाद शास्त्रिणां धर्माचार्य्याणां, अशेषशास्त्राध्यापक श्रीकाशीनाथ शास्त्रिणां, वैयाकरणशिरोमणि श्री (देव) हरिनारायणत्रिपाठिमहोदयानां, वर्तमानप्रगति-परिचितानां श्री हृषीकेशोपाध्यायगणकशिरोमणिप्रभृतिविद्वच्छिरोमणीनामनुपस्थितौ किं साफल्यमस्य ब्राह्मण महासम्मेलनस्येति सुधिय एव विमृशन्तु। कच-

विद्वद्भिः सेवितः सद्भिर्नित्यमद्वेषरागिभिः।
हृदयेनाभ्यनुज्ञातो यो धर्मस्तन्निबोधतेति॥

मनूक्तिः सनातनधर्म-स्वरूपे। क्वचैषां रागद्वेषमात्सर्य्यासूयोपहतानां तत्स्वरूपनिर्णये प्रवृत्तिरिति महद्वैषम्यम्—

अहमिमान्पृच्छामि यदिमे किङ्कर्तुं व्यवसिताः? किं सनातन-धर्ममपि सम्प्रदायं कर्तुं वाञ्छन्ति। अयि भोः! विमृशन्तु सनातनधर्म-स्वरूपम्।

यं पृथग्धर्मचरणाः पृथग्धर्म-फलैषिणः।
पृथग्धर्मैः समर्चन्ति तस्मै धर्म्मात्मने नमः॥

इदं हि वाक्यम् किमुपदिशति भवतः किं यथा-हमुपविशामि तथैव सर्वैरुपवेष्टव्यम् ? यथाहं व्रजामि तथैव सर्वैर्व्रजेलिममिति ? पश्यन्तु अस्मि-न्नेव धर्म्मे—

अह ! ह ! निन्दसि श्रुतिजालम् केशव !
धृतबुद्धस्वरूप ! जय जय देवहरे ?

इति भगवदुपालम्भः । अस्मिन्नेव धर्म्मे—

"अग्निहोत्रं त्रयो वेदास्त्रिदण्डं भस्मगुण्ठनम् ।
प्रज्ञापौरुषहीनानां जीविका धातृनिर्मिता " ।

इति देवाचार्य्यस्य बृहस्पतेरुक्तिः । किम्बहुना अस्मिन्नेव धर्मे ईश्वरावतारस्यापि कपिलस्य निरी-श्वरवादं सांख्यशास्त्रं जागर्ति ।

अपि च बौधायनसूत्रे—

"पञ्चधा विप्रतिपत्तिर्दक्षिणतस्तथोत्तरतो यानि दक्षिणतस्तानि व्याख्यास्यामो यथैतदनुपनीतेन सहभोजनं पर्य्युषितभोजनं मातुल-पितृष्वसृ-दुहितृ-परिणयनमिति, अथोत्तरतः—ऊर्णाविक्रयः शीधुपान-मुभयतोदद्भिर्व्यवहार आयुधीयकं समुद्रयानमितीत-रदितरस्मिन् कुर्वन् दुष्यतीतरदितरस्मिंस्तत्र तत्र देश-प्रामाण्यात् इति " ।

( अद्यत्वे तु लशुन-पलाण्डुभक्षणादयोऽपि बहवः सन्ति । )

इत्यादि-देशकालाधिकारिभेदतो व्यवस्थाऽस्ति। नात्र सम्प्रदाय-मत-मतान्तरवदेकैव विधा दृश्यते । सनातनधर्मोऽयमश्वत्थवदनेकशाखः कदाचनैकस्याः शाखाया वृद्धिः कदाचनापरस्याः । नायं मृतशरीर वदवर्द्धनोऽपक्षीयमाणो विनश्वरः । किन्तु जीवन्मा-नव इव विकाशशालीति विदाङ्कर्वन्तु । अतएव "यदि ते कर्मविचिकित्सा वा वृत्तविचिकित्सा वा स्याद्ये तत्र ब्राह्मणाः सम्मर्शिनो ( नतु भवादृशा अपरिवर्तनवादिनः ) युक्ता आयुक्ता अलूक्षा धर्मकामाः स्युर्यथा ते तत्र वर्तरन् तथा तत्र वर्तेथाः " श्रुतिः—

" अनाम्नातेषु धर्मेषु कथं स्यादिति चेद्भवेत् ।
यं शिष्टा ब्राह्मणा ब्रूयुः स धर्म्मः स्यादशङ्कितः"

इत्यादि परामृशन्तो रागद्वेषादिकं विहाय सना-तनधर्ममिमं स्थाष्णुं चिकीर्षन्तोऽग्रे वर्द्धन्तां । प्रयागीयसनातनधर्ममहासभानिर्णयात्र पृष्ठतो गन्तु-मीहामपि कुर्वताम् । निरीक्षन्तां सनातनधर्मह्रासम् । एकदा धरातलमिदं सनातनधर्मावलम्बिभिरेव परि-पूर्णमासीत् । अद्यत्वे तु धरातलमात्रे—१, ६३, ६४, ०१, ००० इयती जनसंख्यास्ति । तत्र—५४, ४५, १० ००० इयन्तः खृष्टीयाः । ४६, ३८, ००, ००० इयन्तो बौद्धाः २२, १८, २५, ००० इयन्तो मोहमदीयाः । २१, ६५, ३४, ५८६ इयन्त एव हिन्दवः । १५, ८२, ७०, ००० इयन्त आरण्यकाः । १, २२, ०५, ००० इयन्तो यहूदीयाः । १, ५२, ८०, ००० इयन्तश्च प्रकीर्णकाः । चतसृष्वपि महाजातिषु हिन्दूनामेव संख्याऽल्पीयसी, तत्रापि सनातनधर्मावलम्बिनः कियन्त इति स्वयमेव विमृशन्तु । तत्रापि ३००० सहस्रत्रयं खृष्टाः, मोहमदीयाश्च केवलं जुमामजि-तेऽष्टादश १८ प्रतिदिनं वर्द्धन्ते हिन्दूनान्तु प्रतिदिनं ह्रास एव भवति । वर्द्धनस्य कथा तु दूरे तिष्ठतु ।

अतः पाश्चात्यशिक्षामात्रग्रहणविदूषितान्तःकर-णान् स्वत एवेमं विहातुकामान् स्वीयानेव बान्ध-वान् न गलहस्तयन्तु सनातनधर्मतः, अपि तु साम्ना निष्पक्षविचारेण च तानावर्जयन्तु स्वपक्षे, इत्येव मम परामर्शः—अपरश्च—

## 'बलिया-गज़ट'

साप्ताहिकमिदं पत्रं हरिहर-प्रेस-बलियात एव निःसरति। अस्य सम्पादको बाबू महिपालबहादुरसिंहः, प्रकाशकश्च पं० रामचीजद्विवेदी । मूल्यमप्यत्र २), विदेशे च ४)

विषयस्त्वस्यापि समीचीन एव, किन्तु यन्त्रालयत्रुटिः पुष्टकर्गजाभावश्च सहृदयानां हृदयेषु खेदमेवावहति। अतोऽत्र प्रकाशकमहोदयैर्दृष्टिप्रसादं विधेयमिति ।

*    *    *

## 'ब्राह्मण-सर्वस्व'

अस्यायं 'रजत-जयन्ती-अङ्कोऽभूतपूर्व एव प्रकाशितः। अत्रत्याः स्तम्भगा लेखा श्रुति-स्मृति-प्रतिपादिताः पाण्डित्यपूर्णा विविधभावविलसिताः सन्दर्शनीयैव वरीवर्त्ति ।

अङ्कस्यास्य सम्पादकैः पं० कन्हैयालालमिश्र-महोदयैरेतस्य गौरवभूतं सम्पादनं विधाय स्वकीयं सम्पादनचातुर्यम्प्रदर्श्य, साहित्य-संसारेऽपूर्वमेकं रत्नम्मे पुरतः स्थापितमिति तत्पठनेनैव प्रतीयते। मूल्यं १), प्राप्तिस्थानम्—

सम्पादक-'ब्राह्मणसर्वस्व'
ब्रह्मप्रेस, इटावा।

*    *    *

## 'सँगिहा'

पत्रस्यास्य 'रामाङ्को'ऽयमद्य मे पुरतः समुपस्थितः। अस्य सम्पादकः पं० राजारामचतुर्वेदीयः प्रकाशकश्च लाला वंशीधरमहोदयः । वार्षिकं मूल्यं २ ), प्रत्येकस्य ।)

प्राप्तिस्थानम्—

सँगिहा-कार्यालय, भासौन, ( इटावा )

*    *    *

## 'स्त्री के पत्र'

अस्य लेखकः साहित्याचार्यः पं० चन्द्रशेखरशास्त्री, प्रकाशकश्च ओझाबन्धु-आश्रमः, प्रयागः । मूल्यं १)

पत्रमिदं स्वानुरूपं नर-नारीजन-मनोरञ्जकं सर्वविध-शिक्षाप्रदश्चातीव सुष्ठु-सुशोभनप्रकारैः प्रकाशितं वर्तते। अस्य चोपादेयता पठनेनैव प्रतीयते। अतः सर्वैर्जनैर्विशेषतो दम्पतीभ्यां तु नूनमेव संग्रह्य पठनीयमिति ।

—'द्विजेन्द्रस्य' ( स० सं० )

---

# दशसहस्रमुद्राः ।

आजमगढ़-मण्डलान्तर्गत-माधवभूमिस्थाय-हिन्दु-आश्रमाय तस्य संस्थापकेन कुञ्जबिहारी-पाण्डेय-विद्यार्थिना "भिक्षया" दशसहस्र-मुद्राः संग्रहीतुं प्रतिज्ञा कृता। तदर्थमस्मादेव वैशाखात् हिन्दून् प्रतिजिगमिषति। अत एव प्रार्थ्यते, सर्वैरेव हिन्दुभिरवश्यमेव साहाय्यं कर्तव्यम्, आजमगढ-मण्डलस्थैर्हिन्दुभिस्तु विशेषेणैवेति सूचयति—

वायुनन्दनअग्निहोत्री
मध्यमेश्वर, बनारस।

# सूर्यचरितम् वा ऋतुचरितम् ।

ले०—तारादत्तपन्तः, साहित्याचार्यः, व्याकरण-काव्य-तीर्थः।

## गोलविद्या-विषयकं नूतनं महाकाव्यम् ।

अतिसरलम्, भारतस्य विभिन्नदेशानां नदीनां पर्वतानां ऋतूनां चात्र परिचयो कविना नवीनया सरण्या समुपवर्णितः। गोलविषये नूतनं संस्कृत-महाकाव्यम् । सर्वथा द्रष्टव्यम् । मूल्यम्—१) मार्गव्ययः पृथक् । [ सुप्रभात-कार्यालयः, काशी ]

Rg N. 1348 A.

# सुप्रभातस्य वैदिकाङ्कः ।

[ सम्पादकः—श्रीकेदारनाथशर्म्मा सारस्वतः । ]



सुप्रभातस्य षष्ठवर्षीयः प्रथमोऽङ्कः कैलाशवासिनां वैदिकप्रवराणां सुगृहीतनामधेयानां महामहोपाध्याय-श्रीप्रभुदत्तशास्त्रिमहोदयानां स्मृतौ वैदिकाङ्कतया महता समारम्भेण प्रकाशितो भविष्यति ।

अस्मिन्नङ्के वेदसम्बन्धिन एव गभीरगवेषणापूर्णा लेखाः प्रकाशमेष्यन्ति । वेदोपवेदविज्ञानपूर्णोऽयमङ्कः परं महत्त्वमुपयोगिताञ्च समासादयिष्यति । लेखाश्चापि सचित्रा भविष्यन्ति ।

सर्वथा दर्शनीय एव भविष्यत्ययमभूतपूर्वः सुप्रभाताङ्कः । किम्बहुना ? ग्राहकेभ्यो विनामूल्यं वितीर्येत । मूल्यमर्द्धरूप्यकम् ।

एतस्मिन्नङ्के लेख-प्रदानाय प्रार्थिताः सन्ति धुरन्धरा वैदिक-विज्ञानविदो विद्वत्प्रवराः । यथा—

१—श्रीमत्पूज्यपाद-जगद्गुरु-श्रीशङ्कराचार्य-श्री १०८ भारतीकृष्णतीर्थ-महोदयाः, ( पुरी )

२—श्रीमन्मध्वसम्प्रदायाचार्याः सर्वतन्त्र-स्वतन्त्राः श्रीदामोदरलालगोस्वामि-महोदयाः, ( काशी )

३—श्रीमहामहोपाध्यायाः-पण्डितराज---प्रमथनाथ-तर्कभूषणमहोदयाः । ( प्रिन्सिपल—संस्कृत-कालेज, हिन्दू-विश्वविद्यालय, काशी ]

४—महामान्याः श्रीमदनमोहनमालवीय-महोदयाः (वाइसचान्सलर-हिन्दू-विश्वविद्यालय, काशी)

५—विद्यावाचस्पति-महामहोपाध्याय-श्रीमधुसूदन-मिश्रमहोदयाः, ( जयपुरम् )

६—महामहोपाध्याय-श्रीगिरिधरशर्म्माणः चतुर्वेद-महोदयाः, (प्रिन्सिपल-संस्कृतकालेज, जयपुरम्)

७—महामहोपाध्याय-डा० गङ्गानाथझा महोदयाः, एम० ए०, डी० लिट्०, (प्रयागविश्वविद्यालय)

८—प्राच्यविद्यामहार्णव-श्रीगोपीनाथकविराज-एम० ए० महोदयाः । ( प्रि० संस्कृत-कालेज, काशी)

९—विद्वद्वर-श्रीमदानन्दशङ्कर-ध्रुव, एम० ए० एल० एल बी०, महोदयाः । ( प्रो-वाइस-चान्सलर-हिन्दू-विश्वविद्यालय, काशी )

१०—श्रीमान् मङ्गलदेवशास्त्री एम० ए०, पी० एच्० डी० ( अध्यक्ष—सरस्वती-भवन, काशी )

११—महामहोपाध्याय-श्रीदेवीप्रसादशुक्ल-कविचक्रवर्ति-महोदयाः, ( काशी । )

१२—सर्वतन्त्र-स्वतन्त्राः श्रीबालकृष्णमिश्रमहोदयाः (दर्शनाध्यापकाः-श्रीकाशी-हिन्दू-विश्वविद्यालयस्य)

अन्ये चाप्यनेके विद्वद्धुरीणाः प्रार्थिताः सन्ति।

अतोऽत्र त्वरा विधेया ग्राहकत्वायेति सूचयति—

श्रीसत्यनारायणशास्त्री कविराजः (व्यवस्थापकः)

लेखादिप्रेषण-स्थानम्—

" वैदिकाङ्क-सम्पादकः "
सुप्रभात-कार्यालयः, काशी

Published by Gaurinath Pathak and printed by Rameshwar Pathak at the Tara Printing Works, Benares.

षष्ठ-वर्षे
प्रथम-द्वितीयाङ्कौ

# वैदिकाङ्कः ।

वैशाख-ज्येष्ठयोः
१९८६

# सुप्रभातम् ।

संस्कृत-साहित्य-समाजस्य सचित्रं मासिकं मुखपत्रम् ।

तिमिर-ततिमुदस्यन् भेदताराविलुम्पन्, नयदधि-सुरभाषाभाषि जागर्तिमुच्चैः ।
विबुध-विहग-वादैराह्वयन्द्राग्यभानुम्, विलसतु भुवनेऽस्मिन् सर्व्वतः 'सुप्रभातम्' ॥

निरीक्षकः—

सर्वतन्त्रस्वतन्त्रः पण्डित-सम्राट् श्रीदामोदरलालशास्त्री गोस्वामी,

सम्पादकः—श्रीकेदारनाथशर्म्मा सारस्वतः ।

व्यवस्थापकः—

कविराजः श्रीसत्यनारायणशास्त्री भिषक्शिरोमणिः

( टेढ़ीनीम, बनारस-सिटी )

वार्षिक मूल्यम्—३)　　अस्याङ्कस्य मूल्यम्　॥)　　छात्रेभ्यः—१॥
माननीयेभ्यः—१२)　　ग्राहकेभ्य अशुल्कम्　　वैदेशिकेभ्यः—५)

# पाठकेभ्यो निवेदनम् ।

सविनयं सादरं सबहुमानं सभयञ्च श्रीमत्सेवायां समुपसर्पति सुप्रभातम् ।

महता विलम्बेन प्रकाशितमिदमिति प्रेयाँसः पाठकाः खिन्ना भविष्यन्ति । परमत्र दैवायत्ता विवशाश्च वयं क्षमाप्रार्थनमन्तरा न किमपि कर्त्तुं पारयेमहि ।

अत्र विलम्बस्य ग्रीष्मावकाशादिविविधकारणेषु सत्स्वपि प्राधान्येन त्रीणि कारणानि समुपतिष्ठन्ते । प्रथमं कारणं भूतपूर्व व्यवस्थापकानामाकस्मिकं परलोक-प्रयाणम् । मम च नवीनतया कार्यालय-प्रबन्ध-ज्ञाने विलम्बनम् । द्वितीयं कारणं सम्पादक-व्यसनम् । एकस्मिन्नेव समये प्रथम-सम्पादकानां श्रीमतां गोपालशास्त्रिमहोदयानां धर्मपत्नी सहसैव गर्भस्राव-रोगेण भृशं पीडिता दुःसाध्यदशायामपतत् । वैदिकाङ्क-सम्पादकस्य च श्रीकेदारनाथशर्म्मणो नवीना-धर्मपत्नी सहसैव परलोकं प्रायादितिघटनाद्वयमेकदैव सञ्जातम् । एतेन द्वयोरपि सम्पादकयोरिदं दारुणं व्यसनं महान्तं विलम्बमकरोत् । तृतीयञ्च कारणं चित्राणां निर्मापणम् । चित्रकाराः कलिकाता-प्रयागादि नगरेषु सन्ति । तत्र पत्राणां गमनागमनयोर्महान् विलम्बः समजनि । तत्रापि श्रीमतां पं० विद्याधर महोदयानां चित्र-फलकं नाद्याप्युपलब्धम् । एतदतिरिक्तं कार्यालय-कार्यकर्तॄणामवकाश-ग्रहणम्, आकस्मिकञ्च विदुषां मरणम्, ग्रीष्मावकाशः, उत्साहभङ्गः, अर्थकष्टञ्चेति बहूनि कारणानि सन्ति । अतएव षष्ठवर्षारम्भ एव अभिनव-व्यवस्था-सम्पादने भूयान् विलम्बोऽभवदिति सहृदयाः पाठकाः सहजया करुणया क्षमाप्रदानं कुर्वन्तु । आषाढमासतो वयं यथा समयं सुप्रभात-प्रेषणे सुदृढं प्रयता भविष्यामः । सम्पादकाश्च सुप्रभात-समुन्नत्यै सोत्साहं प्रयतिष्यन्त इति । अग्रिमाङ्कः परिशिष्टाङ्करूपेण प्रकाशितः स्यात् ।

सविनयं निवेदयति,

श्रीसत्यनारायणशास्त्री
व्यवस्थापकः ।

सुप्रभात-कार्यालयः
वाराणसी ।

## लेख-सूची ।

१—मङ्गलम् १
श्रीकृष्णशुक्लः, अग्निहोत्री

२—वैदिकाङ्कः २
श्रीकेदारनाथशर्म्मा सारस्वतः

३—रामावतार-सरस्वती-सदनम् ४
सं० सा० समाज-मन्त्री

४—स्वर्गीय-महामहोपाध्याय-श्रीप्रभुदत्तशास्त्रिणः ६
श्रीकेदारनाथशर्म्मा सारस्वतः

५—प्रणववादः
डा० भगवान् दासः एम० ए०, डी० एल० ९

६—वैदिको राज्याभिषेकः १४
श्रीतारादत्तपन्तः, साहित्याचार्यः

७—वैदिक आर्य्यनिवासः
श्रीगोपालशास्त्री, साहित्याचार्यः, दर्शनकेसरी १७

८—वेदोऽखिलो धर्ममूलम्,
श्रीनरदेवशास्त्री, वेदतीर्थः २१

९—ब्राह्मणादीनां परस्परं सहभोजनव्यवस्था
महामान्यो मदनमोहनमालवीयः २३

१०—वेदेऽप्सरोगन्धर्वाः
श्रीकृष्णदत्तशास्त्री भारद्वाजः, बी० ए०, २६

११—वेदाः, वर्तमानं विज्ञानञ्च
महामहोपाध्याय-श्रीगिरिधरशर्म्मा चतुर्वेदः २०

१२—कः कालो वेदस्य ?
श्री गौरीनाथपाठकः, साहित्याचार्यः ३१

१३—वैदिकाग्निविमर्शः
श्री मूलशङ्कर केशवजी शास्त्री, ३६

१४—वैदिकविज्ञाने द्रव्यविज्ञानम्
श्री दामोदरशास्त्री भिषगाचार्यः, सर्वदर्शनतीर्थः ४०

१५—निम्बार्कमतम्
महामहोपाध्याय-श्रीगङ्गानाथझा, एम० ए०
डी० लिट्० ४३

१६—स्वर्गीयस्मृतिः
१—सम्पादकः
२—श्रीगोपालशास्त्री
३—श्रीचक्रपाणिशर्म्मा चतुर्वेदः
४—श्रीरामसुभगशर्म्माः

१७—सूचनाः ।

---

## चित्र-सूची ।

१—स्वर्गीय-महामहोपाध्यायाः प्रभुदत्तशास्त्रिणः ।
२—लोकमान्यो भगवान् तिलकः ।
३—महामान्यो मदनमोहनमालवीयः ।
४—डा० भगवान् दासः एम० ए०, डी० एल०.
५—महर्षिः श्रीरामावतारशर्म्मा ।
६—डा० महामहोपाध्यायगङ्गानाथझा एम. ए. डी. लिट्.
७—सर्वतन्त्र-स्वतन्त्रः श्रीदामोदरलालशास्त्री
८—श्रीतारादत्तपन्तः, साहित्य-व्याकरणाचार्यः ।
९—श्रीदामोदरशास्त्री, भिषगाचार्यः ।
१०—श्रीनरदेवशास्त्री, वेदतीर्थः ।
२१—श्रीगोपालशास्त्री, दर्शनकेसरी ।
१२—श्रीगौरीनाथपाठकः, साहित्याचार्यः ।
१३—श्रीजयशङ्करप्रसादः ।
१४—श्रीसत्यनारायणशास्त्री भिषग्शिरोमणिः ।
१५—श्रीनरोत्तममिश्रः वेदाचार्यः ।
१६—श्रीरघुवरदयालुशास्त्री ।
१७—श्रीरमेश्वरसिंहः ( दरभङ्गाधीश्वरः )

वैदिक-शिरोमणिः—



स्वर्गीय—महामहोपाध्याय श्रीप्रभुदत्तशास्त्री अग्निहोत्री।




विविध-विषय-विभूषितम्, अद्वितीयम्, सचित्रम्, संस्कृत-मासिक-पत्रम् ।

| षष्ठ-वर्षे | सौर—वैशाख-ज्येष्ठयोः १९८८ विक्रमाब्दीये | प्रथम-द्वितीयाङ्कौ । |
| --- | --- | --- |

## मङ्गलम् ।

इन्द्रस्य सुहृदं यज्ञं सदसस्पतिमद्भुतम् ॥
धनं मेधामहं याचेऽभ्यर्थ्यमानं सदार्थिभिः ॥ १ ॥
यां वै मेधां देवगणाः पितरश्चाभिमन्वते ॥
तयाऽद्य मेधयाऽग्ने मामद्य मेधाविनं कुरु ॥ २ ॥
ददातु वरुणो मेधां मेधामग्निः प्रजापतिः ॥
मेधामिन्द्रश्च वायुश्च मेधां धाता ददातु मे ॥ ३ ॥
मयि देवा दधतु तामुत्तमां श्रियमीश्वरीम् ॥
यथाऽहमुपजीव्यः स्यां ब्रह्मणः क्षत्रियस्य च ॥ ४ ॥
अग्ने नयास्मान् सुपथा विमुक्त्यै पथामभिज्ञोऽसि यतोऽखिलानाम् ॥
वियोजयैनः कुटिलं समग्रम् कुर्मस्ततो देव नमो वचांसि ॥ ५ ॥

साग्निकः शुक्लः श्रीकृष्णः

## वैदिकाङ्कः ।

सुप्रभातमिदं स्वजीवनस्य पञ्चवर्षाणि समाप्य साम्प्रतं षष्ठे वर्षे पदमादधत् सर्वान् सुप्रभात-प्रणयिनः पाठकान्, ग्राहकान्, अनुग्राहकान्, अनुशासकान्, संरक्षकान्, सादरं सविनयं सबहुमानञ्च समभ्यर्थयमानो, भगवन्तं जगदीश्वरं सकरुणं प्रार्थयते यत् नूतनोऽयं वत्सरो मङ्गलमयो मोदमयश्च भूयादिति ।

विगते वत्सरे वयं हृदयं हस्तेन अवष्टभ्य तूष्णीं स्थिताः सम्मुख एव हृदय-विदारकं दृश्यमालोकयन्तो मूकीभूताः स्मः ।

पश्यतामेव पाषाणहृदयानामस्माकमेकैकशः अनेकशो विद्वांसः, दौर्भाग्यविलसितं दीन-दरिद्रमिदं भारतम्, मृतकल्पां सुरभारतीम्, घृणार्हञ्च हिन्दू-समाजमपहाय परलोकं प्रस्थिताः । ये च विद्वांसः, परलोकं प्रस्थिताः, ते न केवलं शुष्कविद्वांस एवासन्, परं विदुषां पथप्रदर्शकाः, आदर्शभूताः, समाजस्य नेतारः, भारतमातुः सुपुत्राश्चाप्यासन् ।

एतदवलोकयतामस्माकं हृदयं नोत्सहते किमपि कर्तुम् । संस्कृतक्षेत्रे वर्षपञ्चकात् कार्यं कुर्वन् समाजो नितरां श्रान्तः समजनि । पर्वतमुत्पाट्य-मूषिकालाभ इव महान्तमुद्योगं कृत्वाऽपि न तादृशी फलसिद्धिः समालोक्यते, यादृशी अपेक्षिता आसीत् । धनसाहाय्यं दूरे तावत्तिष्ठतु । हार्दिकं मौखिकं वा साहाय्यं केनापि न दीयते । हन्त ! ये खलु सहायकाः, धार्मिकाः, उत्साहिनश्चासन् ते शनैः शनैः परलोक-प्रयाणं कृत्वा समाजमिमं शिथिलप्रयत्नं कुर्वन्ति ।

एतदेव सर्वं दारुणं दैवदुर्विपाकं दर्शं दर्शं भूयसा विलम्बेन वैदिकाङ्कमिमं श्रीमतां सम्मुखं समुपस्थापयन्तो वयं न जिह्नीमः, नापि च बिभीमः। का गतिः ? विवशत्वादेषोऽपराधः क्षन्तव्यः—पाठकप्रवरैः ।

एतेषु बहुषु विलुप्तप्रायेषु विद्वद्रत्नेषु, संस्कृत-साहित्य-समाजस्य सभापतयः, काशीस्थ विद्वत्परिषदध्यक्षाः, हिन्दुविश्वविद्यालयस्य प्रधानस्तम्भरूपाः, भारतीय-सभ्य-समाज-पूजिताः, विलुप्तप्राय-वैदिककर्मकाण्ड-समुद्धारकाः, विदुषां जीवनभूताः, वैदिकशिरोमणयः, समाराध्यचरणाः, अस्माकं पितृकल्पाः महामहोपाध्याय श्रीप्रभुदत्तशास्त्रिमहोदया आहिताग्नयः परं विशिष्टञ्च गौरवमासादयन्ति ।

सुप्रभातेन सहापि तेषां घनिष्ठो महिष्ठश्चासीत् सम्बन्धः । समाजसभापतित्वमलङ्कृत्य मृतप्रायं सुप्रभातं धनसाहाय्यद्वारा समुज्जीवयन्तः, कार्यक्षेत्रमपहायाकर्मण्यतां भजमानानस्मान् पुनः संग्रन्थयन्त इमे वैदिकप्रकाण्डाः संस्कृतभाषायाः महान्तमुपकारं कृतवन्तः । एतेषां कैलाशवासं नितरां खलीकरोति खलु मानसम् । तदेतेषां कृतज्ञताप्रकाशनाय यावच्छक्यं प्रयतनं सुप्रभातस्य परतरं कार्यं विद्यते ।

कृतज्ञता-प्रकाशने विमूढा मत्सरिणो हिन्दवः, तत्रापि संस्कृतज्ञाः, महतीं दुरवस्थामनुभवामः । ये नाम पूर्वजानां महतां महत्त्वं न जानन्ति

ज्ञात्वाऽपि न प्रख्यापयन्ति, तेषां महत्त्वमपि न ज्ञातं न चापि प्रख्यातं भवति । ते हि जीवन्मृता कीटा इव, मशका इव उत्पद्यविलीना भवन्ति । अस्माकं पूर्वजाः, साम्प्रतिकाश्च पाश्चात्यास्तां कृतज्ञतां न कदापि व्यस्मरन्, विस्मरन्ति च, अतएव ते जगति सर्वोत्तमं स्थानमभजन्, लभन्ते च ।

अस्माकं वैदिकाङ्कनायकानां प्रातःस्मरणीय चरणानाम्, महामहोपाध्याय-अग्निहोत्रिमहोदयानां कृते वास्तविकं कृतज्ञता प्रकाशनन्त्वेतदेवासीत् यत् तेषां नाम्ना काश्यां सुमहान् वैदिक-महाविद्यालयः संस्थापितो भवेदिति । यत्र विविधा विद्वांसः वैदिकतत्त्वानि, वैदिक-विज्ञानानि, वैदिककर्माणि प्रवेशयन्तः, कुर्वन्तो दर्शयन्तश्च जगतोऽस्योपकुर्वीरन् । यं च द्रष्टुम्, यत्र च शिक्षामवाप्तुं निखिलजगतो विद्वांसः समागच्छेयुः । परमेतत् सर्वं दरिद्राणामकिञ्चनानामकर्मण्यतमानामस्माकं भावनामात्रमेव । उक्तमेव ।

उत्पद्यन्ते विलीयन्ते दरिद्राणां मनोरथाः ।
बालवैधव्यमाप्तानां कुलस्त्रीणां कुचाविव ।

वयं तु विश्वसिमो यत् यदि महान्तः संग्रथिता भवेयुर्विद्वांसस्तदानैतद्दुष्करं भवेत् । परं वयन्त्वेतदपि सम्भावयामो यत् पण्डिता अस्माकं विचारान् श्रुत्वा श्रावमपि हास्यपरायणाः, क्रोधजर्जरा भविष्यन्ति । भवन्तु नाम ते । परं वयमद्यापि प्रस्ताव मिमं प्रस्तुतमेव कुर्मः ।

एवं हि अन्येषां स्मारकचिह्नानां सांप्रतं दुष्करत्वात् समाजोऽयं तेषां स्मृतिरक्षार्थं सुप्रभातस्य वैदिकाङ्कं सम्पाद्य कथमपि तेषां कृतज्ञता प्रकाशनाय यतते ।

एतस्मिन् वैदिकाङ्के यथाविचारमस्माभिः किमपि कर्तुं न पारितम् । अस्माकमभिलाषः आसीत् यत् महतां विदुषां लेखा अस्मिन् अङ्के प्रकाशिताः स्युः । एतदर्थमस्माभिः संप्रार्थिता विद्वांसो यथापूर्वं केचन समयाभावात्, केचन संस्कृतलेखनासमर्थत्वात्, केचन आलस्यात्, केचन गर्वात् विविधव्याजं कृत्वा स्वीयान् प्राणानत्याजयन् । अहो ! दुर्विलसितम् ! तथापि यैर्महोदयैः लेखाः प्रहिताः तेषां कृतज्ञताप्रकाशनपूर्वकमस्माभिर्लेखाः प्रकाशिताः सन्ति ।

एतस्मिन्नवसरे अस्माकं साध्वी प्रियतमा धर्मपत्नी प्रभादेवी सहसैव वियोग-व्याकुलानस्मान् विदधती परलोकं प्रायात् । तस्याः गुणवत्या हृदयदेवताया वियोगेन भिन्नहृदया वयं मासमेकं सर्वाणि कार्याणि विहाय वैकल्यावस्थाया मेव स्थिताः, येन वैदिकाङ्कसम्पादने, वेदविषयक-विचारविवेचने चास्माकं विचारा मनस्येव स्थिताः, स्थानाभावात् समयाभावाच्च । अन्येषाञ्च विद्वद्वर्याणां सन्ति लेखा अनेका अप्रकाशिता एव तानस्याग्रिमे परिशिष्टाङ्के प्रकाशयिष्यामः । तेभ्यः क्षमाप्रार्थनं कुर्मः ।

चित्राणां निर्माणे मुद्रापणे च महान् विलम्बः समजनि । अस्माकमियमभिलाषोऽभूत्, यत् लेखैः सह लेखकानां चित्रमपि भवेदिति । परं तत्र विलम्बावलम्बनमवलोक्य चित्राणां मुद्रापणं पृथगेव कृतम् । साम्प्रतमपि कियन्ति चित्राण्यवशिष्टान्यासन्, तेषां मुद्रणं परिशिष्टाङ्के भविष्यति ।

केषाञ्चन लेखकानां चित्राण्येव न समुपलब्धानीति तेभ्यः क्षमाप्रार्थनपूर्वकं निवेदयामो यत्ते स्वीयं चित्रफलकं ( ब्लक ) प्रेषयन्तु परिशिष्टाङ्के ।

यद्यपि नास्ति तादृशो वैदिकाङ्कः, यादृशः अस्माभिर्विचारितः अनुमितश्चासीत्, परं किं कुर्मः ? सहृदया विदितवेदितव्याः विद्वांसः अनेनैव सन्तोषं कुर्वन्तः श्रीमतां स्वर्गीयमहामहोपाध्याय श्रीप्रभुदत्तशास्त्रिणां वास्तविकं चिरस्थायि स्मारकं स्थापयितुं बद्धपरिकरा भवन्त्विति । किं बहुना ?

—श्रीकेदार नाथ शर्म्मा सारस्वतः

## रामावतार-सरस्वतीसदनम् ।

भारतीय-संस्कृत-समाजस्य गौरवालङ्कारभूताः, विश्व-विख्याता दिग्गज-विद्वाँसो महामहोपाध्यायाः आचार्यश्रीरामावतारशर्ममहोदयाः साम्प्रतमस्मासु न सन्तीति विदितमेव सर्वेषां सुरसरस्वती प्रणयिनाम् । साम्प्रतमेव तेषां कैवल्यलाभोऽभवदिति भारतवर्षीय-विद्वत्समाजस्यामूल्यमद्वितीयञ्च रत्नमपहृतम् । साम्प्रतमिदमस्माकमावश्यकं कर्तव्यं सञ्जातं यत् तेषां कृते स्वीयादरभाव सूचनायेदृशं स्मारकं प्रस्तोतव्यं येन तेषामन्तरात्मा सन्तुष्टो भवेदिति । इमे हि खलु महर्षिप्रवरा एकान्तं विद्याव्यसनिनः, अप्रतिमसाहित्यानुरागिणः, असाधारण-विद्वाँसश्चासन् । अहोरात्रं नासी कश्चिदपि सः क्षणः यस्मिंस्ते संस्कृतग्रन्थाध्ययनाद्विरता अभूवन् । एवंस्थिते तेषां सर्वोत्तमं स्मारकमिदमेव भविष्यति यत् भारतवर्षस्य प्रधानकेन्द्रभूतायां वाराणस्यामस्यां सहस्रशो विदुषां छात्राणाञ्च ज्ञानवृद्ध्यै विराट् संस्कृत-पुस्तकालयो भवतु । यत्र वाराणस्यां संस्कृतविदुषां छात्राणाञ्च कृते लक्षत्रयाधिको वार्षिकव्ययः काश्यां भवेत्, तत्रैकस्य महतः संस्कृत-पुस्तकालयस्यावश्यकता कियतीमावश्यकतामादधातीति न वक्तव्यम् ।

अस्माकमियमभिलाषो विद्यते यत् अस्मिन् ग्रन्थसंग्रहालये संस्कृतस्य नवीनाः, प्राचीनाः, स्वल्पाः, महान्तश्च ग्रन्थाः सङ्कलिता भवेयुः । एतस्मिन् पुस्तकालये सर्वेषां संस्कृतविदुषां चित्राणां प्रियवस्तूनामपि संग्रहो भवतु । एतदेव नहि; संस्कृतसम्बन्धिनां भिन्नभिन्नभाषापुस्तकानामपि संग्रहोऽपेक्षित एव ।

एवं भारतवर्षस्य प्रधानतमे प्राचीन संस्कृत-विद्याकेन्द्रे वाराणसीपुरे एतादृशस्य सरस्वती-सदनस्य निर्माणं भवेत्, येन संस्कृत- संसारस्य महदुपकारसाधनं स्यात् श्रीमतां शर्म्ममहोदयानाञ्च जीवनोद्देश्यं सुसिद्धं स्यात् । काशी हि नाम तेषां महापुरुषाणामतिप्रियतरं स्थानम्, तेषां ज्ञानार्जन कालोऽप्यत्रैव व्यत्यगच्छत् प्रयाणात् किञ्चित्पूर्वमेव काशीनिवासार्थं तैः स्वकीयं भवनमपि निर्मापितमासीत् । तदिदानीं पूज्यचरणया तेषां धर्मपत्न्या श्रीमत्या रत्नवत्या देव्या तेषां पुण्यस्मृतौ स्मारकं तत्रैव संस्थापितं विद्यते । भारतीयसभ्यतायाः प्रमुखं तीर्थमध्येतत् वाराणसीपुरं वर्ततीति रामावतार-सरस्वती सदन-निर्माणाय समुपयुक्ततरमेतदतिरिक्तं स्थानं न भवितुमर्हति । अतएव संस्कृत-साहित्य-समाज-सदस्याः समस्त देशस्य धनिकाः, मान्याः, विद्यानुरागिणः सादरं सानुरोधञ्चाभ्यर्थ्यन्ते यत्तेऽस्मिन् महति कार्ये, तस्य पूर्त्यै प्रयत्नं विधाय स्वकीयां गुणग्राहकतां उदारताञ्च प्रथयन्त्विति ।

# स्वर्गीय—महामहोपाध्याय श्रीप्रभुदत्तशास्त्रिमहोदयाः ।

*लेखकः——श्रीकेदारनाथशर्मा, सारस्वतः*

श्रौतस्मार्त-क्रियासूर्यं कर्मकाण्ड महार्णवम् ।
वेद-कल्पतरुं वन्दे प्रभुदत्ताग्निहोत्रिणम् ॥

अस्माकं चरितनायकाः प्रातःस्मरणीयचरणाः वैदिकशिरोमणय आहिताग्नयः पण्डितप्रवराः श्री-मत्प्रभुदत्तशास्त्रिमहोदयाः वेदवेदाङ्गविद्वत्सु भारते वर्षे सर्वथैव प्राधान्यपदमलमकुर्वन्निति निवेदित-मेवास्माभिः । तेषां महत्त्वमहितं गौरवपूर्णञ्च चरितमालोचयतामस्माकं हृदये महानुत्साहः, गर्वः, गौरवञ्च समुज्जृम्भते । स्वजीवने केन कियान् महत्त्वलाभः कृत इति न तस्य तादृशं महत्त्वसूचकं भवति, अपितु तेन स्वकीयजीवने कियान् कष्टानुभवः कृत— इत्येत-देव तस्य जीवने महत्त्वमासादयति । धनिकानां गर्भ-श्रीमतां पुत्रा यदि महत्त्वमाप्नुयुश्चेत् न किमपि तेषां महत्त्वम् । ये खलु निरवलम्बतया विविध-दुःखमयं संसारसागरं समुत्तीर्य सर्वलोकानां मूर्ध्नि प्रतितिष्ठन्ते, त एव धन्याः, त एव गुरवः, त एव जगत आदर्शभूता महापुरुषाः, तेषामेव जीवनं जीवनं, तेषामेव महत्त्वं महत्त्वम् । अस्माकं चरितनाय-कस्य पूज्यपादस्य श्रीमदग्निहोत्रिमहोदयस्य जीवनं तादृशमेव महत्त्वपूर्णमादर्शभूतमतएव च सर्वेषा-मनुकरणीयं वन्दनीयञ्चाभवत् ।

एतेषां जन्म 'जींद' मण्डलान्तर्गत लिजवाना ग्रामे १९२१ वैक्रमाब्दे कार्त्तिकशुक्लाष्टम्यां सोमवासरे श्रीमतां पण्डितघनश्याममिश्रमहोदयानां गृहे सम-भूत् । बाल्यकाल एव पितृवियोग-विकला अनाथा इमे समभवन् । अष्टमे वर्षे-१९२९ तमे वैक्रमाब्दे-विधि-वदुपनीता इमे ज्येष्ठभ्रातृभिः श्रीमद्भिः श्रीहरद्वारि-शर्म्ममहोदयैः सह स्वाध्यायाध्ययनार्थं काश्यां समागमन् ।

वाराणस्यां श्रीमतां चिन्तामणिगुर्जरमहोद-यानां सविधे सम्पूर्णस्य शुक्लयजुर्वेदस्याध्ययनं कृतवन्तः । ततश्च श्रीमतां मूलचन्द्रगुर्जरमहोद-येभ्यः, श्रीमद्भ्यः पण्डितजगन्नाथशर्मभ्यः सार्धं शतपथब्राह्मणमधीतवन्तः । सहैव च पूज्यपादानां पण्डितप्रवराणां वैयाकरणकेसरिणां श्रीमताम-नन्तरामशास्त्रिमहोदयानां सविधे भाष्यान्तं व्या-करणं सांख्ययोगशास्त्राणि चाधीतवन्तः । इमां कृत्स्नामपि शास्त्रसम्पत्तिमासाद्य सुप्रथितयशसां वैदिकशिरोमणीनां श्रीमतां युगलकिशोरव्यास-महोदयानां निकटे साङ्गं सविस्तरं कर्मकाण्ड-शास्त्रमधीत्य वैदिकप्रवरा इमे वाराणस्यां विद्वत्सु वैदिकेषु च प्रथमां प्रतिष्ठामवाप्य शनैः शनैर्लब्ध-

यशःप्रसराः समस्तेऽपि भारते प्रधानवैदिकाः समभवन् ।

अध्ययनकालानन्तं सर्वसौभाग्यसम्पन्ना अपि पूज्यचरणाः श्रीमन्महामहोपाध्यायमहोदया याव-ज्जीवनं छात्रेभ्यो वेद-वेदाङ्ग-कर्मकाण्डादिशिक्षां वितरन्तः सर्वथा स्वाध्यायनिरता एवाभवन् । सर्वप्रथमं १९४६ तमे वैक्रमाब्दे सरस्वती-गोपुरस्थितसत्यनारायणमन्दिरे वेदाध्यापकत्वे नियुक्ताः । १९५२ तमे वैक्रमाब्दे नगवास्थित-रुइयासंस्कृतपाठशालायाम्, १९५५ तमे च वैक्र-माब्दे भास्करपाठशालायामध्यापयन्, १९५८ तमे च विक्रमवत्सरे हिन्दूकालेजस्थरणवीर-संस्कृत महाविद्यालये वेद्-कर्मकाण्ड-प्रधानाध्या-पकपदे नियुक्ता इमे महता गौरवेण कार्यं समचा-लयन् । १९६४ तमे च वैक्रमाब्दे च हिन्दूकालेजस्य तत्कालीनाध्यक्षाणां श्रीमतां डा० भगवान्दास एम्० ए० डी० एल० महोदयानां पुत्रस्य विदेश-गमने तत्समर्थनमकुर्वन्तः श्रीमन्तो हिन्दूकालेज-मपहायाग्न्याधानं कृत्वा गृह एव पाठनकार्य-मकुर्वन् ।

१९७३ तमे च वैक्रमाब्दे देशपूज्यानां महामान्य-श्रीमालवीय-महोदयानामाग्रहेण सादरं सबहु-मानं सगौरवञ्च श्रीमन्तो हिन्दू-विश्व-विद्यालये संस्कृत विभागे प्राधान्येन कार्यभारं गृहीतवन्तः । हिन्दूविश्वविद्यालयस्य प्रधानस्तम्भेषु एत एव संस्कृतज्ञेष्वासन् । हिन्दुविश्वविद्यालयस्य धर्म-विज्ञान-विभागे निर्वतनं प्रधानाध्यापक (प्रिन्सिपल) पदे स्थिता इमे तद्विभागीय-समितेः ( फेकल्टी ) प्रधानाध्यक्षा ( डीन, Dean ) अपि आसन् । विश्व-विद्यालयीयसञ्चालनसभायां (काउन्सिल), सिनेट-समितौ च संस्कृत विभागस्य प्रतिनिधिपदे नियुक्ता आसन् । एवं सेन्ट्रलहिन्दूस्कूल-रणवीर-संस्कृत पाठशाला-सञ्चालन-समितौ ( स्कूलबोर्ड ) प्रधान-संस्कृत-सदस्या अप्यासन् । एवं आयुर्वेद-विभागे, अन्यास्वपि तत्तत्समितिषु ( सिण्डिकेट, कोर्ट आदि ) सदस्यतां कुर्वन्तो विश्वविद्यालयस्य महान्तं साहाय्यकं समाचरन् । एतादृशं गौरवं संस्कृत-विद्वत्सु प्रायो दुर्लभमेव ।

१९८१ तमे च विक्रमसंवत्सरे भारतसम्राजा "महामहोपाध्याय" पदव्या विभूषिता इमे तमेवो-पाधिं स्व-गुणगणगौरवगरिम्णा समभूषयन् । वस्तुतो निखिलेऽपि भारते नासीदेतादृशो वैदिकशिरो-मणिः । न केवलं शुष्कवैदिका एव, सिद्धान्तकौमुद्याः अन्येषाञ्च व्युत्पादकानां काव्य-साहित्य-दर्शन-ग्रन्थानां पाठने परम-प्रथित-कीर्त्तय आसन् । वेदार्थ-पाठने, कर्मकाण्डस्य जटिल-गहनविषयाणां मर्म-विस्फोटने च परं प्रावीण्यमासीदेतेषाम् । अतएव वाराणस्यामद्वितीयं साम्राज्यमासीत् तेषां संस्कृत-पण्डितेषु ।

एतेषां यादृशं पाण्डित्यमासीत् तादृशमेव च हृदयम्, औदार्यम्, सहृदयत्त्वम्, परोपकारित्वम्, दयालुत्वञ्चासीत् । प्रायः संस्कृत-पण्डिता अपूर्ण-पण्डित्या नैतादृशं महत्त्वं गौरवं गरिमाणमासाद-परोपकार-निरता उदाराशयाः सहृदयाश्च भवन्ति । अतएव साधारणजीवने स्थिता अपि चरितनायकाः आदर्शभूतमसाधारणं गौरवमासादयन् ।

प्रायो भारतवर्षस्य प्रधानश्रेष्ठिन एतेषां चरणानुरक्ताः, आज्ञापराः, भक्ताः, शिष्याश्चासन् । राजबलदेवदासप्रभृतयो जगत्प्रसिद्धा वदान्यमौलिभूताः श्रेष्ठिप्रवराः श्रीमतामाहिताग्निमहोदयानामनन्यभक्ताः, चरणानुरक्ताश्चासन् ।

हिन्दूविश्वविद्यालयस्य विभिन्नविभागेषु कियन्त एव प्रसिद्धा विद्वाँसो श्रीमतामग्निहोत्रिमहोदयानां कृपया गुणग्राहकतया चाध्यापनादिकार्येषु नियुक्ताः समुपकृताश्च सन्ति । विदुषां गुणग्रहणे तेषां समुन्नति-सम्पादने, सर्वविधसाहाय्ये च सहर्षं बद्धपरिकरा न जाने कियतां ब्राह्मण-विदुषां जीवनदातार आसन् । विविधैरुपायैः प्रकारैश्च याचकान् सफलमनोरथान् कुर्वन्तो महामहोपाध्यायमहोदयाः स्वकीयमक्षयं यशः, पुण्यञ्चार्जितवन्तः । शतशः सहस्रशो ब्राह्मणा विद्वाँसश्च तैरुपकृताः सन्ति ।

तेषां गुणगौरवावर्जितहृदयाः, श्रीमहामान्याः काशीनरेश्वराः, श्रीमन्मालवीयमहोदयाः, श्रीमन्मान्यवराः जीन्द-नरेश्वराः, अन्ये च भारतवर्षीया अनेके राजानः, महाराजाः, श्रेष्ठिनः, माननीयाः महापुरुषा विद्वत्प्रवरा एतेषां परमभक्ताः, अनुरागिणश्चासन् । भारते वर्षे प्रायः सुप्रसिद्धेषु सर्वेष्वपि नगरेषु प्रधानयागेषु प्रतिष्ठासु च सर्वत्रैवाचार्यत्वमाचार्य्याणाम् । अमृतसर-नगरीय-सुप्रसिद्ध 'दुर्ग्याना' मन्दिरसंस्थापनमप्येतेषां हस्तेनैवाभवत् । बहूनां राज्ञामभिषेकश्चैतैः सम्पादितः । किम्बहुना । स्वकीये विषये अनन्या अद्वितीयाश्चेमे सर्वां समुन्नतिम्, सौभाग्यम्, सामर्थ्यम्, महत्वम्, सर्वमपि स्वहस्तेनैव सम्पादयन्तः सर्वेषामेव भारतीययुवकानां विशेषतः संस्कृतज्ञानामादर्शभूता अभवन् । एतदेव महत्त्वं महत्त्वम्, एषैव समुन्नतिः समुन्नतिः, एतदेव वास्तविकं गौरवम् ।

एतेषां स्वरूपमपि नितरां मनोहरं रमणीयमाकर्षकञ्चासीत् । एकवारमेतेषां स्वरूपपरिदर्शनेन जनानां भक्तिः समुदेतिस्म । प्रायो विद्वाँसो बलहीनाः, स्वास्थ्यरहिताश्च भवन्ति । परमेतेषां स्वास्थ्यमतीव समीचीनं सुव्यवस्थितञ्चासीत् । वाचि माधुर्यं स्वाभाविकमभूत् । तैः सह संलपतां हृदयं परमाह्लादितं भवतिस्म ।

वैदिक-कर्मकाण्डप्रचारे यज्ञानां प्रचारे चैतेषां महान् प्रयत्न आसीत् । यत्र देशेषु पुरा यज्ञयागादिवैदिकक्रियानामभाव आसीत्, तत्र तत्राग्निहोत्रिमहोदयैर्महारुद्रादियागानां सहस्रशः प्रचारणं कृतम् । पञ्चगौडेषु श्रौतस्मार्तक्रियानुष्ठानप्रचारं विधाय वैदिकविधीनाम्, तन्मूलकस्य च भगवतः सनातनधर्मस्य यादृशः प्रचारः कृतः, यादृशी च भक्तिर्जनहृदये समुत्पादिता आसीत्, न तादृशी प्रयत्नशतेन व्याख्यानसभादिभिश्च सम्पादयितुं शक्या । इमे च साक्षात् वेदमूर्त्तयः, सनातनधर्मस्य प्रधानस्तम्भभूताः नास्तिकानां हृदयेऽपि वैदिकीं श्रद्धां समापादयन् ।

एतेषां प्रधान-शिष्येषु सर्वप्रथमशिष्यास्तु तेषां ज्येष्ठतनया श्रीमन्तो विद्याधरशर्म्ममहोदया एव सन्ति । तेषां परिचयः क्रमशो दास्यामः । इदानीमिदमेव वक्तव्यमस्ति यत् ते पितृचरणानामिव भारतवर्षे न स्वीयां तुलां बिभ्रति । पञ्चगौडेषु त एव

वैदिकशिरोमणयोऽस्माकं संस्कृत-समाजस्य गौरव-भूताः सन्ति ।

एवं श्रीमन्तो विजयचन्द्रवेदाचार्यमहोदयाः काशीस्थ-राजकीय-संस्कृतमहाविद्यालये वेदाध्यापका आसन् । तेषां स्मरणं कृत्वा हृदयं भिद्यते । हन्त साम्प्रतमेव ते नवयुवका विद्वांसः पूज्यपादानां गुरुचरणानां परिचर्यार्थमस्मान् शोक-सागरे विनिक्षिप्य कथामात्रशेषा वर्तन्ते ।

अपरे पण्डितनाथूरामशर्म्ममहोदया वेदाचार्याः, साम्प्रतं हिन्दुविश्वविद्यालयीये धर्मविज्ञानविभागे वेदाध्यापकाः सन्ति । ते विशुद्धानन्द महाविद्यालये व्याकरणाध्यापका अपि सन्ति । इतरे श्रीमन्तः पण्डित-व्रजवलालझा वेदाचार्याः, हिन्दुविश्वविद्यालयीय रणवीर-संस्कृत-पाठशालायां वेदविभागे प्रधानाध्यापकाः सन्ति । कलिकातानगरीयविशुद्धानन्द-महाविद्यालयवेदाध्यापकाः श्रीदेवानन्द झा वेदाचार्याः, खुरखुरास्थ-चन्द्रभूषण-संस्कृत-महाविद्यालये वेदाध्यापकाः श्रीत्रिवेणीशझा वेदाचार्यमहोदयाः, किम्बहुना, मैथिल सरयूपारीणगौड-सारस्वतेषु प्रायः सर्वेऽपि वैदिका विद्वाँसः स्तेषां साक्षात्परम्परया वा शिष्य-प्रशिष्या एव सन्ति । एतद्धि गृहमुत्तरभारते वैदिकानां मूलायतनं प्रधानस्थानञ्चाभवत् ।

एतेषां पञ्चभ्रातर आसन् । त्रयो भ्रातरः गृह एव तिष्ठन्ति । तेषां कुटुम्बादिकमपि तत्रैव वरीवर्ति । ज्येष्ठभ्रातरः श्रीमन्तो हरद्वारि शर्म्ममहोदयाः साम्प्रतमपि नवतिवर्षवयस्काः काशीवासं कुर्वन्ति । तेषां पुत्रत्रयं विद्यते । श्रीमन्तः कालीप्रसादमहोदयाः, श्रीगौरीदत्तशर्म्माणः, श्रीहरदत्तशर्म्माणश्चेति त्रयोऽपि वैदिकविद्वाँसः क्रियानिष्ठाः कार्यरताः सन्ति ।

श्रीमतां महामहोपाध्यायानां पुत्रत्रयं विद्यते । तत्र ज्येष्ठाः श्रीमन्तः पण्डितविद्याधरशर्म्ममहोदयाः हिन्दुविश्वविद्यालयीय धर्मविज्ञानविभागस्य प्रधानाध्यापकाः सन्ति । एतेषामपि परः शताश्छात्राः धर्माचार्याः वेदाचार्य्याश्च सन्ति । एतेषां विषये इदमेव कथनमलं भवेद्धु यदिमे श्रीमतां पितृचरणानामपेक्षया कस्मिन्नप्यंशे न्यूना न सन्ति । शीलनायाम् नम्रतायाम्, सौजन्ये, सौहार्दे, सदाचरणे चासाधारणाः सन्ति । एतेषां स्वरूपमपि तेषामिव गौरवपूर्णमाकर्षकं प्रभावोत्पादकञ्च विद्यते । एतेऽपि काश्यां विद्वत्सु गौरवभूताः, वैदिकेषु प्रथमगणनीयाः सन्ति । एभिरिदानीमेव श्रौताधानं कृतमस्ति ।

द्वितीयपुत्राः श्रीमन्तः पण्डितशिवदत्तशास्त्रिणो न्यायाचार्य्याः काशीस्थ-राजकीय-संस्कृत-महाविद्यालये न्यायाध्यापकाः सन्ति । इमेऽपि काशीस्थनवयुवकेषु प्रसिद्धाः कार्यकर्तार उत्साहवन्तश्च सन्ति ।

तृतीयतनयाः श्रीमन्तः पण्डितदेवनाथशर्म्माणो वैदिकविधौ निष्णाताः पौरोहित्यादिगृहकार्यं सम्पादयन्ति । इमेऽपि सुशीलाः, विनम्राः सदाचारपरायणाः सन्ति ।

यद्यपीमे वैदिकाचार्याः वर्षद्वयादस्वस्था एवासन् । परं नासीत् नित्यकर्म्मणां हानिः । कियतः कालात् जीर्णज्वरजर्जरा इमे पौषशुक्लतृतीयायाम् उत्तरायणे सङ्क्रमणसमय एव नितरां स्वस्थचित्ताः ज्ञानपूर्वकं शरीरं त्यक्तवन्तः । प्रातः समुत्थाय सन्ध्यावन्दनादि नित्यकृत्यं समाप्य, अरिष्टनिवृत्तये तुलादानं विधातुं धृतार्घ्यपात्रा एव सहसा अनायासेनैव शरीरं त्यक्तवन्तः । प्रोक्तमेव 'अनायासेन मरणं विना दैन्येन जीवनम् ।'

एतेषां कैलासवासेन भारतवर्षस्य वेदशाखी शुष्कतामापद्यत । वैदिकं पाण्डित्यञ्च ह्रसिमानमगमत । काशीस्थविदुषां गौरवस्तम्भरूपाणामग्निहोत्रिमहोदयानां काशीलाभेन शून्यमिव भारतीयं विद्वन्मण्डलं वस्तुतः शून्यमेव सञ्जातम् । कियतां ब्राह्मणविदुषां कल्पवृक्षोऽयं सहसैव तिरोभूदिति दौर्भाग्यविलसितमेव सुरभारत्याः, संस्कृत-साहित्य-समाजस्य च ।

# सुप्रभातम्



वैदिक-काल-निर्णेता



भगवान् लोकमान्यः तिलकः ।



वैदिकधर्म-संरक्षकः



महामान्यो मदनमोहन मालवीयः ।



काशी-विद्यापीठ-कुलपतिः



डा० भगवान् दासः, एम० ए०, डी० लिट्०

# प्रणववादः ।

ले० —डा० भगवानदास एम० ए०, डी० एल० महोदयः ।
( श्रीकाशी विद्यापीठ कुलपतिः )

## पूर्वकथा ।

प्रायः त्रिंशद्वर्षादधिकः समयो व्यतीतः । १९९४ वैक्रमाब्दीये शीतकाले 'बारावंकी' नाम्नि नगरे यदा अहं राजकीय कार्य-वशाद्गतवानासम्; तदा अस्माकं मित्रस्य पण्डित परमेश्वरीदासस्य गृहे एकस्य विदुषो दर्शनमभवत् । तेषां नाम 'धनराज' इति आसीत् । मया श्रुतं यत् शैशवावस्थायामेव शीतला रोगेण तेषां नेत्रे नष्टीभूते; परं तेषां मेधा[1] नितरां प्रबला आसीत्, बहूनि बहुमूल्यानि च संस्कृतग्रन्थरत्नानि तैः कण्ठाभरणीकृतान्यास-न् । तैः सह वार्तालापेन मदीयं मनस्तेषां कृते सश्रद्धमभवत् । तेषां कथनमासीत् यत्, "येषां विषयाणां प्रश्नमात्रेणैव पाश्चात्यिक-पण्डितानां समाजे, मनुष्यो नास्तिकः भ्रष्टो वा भवति; तेषां सर्वेषामुत्तराणि संस्कृतग्रन्थेषु सविस्तरमुपपादि-तानि सन्ति । तैरुक्तं यत्, मया बाल्यावस्थायां गुरुभ्यः पृष्टम्, यत् गुरो ! पाणिनिव्याकरणे माहेश्वराणि सूत्राणि चतुर्दश-सङ्ख्याकान्येव किं सन्ति ? पञ्चदश संख्यकानि षोडशसङ्ख्यकान्येव वा किं न सन्ति ? एवं सूत्राणां क्रमो यो लिखितस्तथा कथं विद्यते ? अन्यथा तेषामुल्लेखः कथं न कृतः ? इति । एतेषां प्रश्नानामुत्तरेण मया ताडनमेव लब्धम् । कियत्कालानन्तरमेव मया कस्यापि संन्यासिनो मुखाच्छ्रुतम् यत् कश्चन विद्वान् विद्यते यत्पार्श्वे विंशतिसहस्र संख्यकानि माहेश्वरसूत्राणि, षष्टिसहस्रमितञ्च नारदीयं भाष्यं विद्यते । तेषां निकटे त्वया पठनीयम् । अस्याः प्रणाल्या एकः श्लोकः साम्प्रतमपि श्रूयते । यथाः—

"यान्युज्जहार माहेशाद् व्यासो व्याकरणार्णवात् ।
तानि किं पदरत्नानि मान्ति पाणिनिगोष्पदे ॥" इति

एवं मया नेत्रहीनेन तेषां गृहे पठता यतस्ततो गुरु-ग्रन्थानामन्वेषणं कृत्वा शतशो ग्रन्थाः समुपलब्धाः । ते च स्थानाभावात् कण्ठेकृता । "

एष आत्मोदन्तस्तै रेव प्रज्ञाचक्षुर्भिःस्वयं कथित आसीत्, अत्र कियान् सत्यांश इति वक्तुं नास्ति किमपि स्वतन्त्रं प्रमाणम् ।

आत्मवृत्तान्त-श्रवणानन्तरं मया पृष्टम् यत् प्राचीन-ग्रन्थेषु कुत्रापि 'अहम्' 'एतत्' 'न' एतेष्वेव त्रिषु शब्देषु ब्रह्मनिरूपणं भवता समुपलब्धमिति । तैश्च किञ्चित् विचार्य प्रोक्तं यत् ओम्, एतेभ्य एव शब्देभ्यो ब्रह्मनिरूपणं गार्ग्यायण-ऋषिप्रणीते 'प्रणववाद' नाम्नि ग्रन्थे कृतमस्ति । तैस्तदानीं तस्य ग्रन्थस्य कियानंशोऽपि श्रावित आसीत् । पुनर्मया काश्यां सेन्ट्रलहिन्दूकालेजस्य सेवायां समागतेन १९५७ तमे विक्रमवत्सरे काश्यामाहूतास्ते पञ्चमासान् मद्गृहेऽवस्थाय १६००० श्लोकात्मकं प्रणववादनामकं ग्रन्थमलीलिखन् । स च ग्रन्थः क्रमशो मया, मन्मित्र

* एषलेखः श्रीमतां श्रीभगवान्दासमहोदयानामा-ङ्ग्लवैदिकाङ्कृते सङ्क्षेपतो हिन्दीभाषातोऽनूदितः, अत्र तत्राय यत्रकुत्रचन सन्धिनियमस्य भङ्गोऽपि विहितः, क्षन्तव्यं पाठकैः । —सम्पादकः

[1]—धारणाशक्तिः । 'धीर्धारणावती मेधा' ।

प्रवरेण महामहोपाध्याय-श्रीगङ्गानाथझामहोदयेन, श्रीमता महामहोपाध्यायेन श्रीअम्बादासशास्त्रिणा च लिपी कृतः । तस्यैव क्रियानंशः सारतः श्रीमतामभिमुखं संस्थाप्यते ।

अस्मिन् ग्रन्थे अयमेव विषयो विस्तरतः समुपवर्णितो विद्यते यत् प्रणवे त्रीणि अक्षराणि सन्ति, 'अ' 'उ' 'म्' इति । एतेषामर्थः—अहम्, एतत्, न इत्ययमेवास्ति । एषां त्रयाणामेव समाहारो ब्रह्मपदवाच्यः ।

पाठकाः विचारयिष्यन्ति यत् 'अहम्-एतत्-न' इत्यस्य किं रहस्यमिति तथा प्रणवस्य अतिपवित्रे शब्दे अस्यार्थस्य सन्निवेशेन वा किं फलम् ? हिन्दूनां कर्णेषु मुखेषु च इयं वार्ता सम्यक् प्रविष्टा वर्तते यत् समस्तजगतः सारभूता वेदाः, वेदानां सारभूता गायत्री, गायत्र्याः सारभूतो मूलबीजभूतः प्रणवः । प्रणवात् वेदस्य, वेदाच्च जगतः समुत्पत्तिः । परं प्रणवाद्वेदानाम्, वेदेभ्यश्च जगतामुत्पत्तिः कथं जायत इत्यस्य प्रश्नस्योत्तरं प्रचलितग्रन्थेभ्यो ग्रन्थपण्डितेभ्यश्च नोपलभ्यते । अस्मादेव प्रणववादग्रन्थादस्य समीचीनमुत्तरं समुपलभ्यते ।

अनन्तजीवानामेकमात्रमयमेवाभिलापो यत्—'सुखं मे भूयात् दुःखं माभूदिति' । अनन्तजीवैरनन्ताः प्रकाराः सुखस्य दुःखस्य च स्वीकृताः सन्ति । परमनुगमतः सर्वेषां सुखानां दुःखानाञ्चैकमेव मूलस्वरूपं विद्यते । अहमः—आत्मनः वृद्धिरेव सुखस्यैकमात्रं स्वरूपम्, तस्य हानिः-ह्रास-एव दुःखस्यैकं स्वरूपं विद्यते । यद्यप्युपाधिभेदात् अनन्ताः जीवाः सन्ति, परं तेषां मूलस्वरूपमेकं 'अहम्'—इत्येवास्ति । अत एव मनुना प्रोक्तम्—

**सर्वं परवशं दुःखं सर्वमात्मवशं सुखम् ।**
**एतद् विद्यात् समासेन लक्षणं सुखदुःखयोः ॥**

उपनिषत्स्वपि—

**"आत्मनस्तु कामाय सर्वं प्रियं भवति ।"**
**"आत्मा वै श्रेष्ठः प्रेष्ठश्च" आमन्त्रितो अहम् अयम् इत्येवाग्रे उक्त्वा अथ अन्यन्नाम प्रब्रूते यदस्य भवति ।**

—बृहदारण्यके,

यत्र यत्र स्वत्वं विद्यते, स्ववशः प्रचलति, स्वीयं शासनं विद्यते, तत्रैव सुखम् । यत्र यत्र परत्वम्, परतन्त्रत्वम्, परशासनं विद्यते; तत्रैव दुःखम् । यत्र अहंत्वं ( ममत्वम् ) यत्राभिमानः, तस्यैव पोषणेन सुखम्, शोषणेन च दुःखम् ।

परतन्त्रतैव मृत्युः । रामेण पृष्टो वशिष्ठः । यथा—

**परमेष्ठ्यपि निष्ठावान् ह्रियते हरिरप्यजः ।**
**भवोऽप्यभावमायाति कैवास्था मादृशे जने ॥**

—योगवाशिष्ठे ।

व्यासेनापि स्वपुत्राय शुकाय समुपदिष्टम्—

**किं ते धनेन किमु बन्धुभिरेव वा ते,**
**किं ते दारैः पुत्रक ! यो मरिष्यसि ॥**
**आत्मानमन्विच्छ गुहां प्रविष्टम्,**
**पितामहस्ते क्व गतः पिता च ॥**

नचिकेता अपीन्द्रादिममेव वरं वरयामास—

**येयं प्रेते विचिकित्सा मनुष्ये**
**अस्तीत्येके नायमस्तीति चान्ये ।**
**एतद्विद्यामनुशिष्टस्त्वयाऽहम्,**
**वराणामेष वरस्तृतीयः ॥**

यदि मृत्युभयान्मुच्येत जीवस्तदैव पारतन्त्र्याद्विमुच्येत तदैव च तस्य आत्मवशत्वं सर्वश्रेष्ठत्वञ्च सिद्ध्येत । तदैव परमानन्दः समुत्पद्येत । "भूमा वै सुखम् ।" तदैव आत्मनः अहमः, भूमा = बहुत्वम्, महत्त्वं व्यापकत्वं वा सिद्धं स्यात् । "नाल्पे वै सुखमस्ति ।" आत्मनो लघुत्वे सुखं नास्ति । यावत् स्वं परवशम्, पराधीनम्, लघुम्, मृत्युवशं मन्यते, तावत् कुतः सुखम् ?

अस्मादेव मृत्युभयादात्मानं मोक्तुं मनुष्यैर्बहवो विचाराः कृताः । सर्वस्रष्टुः परमेश्वरस्य सत्ता स्वीकृता । आरम्भवादः स्वीकृतः । न्याय-वैशेषिक-दर्शनयोर्निर्माणं सञ्जातम् । ततोपि सन्तोषो न जातः । पराधीनता तथैव स्थिता । यदि परमेश्वरो रुष्टः स्यात्तदा किं भवेत् ? इत्येतद् भयं स्थितम् एव । तदा नास्तिक दर्शनानामुत्पत्तिः सञ्जाता । सांख्य-योगशास्त्राणाञ्च ।

प्रकृतिपुरुषौ द्वावनादी पदार्थौ स्वीकृतौ । परिणामवादः प्रचलितः । द्वैतापत्तिः समायाता । अत्रस्त्वद्वैतस्यावश्यकताऽऽसीत् । " द्वितीयाद् वै भयं भवति' । तदा मायावाद-अविद्यावाद-अध्यासवाद-आभासवाद-विवर्तवादानामुत्पत्तिरभूव । वेदान्तदर्शनमाविर्भूतम् ।

वेदान्ते, पुरुष—प्रकृत्योर्भिन्नत्वं न स्वीक्रियते; परं पुरुषस्य-आत्मन एव माया—प्रकृतिः-शक्तिःस्वीकृता वेदान्तिभिः । 'अहं ' रूपः पुरुषः, आत्मा, " एतत् " रूपा प्रकृतिः, माया अविद्या चेति । एवं जगतो द्वौ विभागौ जातौ—एकः अहम्,रूपः,विषयी, अन्यश्च 'एतद्' रूपः, विषयः, दृश्यः, आत्मविवर्त्तः, विरुद्धः, विपरीतः आभासमात्रः, आत्मनि अध्यस्तः, अध्यारोपितः । ' अहम् ' सत्यम् , माया च मिथ्येति तैः सिद्धान्तितम् । परमत्रापि वेदान्ते—एषा शङ्का समुत्पन्ना यत् सम्बन्धो भवतु मिथ्या; परं कथमेष सम्बन्धः समुत्पन्नः ? यद्येकवारं जातस्तदा पुनः कथं न भविष्यति ? किमत्र प्रमाणं यद्येनास्माकं मुक्तिः स्यादेव( ! वेदान्त-प्रचलितैः महावाक्यैर्न सन्तोषः सञ्जायते । केचन वदन्ति

'सोऽकामयत बहुस्याम्, प्रजायेय " " तत्सृष्ट्वा तदेवानुप्राविशत् " इति ।

केचन केवलं निष्क्रियं साधयन्ति । अहं ब्रह्मास्मि, "नेह नानास्ति किंचन " इत्यादिः । परमाभ्याँ वाक्याभ्यामस्माकं सन्तोषो न जायते । वयन्तु तादृशं वाक्यमभिलषामः यत्र निखिलमपि विश्वं करामलकवत् प्रतीयेत । तदेतत् महावाक्यं " अहम् एतत् न " सर्वेषां समाहाररूपं वरीवर्त्ति ।

## प्रणववादस्य विषयः ' महावाक्यम् ' ।

' अहं ', ' एतत ', ' न '—अस्मात वाक्यात् यत फलं निःसरति तस्य वर्णनं विस्तरतः प्रणववादे कृतमस्ति । तदत्र संक्षेपतः समुपवर्ण्यते ।

प्रणवस्य त्रयाणामक्षराणामर्थस्त्रिषु शब्देषु कृतोऽस्ति । एतेष्वेकं मूलभूतं महावाक्यमुपलभ्यते । ' अ 'कारस्य 'अहम्', आत्मरूपः, ' उ ' कारस्य ' एतत् ' अर्थः, (अनहम्, अनात्मरूपः ), ' म ' कारस्य ' न ' इत्यर्थः, ( निषेधात्मक सम्बन्धः ) । अतः प्रथमं, महावाक्यं "अहम्-एतत्-न, " परमात्मनः, ब्रह्मणः, स्वरूपम् , स्वभावम् , प्रकारम्-अर्थात्-संसारं दर्शयति । एतेषां त्रयाणां शब्दानां संयोगतः, विभागतः, तथा अनुलोमतः, प्रतिलोमतश्च अवान्तर महावाक्यान्युद्भवन्ति । एकैकं महावाक्यं संसारस्य एकैकस्य विभागस्य प्रकारस्य च नियमभूतमस्ति । तदनुसारमेव संसारस्य तत्तद्विभागाः सञ्चाल्यन्ते ।

के के प्रधान-प्रकाराः ? केन केन महावाक्येन तेषां सूचनं सञ्जायते ? तत्तद्विधेया अधिकारिणश्च के के ? एतन्निर्णयार्थं मूलमहावाक्ये दृष्टिनिक्षेपो विधेयः । यतस्तस्मिन्नेव तत एव च समस्तसंसारस्य सृष्टिः, स्थितिः, लयश्च सम्भवति । ' अहम् ' इति आत्मनः स्वरूपम् । ' एतत् ' इति अनात्मनः स्वरूपम् । अनयोर्निषेधरूपः सम्बन्धः । "अहमेतन्नास्मि "—इमां भावनाम् , इमां धारणाम्, इमां संविदं च यदि क्रमदृष्ट्या अवलोकयामश्चेत् , अस्मिन् तिस्रो वार्त्ता निःसरन्ति । प्रथमतस्तु ' अहमः ' अग्रे ' एतत ' पदार्थः समागच्छति । तस्मिन्नेव क्षणे ज्ञानं भवति । तदनन्तरं ' अहमः ' एतदश्च संयोग-वियोगस्य सम्भवः सम्भवति । इयमेव इच्छा । तृतीयक्षणे संयोगस्य वियोगो भवति । सैषा क्रिया कथ्यते । संयोग-वियोगयोः सहोपादानं संयोगस्य प्रथममवश्यसम्भवात् पश्चात् वियोगस्य चापि सम्भवाच्च । प्रथमं रागस्ततो द्वेषः, आदौ प्रवृत्तिस्ततो निवृत्तिः, पूर्वमादानं ततो दानम् । इयमेव संसरणक्रिया वर्तते ।

## ज्ञानम्, इच्छा, क्रिया च ।

ज्ञानम्, इच्छा, क्रिया चेति तिस्र एव जीवमात्रस्य जीवनमात्रस्य च सर्वस्वमस्ति । प्रतिक्षणं प्रत्येको जीवः ज्ञानेच्छाक्रियाणां चक्रे पतितः परिभ्रमति । आदौ ज्ञानम् , तत इच्छा, तदनन्तरञ्च क्रिया । क्रियाया अनन्तरं पुनर्ज्ञानम्, पुन रिच्छा, पुनः क्रिया । एतदनन्तं चक्रं सर्वथा प्रचलत्येव ।

प्रणवे अकारो ज्ञान-सूचकः, उकारः क्रियायाः, मकारश्च सदसदात्मिकाया विधिनिषेधरूपाया इच्छायाः ।

' अहं ' रूपे आत्मनि-पुरुषे-अथवा प्रत्यगात्मनि यत्त्रयाणाममीषां पदार्थानां वीजं वर्तते, तदेव सत्-चित्-आनन्देति

नाम्ना कथ्यते । ज्ञानं चिदात्मकम्, क्रिया सदात्मिका, इच्छा चानन्दस्वरूपा । एवमनात्मनि-अर्थात्-मूलप्रकृतावपि एतएव त्रयः पदार्थाः । सत्त्वं ज्ञानात्मकम्, रजः क्रियात्मकम्, तमश्च इच्छात्मकम् । एतएव प्रत्येक परमाणौ, प्रत्येकस्मिंश्च ब्रह्माण्डे व्याप्ताः सन्ति । ब्रह्माण्डे ज्ञानस्याधिष्ठाता देवो विष्णुः, क्रियाया ब्रह्मा, इच्छायाः शिवः । प्रतिब्रह्माण्ड मिमा एव त्रिमूर्तयः सन्ति ।

## ऋग्वेदः ।

"अहम्", "अहमस्मि", "अहं ब्रह्मास्मि", इदं महावाक्यं ज्ञानस्य संभूतम् । अस्य व्यवहरणम्, प्रयोगः, विष्णुदेवताया आधीनं विद्यते । अस्यैव टीकारूपो ऋग्वेदः । ऋग्वेदस्य मुख्यं महावाक्यमिदमेवास्ति । अस्यैव विस्तारो ऋग्वेदे वर्तते । अस्मिन्नेव ज्ञानसर्वस्वं निहितं वर्वर्ति ।

## यजुर्वेदः ।

"एतत्", "एतत् ( बहु ) स्याम्", एकोऽहं बहु स्याम्" एतन्महावाक्यं क्रियातत्त्वम् । अयमेव यजुर्वेदस्य मूलमन्त्रः । अस्याधिष्ठाता देवो ब्रह्मा । चतुर्णां वेदानां वक्ता ब्रह्माऽस्ति अतएवोच्यते तदो वेदप्रकाशकारिणी क्रिया तस्मादेव भवति । नोचेत् पृथक् वेदप्रकाशका देवाः भिन्ना एव ।

## सामवेदः ।

"न", "एतत् न", "नेह नानास्ति किञ्चन" एतन्महावाक्यमिच्छायास्तत्त्वम् । इच्छाया कार्यमेतदेव यत् जीवं सांसारिकेषु पदार्थेषु प्रवर्तयेत्, पुनस्तस्य इच्छापूर्तिर्न भवेत्, तस्य मनो विषय-व्याकुलं स्यात्, तत असन्तोषं वैराग्यञ्चाधिगच्छेदिति । इच्छैव प्रथमं जीवम् अस्तेः स्वरूपं दर्शयित्वा पश्चात् नास्तेः स्वरूपं प्रदर्शयति । जीवः स्वेच्छावशादेव संसृतिचक्रे पतितो दुःखानि भुञ्जन् 'जीव'-संज्ञां लभते । 'एतत सर्वं किमपि नास्ति'-एतदेव स्वरूपमिच्छायाः । सामवेदस्य मूलभूतमिदमेव महावाक्यम्, शिवश्च तदधिष्ठाता देवः ।

## अथर्ववेदः ।

एतेषां त्रयाणामेव वाक्यानां समाहारः तदेव मूलवाक्यम् "अहमेतन्न" विद्यते । अथर्ववेदोऽस्यैव व्याख्यारूपः यं स्वयं महाविष्णुर्विरचितवान् ।

यथैव महाविष्णुना समष्टिरूपेण अथर्ववेदस्य रचनां विधाय स्वाधीनस्थानामधस्थानामधिकारिणां शासनाधीनं कृतम् तथा स्वाधीनस्थकर्मचारिणां पृथक् पृथक् विभागसञ्चालनाय ऋग्यजुःसाम्नां रचना कृता, तथैव तदुपरिष्टैरधिकारिभिर्महाविष्णोः शिक्षणाय महावेदः—गायत्रीरूपो विरचितः । एवमनन्तोऽयं क्रमः । मूलसूत्राणि, मूलसिद्धान्तानि मूलमहावाक्यानि सर्वेष्वपि तान्येव सन्ति । केवलं व्याख्याविस्तारत एव भेदः प्रतीयते ।

## गायत्री ।

गायत्री विषये उच्यते यत् चतुर्विंशतिमुख्यमहावाक्यानां सूचकमेकैकमक्षरं गृहीत्वा गायत्रीनिर्माणं सञ्जातमिति ।

## प्रत्येकस्य वेदस्य चत्वारो विभागाः ।

ज्ञानेच्छाकृतीनां त्रयाणां तथा चतुर्थस्य 'न' कारस्य च समाहारः—इत्येव सिद्धान्तितम् । एतेषामेव-परिवर्तन-विवर्त्तनाभ्यां संसारस्यानन्तानन्तविभागाः सञ्जायन्ते । एतदनुसारमेव प्रत्येकस्य वेदस्य चत्वारो विभागाः सन्ति । एषा विभाग-व्यवस्था केवलमस्माकं गणनायैव, वस्तुतस्तेषां न परस्परं भेदः । एकस्मिन्नन्येषां निभृता स्थितिर्वर्तत एव । ज्ञाने, इच्छा क्रिया च वर्तते । इच्छायां ज्ञानं क्रिया च । क्रियायां इच्छा ज्ञानञ्च । ज्ञानमये ऋग्वेदेऽपि ज्ञानांशः संहितारूपः, क्रियांशो ब्राह्मणभागः, इच्छांश उपनिषत्स्वरूपः, एतेषां समाहाररूप उपवेदश्च तन्त्रशास्त्रम् । एवं सर्वेष्वपि वेदेषु विभाग-चतुष्टयं विद्यत एव ।

## शाखा ।

प्रत्येकस्य वेदस्य शाखाद्वयं विद्यते । कृष्णा, शुक्लाच । एतस्य कारणमिदं यत्, पुरुषः, प्रकृतिः आत्मा, अनात्मा, सत्, असत्, प्रकाशः, तमः, दक्षिणमार्गः, वाममार्गश्चेति एतेषामेकैकस्याधिक्यप्रदर्शनाय प्रत्येकस्य वेदस्य शाखाद्वयं विद्यते ।

## अङ्गोपङ्गानि।

एतदनन्तरं ज्ञानेच्छाक्रियाणां परिवर्त्तन-विवर्त्तनाभ्यां वेदस्य शिक्षादीनि षडङ्गानि, वेदान्त-मीमांसादीनि चोपाङ्गानि जातानि। एतेषां संमिश्रणेन बहूनि शास्त्राणि जायन्ते। एतेषां सर्वेषां वेदानां शास्त्राणाञ्च समूहसमष्टिः संहितांशे विद्यते।

## वेदानां विषयः।

(१) ऋग्वेदे ह्येतत् सर्वं वर्णितमस्ति यत् कस्य पदार्थस्य कस्मात् कथञ्च समुत्पत्तिः, स्थितिः, विनाशश्चेति। को देशः को कालस्तदुचितः? का तस्यावश्यकता? कियन्तश्च तद्विभागाः? इत्यादि।

(२) यजुर्वेदे क्रियायाः स्वरूपम्, क्रियायाः मोक्षः, बन्धश्च, मोक्षस्य प्रकाराः, यज्ञाः, संस्काराः, श्राद्धानि तेषामेतेषामाध्यात्मिकोऽर्थः समुपवर्णितः। जीवनमात्रस्य सर्वे व्यवहारा एतस्मिन् कथिताः सन्ति।

(३) सामवेदे इच्छायाः वर्णनमस्ति।

प्रथममेव कथितं यत्, संसारे द्वावेव पदार्थौ दृश्येते, 'अहम्' 'अनहम्' चेति। अनयोः सम्बन्धः, अनयोः संयोग-वियोग-मित्यथमेव शक्तिस्वरूपस्तृतीयः पदार्थः। शक्तेरपि एकं स्वरूपमिच्छैव। इच्छां विहाय अन्यत् किमपि "शक्ति" जगति नास्ति। आत्मनो दृष्ट्या यःपदार्थः 'सत्,' स एव जीवदृष्ट्या 'इच्छा' पदार्थः। यथा आत्मनस्त्रयो गुणाः, सत्, चित, आनन्दरूपाः. यथा मूलप्रकृतेः सत्त्वरजस्तमोरूपा स्त्रयोगुणाः सन्ति, तथैव शक्ति-मायादि-नामधेयाया दैवप्रकृतेस्त्रयो गुणाः, सृष्टिस्थिति-संहाररूपाः सन्ति। देवतादृष्ट्या इमा एव तिस्रः शक्तयः सरस्वती-लक्ष्मी-सती-रूपाः कथ्यन्ते। ज्ञानशक्तेः-सरस्वत्याः ब्रह्मणः सम्बन्धः, यो ब्रह्मा क्रियायाः, उत्पत्तेश्चाधिष्ठाता, एतदर्थं विद्यते यतो ज्ञानं विना क्रियाया अनुपपत्तिः। एवं क्रिया-शक्तेः-लक्ष्म्याः ज्ञानस्य स्थितेश्चाधिष्ठातुर्विष्णोःसम्बन्ध एतदर्थं विद्यते यत् क्रियामन्तरा ज्ञानस्य साफल्यं नास्ति। एवमेव सती-शिवयोः सम्बन्धः। द्वावपीच्छारूपौ। अतएव द्वयोरर्धाङ्गरूपः सम्बन्धः।

ज्ञानेच्छाक्रियानुसारं प्रत्येकस्य त्रयो विभागाः। लक्ष्म्याः-अर्थात्-क्रियाशक्तेः प्रत्येकं त्रयो विभागाः सन्ति। यथा रमा, लक्ष्मीः, शारदा च। रमायां ज्ञानांशस्य संमिश्रणम्, लक्ष्मीः शुद्ध-क्रियारूपा, शारदायां क्रियया सह इच्छा सम्मिलिताऽस्ति।

एवं ऐन्द्री-ब्राह्मी-सरस्वती-भेदेन सरस्वती चापि त्रिविधा।

सत्या अपि त्रयो भेदाः सन्ति। यथा-सती-गौरी, पार्वती च। एतासां नवानां समाहारो भैरवीनाम्ना व्यपदिश्यते। एता एव दशमहाविद्याः, ज्ञानेच्छाक्रियाभेदेन भवन्ति।

देववाहनानां हंस-गरुड-वृषभाणामप्येतादृश एवार्थो देश-काल-गतिरूपः। एतएव त्रयो निषेधात्मकस्य मकारस्य गुणाः सन्ति। त्रयोऽपि साक्षात् निषेधस्वरूपाः शून्यरूपाः सन्ति। देशोऽप्याकाशरूपः, कालोऽप्यभावरूपः, असद्रूप एव। एवं गतिरपि, या देश-कालयोः संयोगेन समुत्पद्यते, साऽपि परमशून्यरूपाऽस्ति। यद्यप्येते त्रयोऽपदार्थाः परम-सद्रूपाः सन्ति; तथापि एतेषां विना संसारस्यास्तित्वमेव न स्यात्। एष्वेव संसारः।

एतासां शक्तीनामनन्त-प्रकारकं वर्णनं सामवेदे कृतमस्ति।



# वैदिको राज्याभिषेकः ।

लेखकः—श्रीतारादत्त पन्तः, साहित्याचार्यः, व्याकरण-काव्यतीर्थः दर्शनशास्त्री ।



ज्याभिषेकः खलु न सर्वस्यापि मनुष्यमात्रस्य अपि; तु तिरश्चां पशूनां मृगाणां मक्षिकाणां कीटानामपि महाकौतूहलजनको दृश्यते स च भगवता वेदेनैवं विहितो-यस्य सामग्रीवर्णन-श्रवणमात्रेणापि मनुष्यमात्रस्य मनसि महान्ति कल्लोलकुलानि प्रोल्लसन्ति, शौर्य्यौदार्य्यादि परिपूर्णं भवति हृदयम्, आशा च भवति यदि-एवंविधिना एवं रूपस्य यजमानस्य एवं प्रकारकः अभिषेकः क्रियेत एवंविधेन चतुर्वेदविदा पुरोधसा, साक्षात्प्रभुदत्तेनेव प्रभुदत्तेन, निदाघमल्लस्येव भगवता सवित्रा, तर्हि अस्माकं भूगोल एव किमुत भारते; स्वाराज्याय, वैराज्याय, भौज्याय, विजित्यै, अभिजित्यै, सर्वा अपि प्रजा समर्था भवेदिति । तस्यैतस्य महाभिषेकस्य संक्षेपः पाठकमनोविनोदाय क्रियते यथा—महाभिषेकवित् यः पुरोहित इच्छेत्, अयं क्षत्रियः सर्वान् जेतव्यान् जयेत्, सर्वालोकान प्राप्नुयात्, अयम्, सर्वेषां राज्ञां मध्ये श्रैष्ठ्यं लभेत, परमतां गच्छेत्, अथ च वाञ्छेत् अयमेवं साम्राज्यं, भौज्यं स्वतन्त्रं राज्यं विशिष्टं राज्यं, किमुत पारमेष्ठ्यं राज ं माहाराज्यं, सर्वेषामाधिपत्यं लभेत, युद्धपारगामी स्यात्, सार्वभौमः स्यात्, सार्वकालिकः स्यात्, सर्वस्याः पृथिव्या एकराट् स्यात्, तमेतं क्षत्रियम् ऐन्द्रेण महाभिषेकेणाऽभिषिञ्चेत्; परं प्रजापालन-प्रतिज्ञापूर्वकम् ।

अयि पाठकाः ! पश्यत मन्त्रार्थतत्त्वं सामर्थ्यं पुरोहितस्य । स प्रतिज्ञां कारयित्वा पश्चात् राज्याभिषेकं करोति । प्रतिज्ञां च शपथपूर्वकम् करोति क्षत्रियः—यथा—

स य इच्छेत् एवंवित् क्षत्रियः अहं सर्वान् जेतव्यान् जयेयम्, अहं सर्वान् लोकान् विन्देयम्"............इत्यादि स न विचिकित्सेत, स ब्रूयात् सह श्रद्धया, यस्मिन् दिने ज्ञातोऽस्मि यस्मिंश्च प्रेतास्मि तदुभयमन्तरेण इष्टापूर्त्तं मे लोकं, सुकृतम्, आयुः, प्रजां मत्तोवर्जितां ( पृथक् ) कुर्याः, यदि ते अहं द्रुह्येयम् । इति क्षत्रियस्य प्रतिज्ञया साक्षात् स्पष्टमेव बुध्यते न क्षत्रियस्य स्वकीया प्रजा इति । किन्तु आचार्य-समर्पिता रक्षणीया प्रजा क्षत्रियस्य। अन्यथा कथमीदृशी शपथपूर्विका घोरा प्रतिज्ञा स्यात् । अतोऽद्यापि भवतां ब्रह्मणानां सर्वाः प्रजाः ब्राह्मणानुकारिणः स्वायत्तीकुर्वन्ति, भवन्तः शिथिलप्रयत्ना दृश्यन्ते, इति हन्त !

शिथिलताच वेदानभिज्ञतयैव । अन्यथा—

सैनापत्यञ्च राज्यञ्च दण्डनेतृत्वमेव च ।
सर्वलोकाधिपत्यञ्च वेदशास्त्रविदर्हति ।

इति सर्वज्ञस्य मनोर्वचनं कथं सङ्गतं स्यात्।
हन्त! ब्राह्मणाः अनधीतवेदा अपि वयं ब्राह्मणा एव यावन्तं कालं यदि स्थिताः किमर्थं पुनरपि वेदाभ्यासेन न रक्षिष्याम आत्मनः स्वरूपम्, संपत्तिम्, वैभवम्, अग्रगण्यताम्, सामर्थ्यञ्च। पश्यत, स्वसामर्थ्यम्—यथा—ऐतरीये—

न ह वा अपुरोहितस्य नृपस्य, विबुधा, अन्नमदन्ति, तस्माद्राजा राज्यं कुर्वाणो, ब्राह्मणं पुरोदधीत।
अपि तत्रैव।

राज्यं कुर्वतः क्षत्रियस्य पुरोहित एव आहवनीयो भवति, जाया गार्हपत्यः, पुत्रोऽन्वाहार्यपचनः, स यत् पुरोहिताय करोति, आहवनीये एव तज्जुहोति,। अथ यज्जायायै करोति गार्हपत्ये एव तद् जुहोति। अथ यत्पुत्राय करोति-अन्वाहार्यपचने- एव तज्जुहोति।

इति भगवती श्रुतिः स्वयमेव यज्ञ-राज्ययोः केषाऽत्यन्तसारूप्यं प्रतिपादयन्ती पुरोहितस्य क्रियायां तथा राज्यसंचालने कौशलम् इति ...मेव दर्शयति।

प्रशंसति च पुरोहित-सामर्थ्यं भगवती श्रुतिः—

अग्निर्वा एष वैश्वानरः पञ्चमेनिः ( पञ्च-...ः ) यत्पुरोहितः। तस्य वाचि, एका भवति, पादयोरेका, त्वचि एका, हृदये ..., उपस्थे एका, ताभिर्ज्वालाभिर्ज्वलन्ती-...प्यमानाभिरुपोदेति राजानम्।

...र्वा एष वैश्वानरः 'पञ्चज्वालः यत् पुरोहितः, ... राजानं परिगृह्य तिष्ठति, समुद्र इव भूमिम्।

इत्यत्र पञ्चशक्तियुतस्य पुरोहितस्य राजोपसपर्णम् प्रथमा, पुरोहिशक्तिसंहिता द्वितीया श्रुतिः समुद्रवेष्टितभूमिसदृशे पुरोहिते राष्ट्रपतौ राज्यसञ्चालके सति नृपस्य राज्ये न अनिष्टं भवति-इति च श्रुतिः कथयति—

दीर्घायुरस्य राष्ट्रं भवति नैनं पुराऽऽयुषः प्राणास्त्यजन्ति, आजरसं जीवति सवमपुरेति न पुनर्म्रियते—
यस्यैवं विद्वान् ब्राह्मणो राष्टगोपः पुरोहितः।

—ऐतरेयब्राह्मणे,

इष्टप्राप्तिं च दर्शयति भगवती श्रुतिः।

क्षत्रेण क्षत्रं जयति वलेन वलमश्नुते—
यस्यैवं विद्वान् ब्राह्मणो राष्ट्रगोपः पुरोहितः

अथच प्रजानुरागं दर्शयति सति पूर्वोक्ते पुरोहिते-

तस्मै विशः संजानते संमुखा एकमनसः,
यस्यैवं विद्वान् ब्राह्मणो राष्ट्रगोपः पुरोहितः

पूर्वोक्तगुणविशिष्टपुरोधसा कृताऽभिषेकः अथच, तदाज्ञया कृतशासनविधानः क्षत्रियः, अनायासेनैव शत्रून् जयति।

स इत् राजा प्रतिजन्यानि विश्वानि,
अप्रतीतो जयति राष्ट्राणि।

—ऋग्वेदः,

पौरोहित्यस्य योग्याऽयोग्यौ ब्राह्मणौ—

योह व त्रीन् पुरोहितान् त्रीन् पुरोयातॄन् वेद,
स ब्राह्मणः पुरोहितः, स वदेत पुरोधयाः,
अग्निर्हि पुरोहितः, पृथिवी पुरोधाता,
वायु र्वाव पुरोहितः, अन्तरिक्षं पुरोधाता,

आदित्यो वाव पुरोहितः, द्यौः पुरोधाता, एष एव पुरोहितो य एव वेद, अथ स तिरोहितो य एवं न वेद।

अत्र भगवत्या श्रुत्या अग्नि-पृथिव्योः, वातान्तरिक्षयोः द्यौ-सूर्ययोः विलक्षणः सम्बन्धो भूगर्भ-भूगोल-खगोलविद्यागम्यः, सर्वनीतिरम्यः, सर्वतोभद्रनम्यः, तद्वेत्ता पुरोहितः नवेदपुरोहित इति प्रतिपादितम्। अत्र भूमेः स्थितिः, भूमौ प्रधानकार्य्याणि च अग्न्यधीनानि। अन्तरिक्षकार्य्याणि वायोरधीनानि स्वर्गिणां ग्रहनक्षत्रादीनां विशेषकार्याणि सूर्यगतिज्ञानाधीनानि इति तेषां पुरोहित-पुरोधातृभावः संक्षेपतः सुधीभिर्विभावनीयः विस्तरस्तु-लेखान्तरे गोलसूत्रे, सूर्यचरिते वा द्रष्टव्यः। प्रकृतमनुसरामः

हा! भारतीयाः!! अथवा सर्वेऽपि मानवाः! क्व सन्ति ते क्षत्रियाः, येषां राज्याऽभिषेकमहोत्सवः सार्वभौमः स्यात् क्व गतास्ते ब्राह्मणा येऽक्षत्रियमपि स्वगुणमहिम्ना क्षत्रियं कारयेयुः। येषां पादप्रक्षालनावशिष्टजलं सार्वभौमाः शिरसा वहन्तिस्म—

आपः पादावनेजनी द्विषन्तं निर्दहन्तु मे,
—इतिमन्त्रेण।

हा हा विद्वाँसः! एतादृशौ द्वौ वैदिक-सार्वभौम-चक्रवर्त्तिनौ प्रातःस्मरणीयश्रीप्रभुदत्त—विजयचन्द्रौ, भारतभाग्यह्रासात् युगपदेव भूलोकं मत्यजताम् इत्यहो कष्टपरम्परा!!!

तथापि ब्रह्मणैः पुरा निष्कारणः षडङ्गो वेदोध्येयो ज्ञेयश्चासीत्। इदानीन्तु सकारणः, (राज्याप्तिफलकः) पठितव्यः, अर्थतः ज्ञातव्यश्च कर्त्तव्यश्च प्रयत्नः भारतभूमावेव भारतराज्याऽभिषेकाय भविष्यतः पालकस्य। यदैव भारतभूमौ वैदिको राज्याभिषेको भविष्यति तदेव श्रुतिस्मृतिरीत्या राज्यशासनं प्रवर्त्तेत, तदैव विश्वजनीनम्, तदेव राज्यं स्वतन्त्रम्। तदर्थमेवाग्रहः कर्त्तव्यो भारतीयैः। अयि सार्वभौमं अवलम्बस्व क्षत्रियत्वम्, पालय वर्णाश्रमधर्मम्। कुरु भूलोकाऽधिपत्यम्, सदैव तिष्ठ भारतभूमौ, भवतुराज्याभिषेको वैदिक इति॥

संग्रहीष्यामः संभारान्, भावयिष्यामः परिसरं ब्रह्मण इतिच।



# सुप्रभातम्

सुप्रभातस्य निरीक्षकः



सर्वतन्त्र-स्वतन्त्रः श्री दामोदरलाल गोस्वामी ।

भारतवर्षस्य महर्षिः



आचार्य श्रीरामावतार शर्मा ।

प्रयागविश्वविद्यालय-कुलपतिः



म० म० डा० गङ्गानाथ झा एम० ए०, डी० लिट्०

# वैदिक आर्य्य-निवासः ।

लेखकः—दर्शनकेशरी, श्रीगोपालशास्त्री, साहित्याचार्यः, काव्य-न्यायतीर्थः, (सुप्रभात-सम्पादकः) ।

पाश्चात्याः संस्कृतज्ञा विद्वांसस्तदनुगाश्च कियन्तः ज्ञा अपि ऋग्वेदाद्यालोचनया अन्यान्यैतिहासिक-मानेन च आर्य्याणामादिनिवासं भारतातिरिक्तं कमप्यन्यं देशं कल्पयन्ति, तत्रापि च तेष्वेव तद्विषये बहु द्वैमत्यं पश्यते, केचन कथयन्ति यद् "आर्य्याः" प्रथमतः कास्पियन स्य पार्श्वे कुत्रचन प्रदेशे न्यवात्सुः, तत एव क्रमशोऽत्र रते वर्षे आगमन्निति" केऽपि तु "आर्य्या उत्तरमेरुप्रदेशतः तो भारतमाजग्मुरिति" उद्घोषयन्ति, अन्येच "तिब्बत त्रिविष्टप) प्रदेशत एव आर्य्या अत्र भारते पदन्यासमकार्षु-रि" जल्पन्ति । इत्यादि । एवं परस्परं सत्प्रतिपक्षायमा-णे अन्योऽन्यमेवान्योऽन्य-प्रमाणैर्व्याहन्यन्त एव ।

परन्तु अद्य सुप्रभातपाठकानां पुरतो वैदिकशिरोमणीनां स्थानां म.म. पूज्य प्रभुदत्तशास्त्रिणां स्मृतौ कोऽप्युपहार-वैदिकविषयक एवार्पणीयो लेख इति वैदिकाङ्कसम्पा-नां प्रियवयस्यानां श्री पं० केदारनाथशास्त्रि-सारस्वता-ज्ञामासाद्य ऋग्वेदाद्यालोचनेनेतरप्रमाणेन च तत्र विषये विचारशमादधत् स्वान्तःकरणसन्तोषायान्येषां विमर्शिनां विमर्शाय च कियदपि यतिष्ये ।

मम मतौ तु स्वदेशेऽपि विदेशिवदाचरतामेवेदं कथनं स्याद् यद् वयं भारतीया बहिस्था यवनशासकवद् शासकवदिह भारते बहिस्त आगत्य तिष्ठामो स्माकमादिजन्मभूरिति । हा ! हन्त ! एवं भारतीयानां अतिविभ्रमः सञ्जातोऽस्ति यत्ते स्वयं संस्कृताध्ययनं स्वतं वेदराशिं नालोचयन्ति किन्तु; परकीयमुखेनोद्गतं मन्तं विज्ञानं सत्यत्वेनाकलयन्तः स्वदेशेऽपि विदेशि वत्त्व श्लाघनीयं मन्यन्ते ।

अस्तु ! अद्य तत्रैवाहं ऋग्वेदर्चासु सुप्रभातपाठकानां दृष्टिमावर्जयामि पश्यन्तु ।

"इमं मे गङ्गे यमुने सरस्वति सुतुद्रि स्तोमं सचता पुरुष्ण्या असिक्न्या मरुद्वृधे वितस्तयार्जी-किये शृणुह्यासुषोमया"। (ऋ० १०—७५)

मन्त्रोऽयं भारतीयप्रसिद्धनदीस्तुत्या कं देशमार्य्यावासं सूचयति ?

"सितासिते सरिते यत्र सङ्गते तत्राप्लुतासो दिवमुत्पतन्ति"

अस्मिन्मन्त्रे प्रयागस्थ-गङ्गायमुनयोः सङ्गमः साक्षादेव दृश्यते । एतेनापि सूच्यते यदार्य्याणां वैदिककालिको निवासोऽत्रैव भारते वर्षे आसीन्नान्यत्र कृष्णयजुर्वेदीय-प्रथमकाण्डेऽष्टमप्रपाठके दशमानुवाके—

"ये देवा देवसुव स्त त इममामुष्यायणमन-मित्राय सुवध्वं महते क्षत्राय महत आधिपत्याय महते जानराज्यायैष वो भरता राजा सोमोऽस्माकं ब्राह्मणानां राजा ।"

इति मन्त्रो दृश्यते, यत्र भारतशब्दस्यैवोल्लेखोऽस्ति; येनायमेव भारतो देश आर्य्याणामादिनिवासः सूच्यते । शत-पथ ब्राह्मणेऽपि ।

"तेषां कुरुक्षेत्रं देवयजनमास, तस्मादाहुः कुरुक्षेत्रं देवानां देवयजनमिति ।"

एतन्मन्त्रगतं कुरुक्षेत्रमेवादियज्ञस्थलमार्य्याणामत्रैव-निवासं सूचयति । आर्य्यावर्त्त-शब्दोऽपि "आर्य्या, आवर्तन्ते

पुनः पुनरुद्भवन्ति यत्रेति व्युत्पत्त्यात्रैव आर्य्यनिवासं लक्षयति।

अपरञ्च,

**गान्धारिभ्यो मूजवद्भ्योऽङ्गेभ्यो मगधेभ्यः**

**प्रेष्यं जनमिव शेवधिं तक्मानं परिदद्मसि।"**

इत्याथर्वणिकमन्त्रे सर्वेषामेवाधुनापि प्रसिद्धानामार्य्यावर्त-देशानामङ्गमगधादीनां मूजवदादिपर्वतानामपि कीर्तनं विद्यते। किमेतेनेदमेवायाति यदार्य्या बहिस्त आगत्यास्मिन् देशे न्यवात्सुः? (कान्धार) गान्धारदेशस्तु आर्य्याणां पूर्वं निवासभूरासीदिति डिण्डिम-घोषं श्रुतिरुद्घोषयति।

**"पण्डितो मेधावी गान्धारानेवोपसम्पद्येतैव-मेवेहाचार्य्यवान् पुरुषो वेद।"**

(छान्दो० ६-१४-२)

महाभारतकालेऽपि गान्धारदेश आर्य्यनिवासोऽभूदिति तद्देशराजस्य पुत्री गान्धारी धृतराष्ट्रेण परिणीता सूचयति। इदानीं यत्तत्र म्लेच्छावासो विद्यते तत्रार्य्याणां स्वधर्मसंकोचो हेतुः।

अपरञ्च

**"किं कृण्वन्ति कीकटेषु गावः"**

(ऋ० ३-५-३-१४)

इति निन्द्योपात्तोऽयं (मगध) कीकटदेश आर्य्यनिवासस्य स्वसान्निध्यमेव द्योतयति, नतु कास्पियन् देशस्य। निरुक्तकारश्च "कीकटो नाम देशोऽनार्य्यनिवासः" (नि० ६-६-४) इति मगधदेशमेव परामृशति।

स्मृतिषु तु

**"कीकटेषु गया पुण्या नदी पुण्या पुनःपुना',**

**च्यवनस्याश्रमं पुण्यं, पुण्यं राजगृहं वनम्"**

इति स्पष्टमेव मगधदेशकीर्तनं श्रूयते। अन्यच्च—

**"यस्येमे हिमवन्तो महित्वा,**

**यस्य समुद्रं रसया सहाहुः।**

**यस्येमाः प्रदिशो यस्य बाहुः**

**कस्मै देवाय हविषा विधेमः** (ऋ० १०-१२-१-४)

इति विराड्ब्राह्मणः स्तुतौ स्पष्टमेव भारतस्यैवसीम्नो निर्देश उपलभ्यते। इत्यादि ऋग्वेदीय-प्रमाणैरेव सूच्यते यदार्य्याणां निवासभूः भारतवर्षमेव पूर्वमप्यासीन्न कश्चनान्यो देश इति। एतदन्यत; यत् कदाचित् सीम्नि संकोचो दृश्यते कदाचिच्च विस्तृतिरिति। तदपि कालभेदेन सम्पद्यते। यथा-ऋग्वेदीयनदीस्तुतौ "ऋजीत्येनी रुशती महित्वा परिज्रयांसि भरते रजांसि, अदब्धा सिन्धुरपसामपस्तमाश्वानचित्रा वपुषीव दर्शता"इत्यादिना हिमालय-पार्श्वस्थ-नदीनाम्ना तत्रत्य-देशानां "गान्धारीणामवाविका" (ऋ० १-१२६-७) इत्यादिभिश्च गान्धरादिदेशानामार्य्यावर्तेषु प्रवेशो दृश्यते—

**"नि त्वा दधे वर आ पृथिव्या इडायास्पदे सुदिनत्वे अह्नाम्, दृषद्वत्यां मानुष आपगायां सरस्वत्यां रेवदग्ने दिदीहि।** (ऋ. ३-२३-४) इत्यनेन मन्त्रेण दृषद्वती-सरस्वतीप्रभृतिनदीनां पार्श्वगा देशा आर्य्यावर्तेषु दृश्यन्ते यथा—

**सरस्वतीदृषद्वत्योर्देवनद्योर्यदन्तरम्।**

**तं देवनिर्मितं देशं ब्रह्मावर्तं प्रचक्षते॥**

इति मनुनापि ब्रह्मावर्तसीम्नो निर्देशोऽत्रैव कृतो दृश्यते। एतेन तु एवमपि सम्भाव्यते यदिमे सर्वेऽपि देशा आर्य्यावर्ते सन्ति क्रमशः कदाचिदेकस्य निर्देश आयाति कदाचिदन्यस्येति एतद्व्यतिरिक्तः कश्चन अन्यो देश आर्य्याणां निवासभूमिः पूर्वमासीदिति तु सर्वथापि खण्ड्यत एव। अपरञ्च पश्यन्तु, तत्रैव प्राथमिकी सृष्टिः सम्भवति यत्र, पूर्णा प्रकृतिः स्यात् (अर्थात् यत्र देशे प्रकृतिदेव्या विलासः सर्वथापि पूर्णतामधिगतश्चेत्) एतदपि भारतवर्ष एवावलोक्यते। अत्रैव षडपि ऋतवः स्वीयं पूर्णं विकाशमाविष्कुर्वन्ति। माघकवेः शब्दे यथा—

**"तपेन वर्षाः शरदा हिमागमो,**

**वसन्तलक्ष्म्या शिशिरः समेत्य च।**

प्रसूनकान्तिं दधतः सदर्तवं,
इहैव वास्तव्यकुटुम्बितामिताः ॥

इति। किम्बहुना, अत्र भारते एकस्मिन्नपि समये षडपि ऋतवो यत्र तत्र विलसन्ति। एवं यदा खलु हिमालयस्य [illegible]प्रदेशे हेमन्तशिशिरयोर्विलासस्तदानीमेव सिन्धुदेशस्य [illegible]स्थले ग्रीष्मस्य दोर्दण्डप्रताप उद्घुष्यते, मयसूरा-( मैसूर ) [illegible]न्ते वसन्तस्य, आसामादिषु वर्षाणाम्, मध्यप्रदेशे च [illegible]म्। एवमाधिभौतिकपूर्णतापि इहैव भारते। एवं कर्मकाण्ड [illegible]काण्ड-भक्तिकाण्डानामपि प्राधान्येन आध्यात्मिकी अपि [illegible]पूर्णता दरीदृश्यते। मिथिलायां कर्मकाण्डबाहुल्यं विहारे [illegible]दिषु च ज्ञानाधिक्यम् गुर्जरे भक्तिप्राबल्यञ्च प्रसिद्धमेव। [illegible]प्रान्ते काश्यान्तु सर्वेषामेव सामञ्जस्यम्। आधि-[illegible]पूर्णतायामपि तामसिकदेवेभ्यो भूतप्रेतादिभ्य आरभ्य [illegible]वादं ब्रह्मात्मैक्यं यावदत्रैव बहवो वादा दृश्यन्ते [illegible]दिकाले च पूर्णपुरुषाणामेवोत्पत्तिर्भवतीति सर्वथापि-[illegible]ऽयं सिद्धान्तः। एवञ्च तत्रैव पूर्णपुरुषाणामादि [illegible]र्भवितुमर्हति, यत्र प्रकृतिरपि सर्वात्मना पूर्णा स्यादि [illegible]भिः कतिपयैः प्रमाणैर्मया 'यथासम्भवं भारतवर्षम् [illegible]णामादिनिवासभूरिति' श्रीमतां सुप्रभातपाठकानां [illegible]य प्रकटितम्। श्रीमन्तश्चात्र विषये पर्य्याप्तं पर्य्यालोच-[illegible] किमयं मम प्रयासः साफल्यमेति नवा ? अहन्तु सम्भाव-[illegible] यदिमे दाम्भिकाः पाश्चात्याः सुधियो भारतीयान् [illegible]मेवं सिद्धान्तं प्रवर्तितवन्तः, "इमे भारतीयाः [illegible]ः किन्तु वयमिव इमेऽपि बहिस्था एव, इति" एतस्या-[illegible]यो भवेद् यदयं देशो न युष्माकमेव। अयन्देशस्तु [illegible], एवं विद्यते यद् ये बलिनो भवन्ति तेऽत्रागत्य [illegible] विस्तारयन्ति यथा भवन्तः पूर्वमत्रागत्यात्रत्या-[illegible]द्राविडान् विजित्य दासान् कृत्वाऽधितिष्ठन्ति [illegible]। तथैव वयमपि समागता अत्रैव वत्स्यामो देशमिमं [illegible] इत्यादिच्छद्मबुद्ध्या भारतीय-युवकान् विकृतमस्ति-[illegible] सर्वमपि भारतीयसमाजमन्तःकलहयन्ति। देशस्य [illegible] पूज्यतमां संस्कृतिं सभ्यतां विदूषयितुमनेकविधं [illegible] विस्तारयन्ति। यथा—"अत्रदेशेऽपरा जातय आसन्नार्य्याश्चात्रागत्य ता जातीर्विजित्य दासभावं नीतवन्तः। स्वयञ्च विभज्य केचन ब्राह्मणकर्म कुर्वाणा ब्राह्मणा अभवन्, केचन शासनादिकृत्यं कुर्वन्तः क्षत्रियाः, एवं व्यापारकृत्यादिषु संसक्तास्ते वैश्या बभूवुः, अपरे च येऽत्रत्या जना आसन् ते तेषां सेवकाः शूद्राः सञ्जाताः—इत्येवं वर्णव्यवस्थेयं पश्चात्कल्पिता विद्यते, कथमेतस्याः कृते भवतामेतावान् प्रयासः ? त्यजन्तु सर्वमिदमाडम्बरं अस्मदादिवत् सर्वेऽपि भवन्त एकवर्णा भवन्तु" इत्यादि विजेतृजातीयानां यो भावो भवति तमेव प्रचारितवन्तः। अल्पज्ञाश्चेमे केवलांग्लभाषामात्रदुर्ज्ञान दुर्विदग्धाः तमेव तेषां वञ्चनात्मकं सिद्धान्तं साधु मत्वा सर्वत्र च बालपाठशालासु पाठयन्ति पठन्ति च, येन च सर्वेऽपि आधुनिका आंग्लकलाशाला-पाठशालाध्यायिनश्छात्रास्तद्विचार विचूर्णचेतसः स्वीयमेव देशं परदेशं मन्यन्ते, स्वीयां संस्कृतिं बर्बरसंस्कृतिमसभ्याञ्च मत्वाऽवहेलयन्ति, इति विमृशन्तु सुधियः। एतेषां प्रवञ्चनापराणां पाश्चात्यवणिजामागमनात् पूर्वन्तु केषामपि मनसि अयं विचारो नोदियाय, यद् वयं कास्पियन् ह्रदनिवासिनः, नेयं भारती भूरस्माकं पितृपितामहादीनां जन्मभूरिति। एतेषामागमनेन सह अन्यरोगवदयमपि विषमयप्रयोगो भारतीयानां पाश्चात्यशिक्षाविकृतमस्तिष्कानां हृदये सन्निविष्टः सञ्जातः। पश्यन्तु, ये मन्त्रद्रष्टार ऋषयः सन्ति तेषाम् एतस्य कथने कियान् प्रयास आसीद् यद् नायमस्माकं देशः, वयमत्र विजेतारो भूत्वा समागताः अस्माकं जन्मभूस्तु इतोऽन्यत्रोत्तरस्यां दिशि कास्पियन् ह्रदो विद्यते इति। येषामार्य्याणां स्वभाव एवेदृग् भाति यत्ते स्वपूर्वपुरुषाणां स्मृतिरक्षणे बद्धपरिकरा दृश्यन्ते, गोत्र-प्रवरादिरूपेणाधुनाऽपि स्वपूर्वपुरुषान् प्रख्यापयन्ति, त एव यद्यन्यत आगता अभविष्यंस्तर्हि तस्य देशस्य नाम-रक्षायै यत्नं नाकरिष्यन् ? प्रत्युत इतो भारतवर्षत एवान्यत्र गमनस्य प्रमाणमुपलभ्यते यथा—

"शनकैस्तु क्रियालोपादिमाः क्षत्रियजातयः,
वृषलत्वं गता लोके ब्राह्मणादर्शनेन च।
पौण्ड्रकाश्चौण्ड्रद्रविडाः काम्बोजा यवनाः शकाः,
पारदाः पह्लवाश्चीनाः किराता दरदाः खशाः।

मनु अ० १० श्लो० ४३-४४

श्रीमद्भागवते प्रियव्रतस्य राज्ञः पुत्राणामन्यत्र प्रसिद्ध-द्वीपद्वीपान्तरेषु गमनं तत्रचोपनिवेशादिसंस्थापनं प्रसिद्ध-मेवेति । अद्य श्रीमतां विचारार्थं पूर्वरङ्गस्वरूपेण किञ्चिदिव निगद्यैतावतैव विरम्यते । श्रीमन्तश्चावश्यमत्रावदधतु, परामृशन्तु, परस्परं विमृशन्तु स्वान्तःकरणे, यद् वेदा-नामनध्यायेन कीदृशी क्षतिरस्माकमधुना दरीदृश्यतेऽस्माकं मूल एव कुठाराघातः सञ्जातोऽस्ति । सत्यमेवाभ्यधायि मनुना—"अनध्यायेन वेदानामाचारस्य च वर्जनात् । आलस्यादन्नदोषाच्च मृत्युर्विप्राञ्जिघांसति" इति सत्यं वयं जीवन्मृता एव जाता इदानीं वेदाध्ययनत्यागेन । "अन-धीत्य द्विजो वेदमन्यत्र कुरुते श्रमम् । स जीवन्नेव शूद्र-त्वमाशु गच्छति सान्वयः" ( मनु. २-१६८ ) इति शतशो वेदानध्यायिद्विजानां निन्दा तदध्यायिनाञ्च प्रशंसा मनुना कृतास्ति । परन्तु वयं ब्राह्मणा स्वाज्ञानपरवशास्ततो वहिर्मुखा एव दैनन्दिनं भवाम इत्यहो अस्माकंज्ञानान्ध-ताविलासवैचित्र्यम् ।

वैदेशिकाश्च तदधीत्याज्ञाततन्मर्माणोऽप्यस्माकमेव वन्धून् तत्रत्यज्ञानवितरणव्याजेन वञ्चयन्तो विभ्रमयन्ति, विपथञ्च नयन्ति । पश्यतोहरा इव अस्माकं पश्यतामेव भारतीययुवकान् स्वानुगान् विदधति । वयञ्च हस्तोपरिहस्तं धृत्वा विषीदामः । भविष्यति किञ्चिदितोऽपि वैचित्र्यम् ।



# वेदोऽखिलो धर्ममूलम् ।

ले०—श्रीनरदेवशास्त्री, वेदतीर्थः ।

पुरा खल्वैतदासीत्, यत्, स्वाध्यायमधीत्य स्वधर्मं पालयन्तिस्म भारतीया ब्राह्मणाः, न चाद्यत्वे तत्तथा । तदानीन्तनो वेदपरः स्वाध्यायशब्द इदानीं षडङ्गान्यतमे शास्त्रे प्रवर्तते । "स्वाध्यायोऽध्येतव्यः", इत्युपनिषद्वाक्यप्रवृत्तिरपि तादृश्येव संवृत्ता । स्वाध्यायः = स्ववेदोऽध्येतव्यः, अधीयन्ते किमु भूदेवैः स्व-स्व-वेदः ? तथा इदानीन्तनानां भूदेवानामार्यमिश्राणां षडङ्गान्यतमे शास्त्रे सर्वतोमुखी रुचिः प्रवृत्तिश्च, तथा कुतो न स्व-स्व-वेदे, इत्येव न विजानीमः । वेदः खलु भूदेवानां निधिः—निधिरक्षणं च तेषां प्रधानो धर्मः । षडङ्गरक्षणञ्च नाम गौणो विधिः । प्रधाने कृते यत्नः सफलो भवति । वेदेषु रक्षितेषु किमु षडङ्गरक्षणं दुःशकम् ? वेदरक्षणं नाम ब्राह्मणानां निष्कारणो धर्मः, स च परित्यक्तस्तैः । उदरदरीपूरणचिन्तया, घृतलवणतैलतण्डुलचिन्तया ग्रस्ताः परिभ्रष्टा वैदिकपथात् ।

"यो जागार तमृचः कामयन्ते"

(ऋग्वेदे)

कामयति किमु ते भूदेवाः ? यान् ऋचः कामयन्ताम्

"यो जागार तमु सामानि यन्ति"

(ऋग्वेदे)

सामानि यन्ति किमु भूदेवान् ?

"यो जागार तमयं सोम आह"

(ऋग्वेदे)

आगच्छति किमु सोमो देवो ब्राह्मणान् प्रति किमपि शोभनं मन्त्रयितुम् ?

'तवाहमस्मि सख्ये न्योकाः'

(ऋग्वेदे)

सख्ये तिष्ठति किमु सोमो देव इदानीन्तनानां ब्राह्मणानां स्थाने ?

एतत्सर्वं पुराऽऽसीत् अद्यत्वे तु वैदिकप्रथा लुप्तप्राया तिष्ठति केषाञ्चिद्ब्राह्मणानां गृहे गुरुशिष्यपरम्परा-रक्षकाणां भूदेवानाम् । वेदरक्षा नाम परमोधर्मः = निष्कारणो धर्म इदानीं निर्वाहसाधनीभूतस्तादृशं महत्त्वं नोपधारयति ।

ब्राह्मणस्य हि देहोऽयं, क्षुद्रकामाय नेष्यते ।
इह कृच्छ्राय तपसे, प्रेत्यानन्तसुखाय च ॥

इति तत्त्वं तु विस्मृतिपथमेव गतमिति प्रतीयते । हन्त, हन्त, किमिदं संवृत्तम् । ये ब्राह्मणाः पुरा यवनकाले महता प्रयासेन वेदरक्षां विदधति त एवेदानीं वैदिकधर्मरक्षक-पोषक-स्वराज्याभावात कालमाहात्म्याच्च वेदरक्षणे तदीक्षणे चासमर्थाः संवृत्ताः । वेदैर्विना ब्राह्मणा मूमूर्षन्ति, ब्राह्मणैर्विना

वेदा मुमूर्षन्ति, वेदब्राह्मणैर्विना धर्मो मुमूर्षति, धर्मेण विना जगन्मुमूर्षति। कथङ्कारं जगतीतले धर्मः प्रचलतु,—"सर्वं धर्मे प्रतिष्ठितम्" यदि मनु वाक्यमेतत्सत्यम्, यदि च नाम स धर्मो वेदे कात्स्र्न्येन प्रतिपादितः, इत्यपि च तथ्यम्, यदि च "तद्वचनादेवाम्नायस्य प्रामाण्यम्" तर्हि आम्नायं विहाय धर्मतत्त्वं विज्ञातुं कः समर्थः केवलं षडङ्गान्यतमे शास्त्रे भूरिपरिश्रमेण, वाचोविग्लापनेन च किं सेत्स्यति?

अयि भो विद्वांसो ब्राह्मणाः! यदि जगतः कल्याणमभिवाञ्छथ तर्हि स्ववेदः स्वनिधिः सर्वथा रक्षणीयः। तस्मिन् रक्षिते जगद्रक्षितं स्यात्तस्मिन्पालिते जगत्पालितं स्यात्—

अयि भोः

चातुर्वर्ण्यं त्रयो लोका।
श्चत्वारश्चाश्रमाः पृथक्॥
भूतं भव्यं भविष्यच्च।
सर्वं वेदात्प्रसिद्ध्यति॥

(मनुः)

अत एव वेद एव मतिं कुरुत, वेद एव परिश्रमं कुरुत। वेदेषु रक्षितेषु स्मृतिग्रन्थानां रक्षा, स्मृतिग्रन्थेषु रक्षितेषु सदाचाररक्षा, ब्राह्मणानुब्राह्मणरक्षा, यज्ञरक्षा, शास्त्ररक्षा, वेदेषु रक्षितेषु सर्वं संरक्षितं स्याद्वेदेषु हापितेषु सर्वं हापितं स्यात्।

वेदरक्षामन्तरेण को नाम जगतीतले आर्यसंस्कृतिरक्षां विधातुं समर्थः? अत एवाद्य—

स्वाध्यायान्माप्रमदः।

इत्येव वक्तव्यम्।

वेदास्त्यागाश्च यज्ञाश्च,
नियमाश्च तपांसि च।
न विप्रदुष्टभावस्य,
सिद्धिं गच्छन्ति कर्हिचित्॥

(मनुः)

इत्यपि न विस्मरणीयम्।

"स्वाध्यायहीनं=स्ववेदविहीनं (द्विजं) न पुनन्ति वेदाः" वेदाः न पुनन्ति॥

अयि भोः काशिकपण्डिताः, !

यथाऽऽर्यमिश्रैरन्येषु शास्त्रेषु भूरिपरिश्रमः क्रियते, आयुषो भागाधिक्यं याप्यते तथैव वेदेऽपि परिश्रमो विधीयताम् इति भूयो भूयो निवेदनं सविनयं सानुबन्धम्।

अनभ्यासेन वेदानाम्
आचारस्य च वर्जनात्।
आलस्यादन्नदोषाच्च
मृत्युर्विप्राञ्जिघांसति॥

(मनुः)

वेदो नित्यमधीयतामाचारो रक्ष्यतामालस्यं प्रहायान्नदोषो (प्रतिग्रहादि) ऽपवार्यतामन्यथा मृत्युश्च ब्राह्मणानां द्वारि सन्निहितस्तदाकृष्टा अकालमरणं म्रियताम्। किमभीष्टं भूदेवानाम्? तदेव श्रोतुकामा अत्रैव विरमामः।

# ब्राह्मणादीनां परस्परं सहभोजनव्यवस्था ।

ले०—महामान्यो देशपूज्यः श्रीमान् मदनमोहन-मालवीय-महोदयः

अथ केषामन्नं ब्राह्मणैर्भोज्यमिति विचार्य्यते।

"तत्र गौतमः—

प्रशस्तानां स्वकर्मसु द्विजातीनां ब्राह्मणो भुञ्जीत। इति "प्रशस्तानां विहितकर्मानुष्ठातृत्वेन निषिद्धानुष्ठातृत्वेन च स्तुतिविषयाणाम्। द्विजातीनां त्रैवर्णिकानाम्।" इति वीरमित्रोदयः। मिताक्षरायां तु "प्रशस्तानां स्वकर्मणा शुद्धजातीनां ब्राह्मणो भुञ्जीतेति" पठितम्। तत्रापि पाठे पूर्वोक्त एवार्थः। वीरमित्रोदये आपस्तम्बः—

त्रयाणां वर्णानां क्षत्रियप्रभृतीनां समावृत्तेन न भोक्तव्यम्। प्रकृत्या ब्राह्मणस्य भोक्तव्यम्।

कारणादभोज्यम्। यत्र प्रायश्चित्तीयं कर्मासेवने प्रायश्चित्तवति निर्वेशस्य भोक्तव्यम्।

सर्ववर्णानां स्वधर्मे वर्त्तमानानां भोक्तव्यं शूद्रवर्जमित्येक इति।

अत्र समावृत्तग्रहणाद् ब्रह्मचारिणः सर्ववर्णेषु भिक्षाचरणमनिषिद्धम्। तत्र गौतमः—सार्ववर्णिक भैक्षचरणमभिशस्तपतितवर्जितमिति, संस्कारमयूखे वर्णधर्मप्रकरणे वाराहवाक्यम्—

त्रिषु वर्णेषु कर्त्तव्यं पाकभोजनमेव च। इति वीरमित्रोदयप्रायश्चित्तविवेकयोर्ब्रह्मपुराणम्—

"राज्ञां पर्वणि वैश्यानामश्नीयान्मङ्गले गवाम्।" इति

राजशब्दः क्षत्रियजातिवाचकः पूर्वमीमांसाया-श्चेष्ट्यधिकरणे (२ अ. ३ पा. ३ सू.) शावरभाष्यादौ तथैव निर्णीतत्वात्। पर्वणि उत्सवे इति प्रायश्चित्तविवेकटीकायां गोविन्दानन्दः।

'तिथिभेदे क्षणे पर्व' इति क्षणे उत्सवे इत्यर्थः। इति तेनैवोक्तेः।

गवां मङ्गलं नाम वैश्यानामुत्सवविशेषः। उपलक्षणमेतदुत्सव-मात्रस्य। एतदग्रे स्पष्टीभविष्यति।

वीरमित्रोदयमदनपारिजातापरार्केषु यमजमदग्निपैठीनसाः—

ब्राह्मणस्य सदाश्नीयात् क्षत्रियस्य च पर्वसु।
प्रकृतेषु च वैश्यस्य न शूद्रस्य कदाचन॥

"पर्वसु पूर्णिमादिषु प्रकृतेषु प्रक्रमविशेषेषु उत्सवेषु गोमङ्गलादिषु"—इति वीरमित्रोदयमदनपारिजातौ। "प्रकृतेषु उत्सवेषु" इत्यपरार्कः। एवं च पूर्वोक्तब्रह्मपुराणवचने गवां मङ्गलमित्यनेन उत्सवमात्रमुपलक्ष्यते इति सर्वसंमतम्।

पराशरोऽपि—

क्षत्रियश्चापि वैश्यश्च क्रियावन्तौ शुचिव्रतौ।
तद्गृहे तु द्विजैर्भोज्यं हव्यकव्येषु नित्यशः॥
(प्रा. का. ११ अ. १२)

"क्रियावन्तौ = विहिताध्ययनयजनादियुक्तौ। शुचिव्रतौ व्रतं स्मार्त्तोधर्मः। तच्च यथाविध्यनुष्ठितं शुचि भवति। तद्युक्तौ शुचिव्रतौ। श्रौतस्मार्त्तधर्मनिष्ठयोः क्षत्रियवैश्ययोर्गृहेषु हव्ये कव्ये वा शिष्टैर्विप्रैर्भोक्तव्यम्। क्रियावन्तौ शुचिव्रताविति विशेषणात् अतद्विधक्षत्रियादिविषयाणि तदन्ननिषेधशास्त्राणी-

त्यवगन्तव्यम् । तथाच चतुर्विंशतितमे तदन्ननिषेध-मभिप्रेत्य प्रायश्चित्तमभिहितम्—

सहस्रं तु जपेद्देव्याः क्षत्रियस्यान्नभोजने ।
तथोपवासं वैश्यस्य सहस्रं सार्द्धमेव च ॥

इति माधवाचार्य्यः—

अग्रे " हव्यकव्येषु नित्यशः " इत्युक्त्या दैवे पित्र्ये च कर्म्मणि क्षत्रियवैश्ययोर्गृहेषु ब्राह्मणैः सदैव भोक्तव्यमिति सुस्पष्टं प्रतीयते ।

नाद्द्याच्छूद्रस्य पकान्नं विद्वानश्राद्धिनो द्विजः ।
आददीताममेवास्मादवृत्तावेकरात्रिकम् ॥

इति मनुवचनेन शूद्रपकान्नादनस्यैव निषेधात् ।
क्षत्रियादिपकान्नभोजनस्य निषिद्धत्वाभावात् ॥

त्रिषु वर्णेषु कर्त्तव्यं पाकभोजनमेव च इति संस्कारमयूखधृतपूर्वोक्तवाराहवचनेन त्रैवर्णिकप-क्कान्नस्य भोजने विहितत्वाच्च ।

अमृतं ब्राह्मणस्यान्नं क्षत्रियान्नं पयः स्मृतम्
वैश्यस्यत्वन्नमेवान्नमित्यादावपि क्षत्रियान्नादि शब्देन क्षत्रियवैश्य-पकान्नमेव ग्राह्यम्; नत्वामान्नं प्रमाणाभावात् ।

वेदव्यासेन महाभारतीयारण्यकपर्वणि द्रौपदी-पक्कानामन्नानां ब्राह्मणैर्भोजनस्य वर्णितत्वेन शास्त्र-विरोधापत्तेश्च । नच कलियुगे क्षत्रियादीनां पकान्नं विप्राणां निषिद्धमतो न शास्त्राऽविरोध इति भ्रमितव्यं तादृशनिषेधबोधकशास्त्राभावात् । ननु आपद्येव क्षत्रियवैश्यपकान्नाभ्यनुज्ञानं विप्राणां न्याय्यं नत्वनापदीति चेत् तादृशमुनिवचनाभावात् प्रत्युत पूर्वोक्तपराशरवचने "नित्यशः" इत्युपादानात क्षत्रियवैश्यगृहेषु आपदनापत्साधारणं हव्यकव्य-भोजनं विप्राणामभ्यनुज्ञातं भवति ।

नच पूर्वोक्ते गौतमवचने " प्रशस्तानां स्वक-र्मस्वि- " त्युपादानात् पराशरवचने च "क्रियावन्तौ शुचिव्रता " विति क्षत्रियवैश्ययोर्विशेषणात् इदानीं तादृशक्षत्रियवैश्ययोरभावेन तदन्नभोजनं नाधुना युक्तम् । युगान्तरे च यथोक्तलक्षणक्षत्रियवैश्ययोः सत्त्वेन तत्रैव तदन्नस्य ग्राह्यत्वं, तथा च पूर्वोक्तानां सर्वेषामेव क्षत्रियवैश्यसम्बन्धिनां वचनानां फलतो युगान्तरविषयत्वमापततीति वाच्यं । तथा सतीदानीन्तनानां ब्राह्मणानामपि शास्त्रविहिताग्निहोत्रादिसमस्तब्राह्मणकर्म्मणां यथा-विध्यनुष्ठानाभावेन तदन्नस्याप्यभोज्यतापत्तेः । गौतमवचने " प्रशस्तानां स्वकर्म्मसु द्विजातीना " मित्युक्त्या ब्राह्मणेष्वपि " विहितकर्म्मानुष्ठातृत्वेन निषिद्धाननुष्ठातृत्वेन च स्तुतिविषयाणा " मेवा-न्नभोजनस्य तेनानुज्ञातत्वात् । तस्माद् युगप्र-भावेण क्षीणेऽपि धर्म्मे यथासम्भवं सदाचार रतानां ब्राह्मणानामन्नं यथा गृह्यते तथा क्षत्रिय-वैश्यानामपि युगानुसारेण यथासम्भवं शुद्धाचारा-णामन्नं भोक्तव्यम् । यथोक्तं पराशरेण

युगे युगे तु ये धर्म्मास्तेषु तेषु च ये द्विजाः ।
तेषां निन्दा न कर्त्तव्या युगरूपा हि ते द्विजाः ॥

वीरमित्रोदयादिनिबन्धेषु शूद्रपकान्नविषये विशेष उक्तः । तथा च वीरमित्रोदये—

" योऽपिच शूद्रपकान्नभोजननिषेधः सोऽपि कतिपयपकान्नव्यतिरिक्तविषयः । तदाह अङ्गिराः—

गोरसं चैव सक्तूश्च तैलं पिण्याकमेव च ।
अपूपान् भक्षयेच्छूद्राद् यच्चान्यत्पयसा कृतम् ॥

सुप्रभातस्यान्यतमः संरक्षकः—



श्री जयशंकर प्रसादः



श्री सत्यनारायण शास्त्री, भिषक्शिरोमणिः ।

गोरसो दुग्धम्। सक्तवो भृष्टयवचूर्णम्। पिण्याकं तिलखलिः। अपूपा अस्नेहपक्वगोधूमादिविकाराः। अत्र यच्चान्यदिति श्रवणादपूपाः पयसा कृता एव ग्राह्याः। अन्यथाऽन्यदित्यस्य वैयर्थ्यापत्तिः। पयसा दुग्धेन कृतं किलाटचूर्णिकादीति। हारीतोऽपि:—

कन्दुपक्वं स्नेहपक्वं पायसं दधि सक्तवः।
एतानि शूद्रान्नभुजो भोज्यानि मनुरब्रवीत्॥

कन्दुः स्वेदनी। कन्दुर्वा स्वेदनी स्त्रियामित्यमरः। सा च अपूपादिसाधनं लोहादिपात्रं तत्र पक्वम् अपूपादि कन्दुपक्वम्। अत एव कान्दविकस्यापूपिकपर्यायत्वमुक्तममरकोषे-अपूपिकः कान्दविक इति। अत एवाङ्गिरसाऽपि अपूपानां भोज्यत्वमुक्तम्। यथा "अपूपान् भक्षयेच्छूद्राद् यच्चान्यत् पयसा कृतम्" इति। यत्तु कन्दुपक्वं भर्जनपक्वं पृथुकादीति व्याख्यानं तन्मूलादर्शनादुपेक्ष्यम्, स्नेहो घृतादिः तत्पक्वं मोदकादिकम्। पायसं पयः सिद्ध ओदनः। अत्र च शूद्रान्नभुज इति वचनादेतानि शूद्रान्नादननिवृत्तेनैव भोज्यानि। केचित्तु एतान्यशूद्रान्न भुज इति पाठः। तत्र शूद्रस्य पक्वान्नपक्वं यो नाश्नाति तेनापि भोज्यमित्यर्थः।"

ब्राह्मणस्य सदाश्नीयात् क्षत्रियस्य च पर्वसु।
यज्ञेष्वेव वैश्यस्य न शूद्रस्य कदाचन॥

उत्सवेषु चेत्युक्तम्।

कानिचित् पक्वान्नानि अन्येषां भोज्यानि सुमन्तुराहः—

... चैव सक्तूंश्च तैलं पिण्याकमेव च।
... भक्षयेच्छूद्राद् यच्चान्यत् पयसा कृतम्॥

तथा—कन्दुपक्वं स्नेहपक्वं पायसं दधि सक्तवः।
एतान्यशूद्रान्नभुजो भोज्यानि मनुरब्रवीत्॥
शूद्रान्नभुजो द्विजस्य" इत्यादिकमभिहितम्।

अनेन अपरार्कग्रन्थेन "ब्राह्मणस्य सदाश्नीया" दितिवचनं तन्मते पक्वान्नविषयमिति शूद्राणामपि गोरसादिकपक्वं भोज्यमिति च सुस्पष्टं प्रतिभाति। प्रायश्चित्तमयूखे कन्दुपक्वमित्यादिहारीतवचनमुद्धृत्य "कन्दुर्भ्राष्ट्रम्, क्लीबेऽम्बरीषं भ्राष्ट्रो ना कन्दुर्वा स्वेदनी स्त्रियामिति" कोषादिति व्याख्यातम्।

तत्रैव—आपस्तम्बः—

आममन्नं मधु घृतं धानाः क्षीरं तथैव च।
गुडमांसरसा ग्राह्या निवृत्तेनापि शूद्रतः॥

सुमन्तुः—गोरसञ्चैव सक्तूंश्चेत्यादि

पराशरः—घृतं तैलं तथा क्षीरं गुडं तैलेन पाचितम्।
गत्वा नदीतटे विप्रो भुञ्जीयाच्छूद्रभोजितम्॥
आरनालं तथा क्षीरं काञ्जिकं दधि सक्तवः।
स्नेहपक्वं तथा चान्नं शूद्रस्यापि न दुष्यतीति॥

शङ्खः—घृतदधिपयस्तक्राणामाकरभाण्डस्थितानामदोष इति।

शातातपः—घृतं तैलं दधि क्षीरं तथैवेक्षुरसो गुडः।
शूद्रभाण्डस्थितं तक्रं तथा मधु न दुष्यति॥

रघुनन्दनभट्टाचार्य्येण शूद्राह्निकाचारतत्त्वे—

कन्दुपक्वानि तैलेन पायसं दधि सक्तवः।
द्विजैरेतानि भोज्यानि शूद्रगेहकृतान्यपि॥ इति

कूर्म्मपुराणीयवचनमुद्धृत्य व्याख्यातम्

कन्दुपक्वं जलोपसेकं विना, केवलपात्रेण यद्वह्निना पक्वं पायसपाकेन काठिन्यविकारापन्नं दुग्धं परमान्नपरत्वे पुल्लिङ्गनिर्देशापत्तेः। तथाचामरः 'परमान्नं तु पायसम्, इति।"

पराशर :—

घृतं तैलं तथा क्षीरं भक्ष्यं स्नेहेन पाचितम् ।
गत्वा नदीतटे विप्रो भुञ्जीयाच्छूद्रभोजनम् ॥
( प. स्मृ. प्रा. का. ११ अ. १६ )

" स्नेहपाचितं पूरिकाशष्कुल्यादि । भुज्यत इति भोजनं भोज्यद्रव्यम्, शूद्रस्य सम्बन्धि भोजनं शूद्रभोजनम् ।

स्नेहपाचितमित्यनेनारनालादय उपलक्ष्यन्ते । तथा च चतुर्विंशतिमते—

आरनालं तथा क्षीरं कान्दुकं दधि सक्तवः ।
स्नेहपक्वं च तक्रं च शूद्रस्यापि न दुष्यति ॥ इति

अङ्गिराश्च शूद्रप्रतिग्रहं प्रकृत्याह—

मांसं दधि घृतं धान्यं क्षीरमाज्यमथौषधम् ।
गुडो रसस्तथोदश्चिद्भोज्यान्येतानि नित्यशः ॥
अभृतं चारनालं च कान्दुकाः सक्तवस्तिलाः ।
फलानि पिण्याकमथो ग्राह्यमौषधमेव च ॥
इति माधवाचार्यः ॥

घृतान्नभोजने हेयोपादेयौ शूद्रौ विविनक्ति पराशरः-

मद्यमांसरतं नित्यं नीचकर्मप्रवर्त्तकम् ।
तं शूद्रं वर्जयेद् विप्रः श्वपाकमिव दूरतः ॥
द्विजशुश्रूषणरतान् मद्यमांसविवर्जितान् ।
स्वकर्मणि रतान् नित्यं न तान् शूद्रान् त्यजेद्द्विजः ॥
इति ( प. स्मृ. प्रा का. ११. अ. १४—१५)

[ क्रमशः ]



## वेदेऽप्सरोगन्धर्वाः ।

लेखकः—पं० कृष्णदत्तभारद्वाजः, शास्त्री, बी. ए.

'अपश्यन्नुर्वशीमिन्द्रो गन्धर्वान् समनोदयत्' इत्यादिषु पुराणवचस्सु गन्धर्वाणामप्सरसाञ्च यद् वर्णनमुपलभ्यते तस्य मूलं प्रत्नतमे ग्रन्थ-चूडामणौ वेदेऽप्यवलोक्यते । शुक्लयजुर्वेदीय-द्वितीयाध्यायस्य तृतीये मन्त्रे गन्धर्वशब्दोल्लेखोऽत्रोदाहर्त्तव्यः । गन्धर्वशब्दो वेदे प्राय एकवचन एव प्राप्यते । पारसीकाना "अवस्था" नाम्नि पुस्तकेऽपि गन्धर्वशब्द एकवचनान्त एव 'गन्दरव' रूपे दृश्यत इति विदुषां मतम् । उपर्युक्तोभयग्रन्थ-मतानुसारम् सोमस्य परिरक्षिता गन्धर्वोऽन्तरिक्षेऽप्सु च वसतीति बोद्धव्यम् ।

को गन्धर्व इति पृच्छाया उत्तरं बृहदारण्यको-पनिषदस्तुरीयाध्यायस्य तृतीयब्राह्मणस्य त्रयस्त्रिंशत्तमे मन्त्रे वर्त्तते, तद्यथा "ये शतं मनुष्याणामानन्दाः स एकः पितृणां जितलोकानामानन्दोऽथ ये शतं पितृणां जितलोकानामानन्दाः स एको गन्धर्वलोक आनन्दोऽथ ...... " । अनेन वचसा ज्ञायते यद्यथाऽस्माकं नृणामयं लोकस्तथैव गन्धर्वाणामपि कश्चिदस्मन्निवासव्यतिरिक्तो लोकविशेषोऽस्ति । भुवि यस्सुखिवत्तमस्तत्सुखापेक्षया गन्धर्वस्य सुखं वरीय इत्यपि विशदमेव । किम्बहुना, मनुष्यत उन्नततरो देवादितश्चावनततरो विशिष्टलोकवासी जीवो गन्धर्वपदेनोच्यते ।

सिद्धे गन्धर्वलोके तत्र कोऽधिपतिरितिजिज्ञा-
सायाः समाधानमैतरेयब्राह्मणे समुपलभ्यते ' सोमो
वै राजा गन्धर्वेष्वासीत् ' इति ।

महाभारतस्यादिपर्वणि पाण्डवाग्निपर्णसंवादे
गन्धर्वाणाञ्चाक्षुष्या विद्यायाः सम्बन्धे यदुक्तन्तत्त-
त्रैवानुसन्धेयम् । विस्तरभयान्न तदत्रोल्लिख्यते ।

इमे गन्धर्वाः स्वर्गलोकनिवासिनो देवान् सेव-
न्तस्ते उपदेवशब्देनाप्यभिधीयन्ते यथाः—"येष्व-
न्तरिवृढाः सहसुरललनाललामयूथपतय उप-
देवैरुपगीयमानमहिमानः किल विहरन्ति" ।
गन्धर्वाणां वाद्यवैशारद्य-विषये मया सुप्रभातस्य
प्रथमवर्षीये एकादशेऽङ्के किमपि प्रतिपादितमेव ।
गान-प्रिया अपीमे इति " जगुर्गन्धर्वपतयो ",
गन्धर्वा ललितञ्जगुः " " ननृतुश्चाप्सरोगणाः "
इत्यादिभिः शास्त्रीयवचोभिरनुमीयते ।

अप्सरसामपि वर्णनं गन्धर्वैः सहोपलभ्यते,
अप्सरः शब्देन तु तासां नीरचारित्वं ध्वन्यते । ते
विहारानुरागिण्यः प्रतिभान्ति । " सतां वीक्ष्य
... सरस्वत्याश्च तत्सखीः—पञ्च प्रहृष्टवदनाः
... पुरूरवा " इति पद्येनापि उर्वश्या अप्सरसः
... सरिदवगाहनं व्यज्यते ।

गन्धर्वाणां स्त्री-कामिता वेदे प्रोक्ता । " स्त्री
... वै गन्धर्वा " इत्यैतरेयब्राह्मणवचनमत्र प्रमा-
... पित्रोरनुशासनं विनैवेमे परस्परानुरागेण
... कुर्वते । तानेवाऽनुकुर्वाणा मनुष्या अपि
... " गान्धर्वः समयान्मिथः " इति स्मार्त्त-
प्रतिपादितङ्गान्धर्वविवाहमिच्छन्ति ।
... गन्धर्वाः स्त्रीकामिनस्तथाऽप्सरसोऽपि
... इति श्रुत्यावाम्नातम् । न केवलं

गन्धर्वलोकीयानपि तु भूवासानपि पुंसस्ताः स्व-
प्रेमभाजनानि विदधत इत्यपि ऋग्वेदीयदशम
मण्डलान्तर्गत-पञ्चनवतितमसूक्ताध्ययनाज् ज्ञायते।
उर्वशी नाम्नी काचिदप्सरा भूवलयाधिपं पुरू-
रवसमैलमुपाढौकत । " घृतमेवात्स्यामि, न त्वा
विवाससं वीक्षिष्ये, न्यासभूता उरणकावेतौ भवता
रक्षणीया " विति प्रतिश्रुत्य सा स्वैरं राज्ञा साकं
विजह्रे । वैदिकमन्त्रश्चायमत्र प्रमाणम् ।

" ॐ यद् विरूपा चरं मर्त्येष्ववसं
रात्रीः शरदश्चतस्रः
घृतस्य स्तोकं सकृदह्न आश्नां
तादेवेदं तातृपाणा चरामि "

अथ मघवप्रेरितैर्गन्धर्वैरुरणयोरपहृतयो रुर्वशी
स्वदयितं विहाय गता । ततो विरहाभिभू-
तात्मा भूपालः कथञ्चित्तां कुरुक्षेत्रेऽन्विष्योवाच
' अयि जीवितवल्लभे ! त्वदृते न मेऽयं कायः स्था-
स्यति ' इति । एतन्निशम्योर्वशी तं सान्त्वयन्त्युवाच ।

" ॐ मा पुरूरवो मा मृथा मा प्रपप्तो
मा त्वा वृकासो अशिवास उक्षन् नवै स्त्रैणानि
सख्यानि सन्ति सालावृकाणां हृदयान्येता ।

अयमेव मन्त्रः श्रीमद्भागवते महापुराणे इत्थङ्कारं
व्याख्यातः—

" मा मृथा पुरुषोऽसि त्वं मास्म त्वा द्युर्वृका इमे
क्वाऽपि सख्यं न वै स्त्रीणां वृकाणां हृदयं यथा"।

यदिदं कथानकं वेदे स्तोकैर्मन्त्रैः कथितन्तदेव
शुक्लयजुर्वेदीये शतपथब्राह्मणे चारुतरायां शैल्याञ्चिरि
चोपपादितम् । ततश्च पुराणेषु मुहुर्भव्यभाषाया-
म्भणितमेतच्चरितं कविवर कालिदासेन ' विक्रमो-
र्वशीये ' मनोरमतामापादितम् । पुराणशास्त्रे
विस्तरश उक्तानाङ्गन्धर्वाप्सरश्चरित्राणाम्मूलं वेद
एवेत्यलम्पल्लवितेनेति शम् ।

# वेदाः, वर्तमानं विज्ञानञ्च।

ले०—श्रीमान् महामहोपाध्याय पण्डित श्रीगिरिधरशर्म्मा चतुर्वेदः।



संसारे कस्या अपि जातेः समुन्नतिः विद्याधीना वर्तते। विद्याया यस्यां कस्यां वा भाषायां शिक्षणं भवेत्, परं यदि सा सत्या तदा जात्युत्कर्षाय, समाज-समुन्नतये वा ध्रुवं समर्था भविष्यति। का नाम सा विद्या? इत्यस्मिन् विचारे प्रत्येकस्य वस्तुनो याथार्थ्येन तत्त्वज्ञानं विद्या। 'वस्तु तत्त्व-विज्ञानम्' 'विद्या' चेति द्वावपि पर्याय वाचिनावेव। विज्ञानमेवाँग्लभाषायां ( Science ) साइन्स शब्देन प्रोच्यते। साम्प्रतं पाश्चात्येषु विज्ञानस्य महती समुन्नतिः सञ्जाता, पाश्चात्येभ्यश्च भारतीया अपि शिक्षणं गृहीत्वा विज्ञानालोचने प्रवृत्ताः सन्ति। भारतीयानामयमपि विश्वासो यद्‌ विज्ञानस्य विस्मयकारिणी समुन्नतिः पाश्चात्येष्वेव सञ्जाता, परन्तु ते मुग्धधियो न जानन्ति, यदस्माकं देशेऽपि वर्तते विज्ञानम्; तदपि तावन्महत्तरं यावत् पर्यन्तं गमने इदानीमपि पाश्चात्यानां महान् समयो लगिष्यति। पाश्चात्यजगतो विज्ञानमिदानीं यावदस्थिरं विद्यते, यद्यपि तेन जगति महान् विस्मयः समुपादितस्तथापि तस्य मूलं निर्बलमेव विद्यते, अतएव तस्य अपूर्णत्वं पदे पदे दृष्टिगोचरं भवति, तत एव च तस्य कथात्मकाः सिद्धान्ताः प्रत्यहं परिवर्तिता भवन्ति। एतद्विपरीततया भारतीयं वस्तुविज्ञानं सुनिश्चितं सुदृढं वर्तते। अस्मिन् सर्वेऽपि सिद्धान्ताः स्थायित्वमापन्ना विद्यन्ते। तस्याधारो निश्चलः सुदृढतरश्च विद्यते, तेषां परिवर्तनस्यावश्यकतैव नास्ति। किन्तु खेदस्य महानवसरोऽयं यत् केचन भारतीय-विज्ञानस्य परीक्षामेव न कुर्वन्ति। यदि साम्प्रतिका वैज्ञानिका भारतीयं वैदिकं विज्ञानं परीक्षा-निकषे सम्यक् परीक्ष्यासङ्गतमनुपयुक्तञ्च कुर्युश्चेन्नास्त्यस्माकं भवेत् किमपि दुःखम्, परमस्माकं मध्येत्वियं धारणा प्रविष्टा वर्तते यद्‌ अस्माकं पूर्वजा साधु समीचीनं तात्त्विकं मार्गं न जानन्तिस्म, ते भ्रम-पूर्णा आसन् इति। अस्माकं विज्ञाननिधयो वेदाः सन्ति। ते च साम्प्रतं 'पूजा-पुस्तक' रूपेण गण्यन्ते। तेषु किं विद्यते इति कश्चन ज्ञातुं न प्रयतते। आधुनिक-सभ्य-संसारस्य दृष्टौ ते उपेक्षणीय-कोटौ प्रविष्टाः सन्ति। दौर्भाग्यादद्य दरिद्रे पराधीने चाऽस्मिन् भारते अस्माकं पार्श्वे परीक्षा-सामग्री नास्ति। तानि यन्त्राणि न सन्ति येभ्यो वयं स्वीयं विज्ञानं प्रयोगरूपेण ( Practical ) प्रदर्शयितुं प्रभवामः, परं यावद्बुद्धिव्यापारो भवितुमर्हति तावदहं साभिमानं ब्रवीमि यदस्माकं विज्ञानापेक्षया वर्तमानविज्ञानमधःपतितं वरीवर्तीति। उदाहरणार्थं यत्किमपि वैदिकं सिद्धान्तं श्रीमतां पुरस्तादुपस्था-

प्रतिपद्यामि। आधुनिकविज्ञानाचार्याणां भारतीय-विदुषामग्रेऽस्माकं निवेदनमस्ति यद्, एकवारमपि ते गूढविज्ञानस्य परीक्षां कुर्वन्तु, अप्रामाणिकमसङ्गतं वा भविष्यति चेत्त्यजन्तु, यदि किञ्चिदपि महत्त्वमस्मिन् प्रतीयेत तदाऽस्य पुरस्तात् स्वीयशिरांस्यवनमयन्तु भारतस्य च सभ्यविज्ञानजगति यथोचितस्थानलाभाय प्रयतन्त्विति।

प्रथमं तत्त्वविचारे दृष्टिर्निधीयताम्। आधुनिकं विज्ञानं ( Hydrogen ) हाइड्रोजन ( Oxygen ) आक्सिजन पदार्थश्च मौलिकं तत्त्वं मन्यते, अनयोरेव मूलाधारेणाधुनिकविज्ञानस्य सुविशालं प्रासादं स्थितं विद्यते। किन्तु वैदिकविज्ञानानुसारं हाइड्रोजनप्रभृतयः कदापि मौलिकतत्त्वभूता न भवितुमर्हन्ति, प्रत्युत; इमे यौगिकाः सन्ति। इमे बहूनां पदार्थानां संयोगेन निर्मिताः सन्ति। वैदिकविज्ञानानुसारमिमे "विराट्" शब्दवाच्याः सन्ति। इन्द्रियैः, तन्त्रेभ्यो वा यद् वस्तु ज्ञानविषयं भवति तद् "विराट्" शब्देनोच्यते। "विराट्" इति तस्य रसो नाम यस्मिन् जगतः प्रत्येकः पदार्थः छन्दितः = परिच्छिन्नः विद्यते तद् विराट् नामकं छन्दः। प्रत्येकस्य छन्दसः स्वरूपं यद् अभिव्यक्तं भवति, तद् 'अक्षरम्' इति कथ्यते। दश अक्षराणि यस्मिन् भवन्ति स 'विराट्' इत्युच्यते। ये पदार्थाः विराट्शब्देनोच्यन्ते तेषु दश अवयवा अवश्यं सन्ति। जगतः प्रत्येकस्मिन् पदार्थे दशप्राणानां सम्बन्धो वर्तते। भृगुः, अङ्गिरा, अत्रिः—इत्यादीनां प्राणानां घनमेवैकैकः पदार्थः। तत एव जगतः प्रत्येकः पदार्थः "विराट्" एव। विराजः समुत्पादकं विद्यते। "यज्ञम्" तत् कथ्यते येनैकं तत्त्वमपरस्मिन् तत्त्वे सम्मिलति। भिन्न-भिन्नानां तत्त्वानां परस्परसंमिश्रणतो नवरूपधारणेन समुत्पन्ना काचनालौकिकी शक्तिर्यज्ञ-शब्देन बोध्यते। यज्ञं विना दश प्राणानां घनीभाव एव न सम्भवति। अतो विराजः कारणं यज्ञम्। अत एव सर्वेषामेतेषां पदार्थानामन्तरात्मरूपं यज्ञमेव वर्तते। अतएव सर्वेऽपि पदार्था यौगिका एव सन्ति। यज्ञे हि नाम व्यापाररूपम्। अथवा व्यापारविशेषस्य हेतुभूतं बलमस्ति। बलाधिष्ठानस्यावश्यकत्वात् पुरुष एव मौलिकमधिकरणम्। आधुनिक-वैज्ञानिकानां नये अखण्डः, एक एव कश्चन पदार्थो मौलिकतत्त्वरूपो भवितुमर्हति। परमस्माकं नये मौलिकतत्त्वभूतः पुरुषो न निरवयवः, नाप्यखण्डश्च। एष पुरुषः, पञ्चदशकलामयं त्रिधातुमयञ्च द्रव्यं विद्यते। पुरुषस्य त्रयो भेदाः—क्षरः, अक्षरः, अव्ययश्च। इमे त्रयोऽपि प्रत्येकं पञ्चपञ्चकलायुक्ताः सन्ति। एवं पञ्चपञ्चकलायुक्तानां त्रयाणां धातूनामैक्यमेव वर्तते, ते परस्परं वियुक्ता न भवन्ति; किन्तु पूर्वपूर्वापेक्षया परस्य सूक्ष्मत्वं विद्यते। क्षराद् अक्षरं सूक्ष्मम्, अक्षराच्च अव्ययः सूक्ष्मः। एतावत् पर्यन्तं विज्ञानस्य विषयः। अव्ययादपि अग्रे विद्यते तत्त्वमेकम्। यदसीमं परात् परमिति कथ्यते। अव्ययः, परशब्देनोक्तः ततोऽपि परः "परात्परः"। तस्मिन्नपि रसस्य-बलस्य चोभयोर्योगः। ततोऽप्यग्रे दुर्विज्ञेयमनिर्वाच्यं रसरूपं केवलं तत्त्वमेकं यन्निर्विशेषमित्युच्यते। तस्यैवोपलक्षणरूपेण परिचयं दत्त्वा अस्माकं वैदिकं विज्ञानं समाप्तं भवति। तत्रैव गत्वा :—

"यज्ज्ञात्वा नेह भूयोऽन्यज्ज्ञातव्यमवशिष्यते।"

तन्निर्विशेषमव्यक्तमगम्यं विद्यते, तत्र विज्ञानस्य

गतिर्नास्ति। विज्ञानं हि पुरुषपर्यन्तमेव गन्तुं शक्नोति। विज्ञानं हि पुरुषत्रयं तथा "परात्परं" परिचाययितुं शक्नोति, यदेकतत्त्वम्, सर्वेषां मूलभूतम्, यत्र भेदावकाशो नास्ति। भवन्त इमं परात्परतत्त्वं 'ईथर' शब्दवाच्यं मा जानन्तु। ईथरस्तु अस्माकं विज्ञाने नितरामधस्तनं वस्तु विद्यते। ईथरस्याविष्करणेन पाश्चात्या गर्वमुद्वहन्ति।

किन्तु, अस्माकं विज्ञानमीश्वरादत्युच्चैर्गतं विद्यते। ईथरस्त्वस्माकमिन्द्रः। ईथरशब्दोऽपि इन्द्रशब्दादेव निष्पन्नः प्रतीयते। यथा सुन्दरशब्दात् 'सुथरा' शब्दो निष्पन्नस्तथैव इन्द्रात् 'ईथर' शब्दस्य निष्पत्तिः सुस्पष्टं प्रतायते। इन्द्रस्तु देवविशेषः। देवताः, असुराः, ऋषयः, पितरः, गन्धर्वाः, सर्वेऽपि प्राणतत्वस्यावान्तरभेदरूपाः सन्ति। एतेषां सर्वेषां समावेशः क्षरपुरुषे, अक्षरपुरुषे च सम्भवति। अव्ययः, परात्परश्च द्वावप्यस्याः श्रेण्याः सुदूरवर्तिनौ स्तः। इन्द्रः, अक्षरपुरुषस्यैका कला, वेदे चतुर्दशविधा इन्द्राः सन्ति, तेष्वेको वैज्ञानिकानां 'ईथर' शब्दवाच्यः। स च क्षर-रूपः। यस्या विद्युत उपरि साम्प्रतिकानां वैज्ञानिकानां सर्वस्वं निहितं विद्यते, साऽपि इन्द्रस्यैकं रूपम्। साम्प्रतं यावद् इमे न जानन्ति यद् यस्या विद्युत आधारेणास्माकं कार्यं प्रचलति, सा किं स्वरूपा ? किं तस्य तत्वमित्यपि ते न जानन्ति; परमस्माकं तु तात्विकमस्य रूपं निर्णीतं विद्यते। भवतु।

परात्परस्य तत्वस्य परिभाषाऽस्माकं शास्त्रे 'अणोरणीयान् महतो महीयान्' वर्तते। अर्थात्—अस्माभिः परमाणोरपि यदि विभागाः क्रियन्ते तदा तेष्वपि स एवानुस्यूतो विद्यते। यदि परममहत आकाशादिपदार्थस्य कल्पना क्रियेत चेत् तत्रापि तस्य स्थितिरिति परात्परत्वं तत्र विद्यते। अतएव स भूमा इत्युच्यते। भूम्नि अणिम्नि च महदन्तरं विद्यते। अनयोरत्यन्तविरुद्धयोर्धर्मयोरेकत्र तस्मिन् परात्परे विचित्ररूपेण समावेशो विद्यते। सः खलु उभयदशायामपि सम एव वरीवर्ति। तज्ज्ञानमेव विज्ञानस्य पराकाष्ठेति।



# कः कालो वेदस्य

लेखकः—श्रीमान् श्रीगौरीनाथ पाठकः, साहित्याचार्यः, विद्यासागरः

न ह्यविदितं विदितवेदितव्यानां वैदिकतत्त्वान्वेषणविचक्षणानां विदुषां यदिह हि किल निखिलधर्म्माचाराचरणभास्वरे भारते खण्डे "एतस्य महतो भूतस्य निश्वसितमेवैतद् यद् ऋग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरसः" इत्यादिभ्यः श्रुतिभ्यो नैकशो निगमागमादिषु भगवन्निश्वासात्मकत्वेनोद्घुष्टः, वेद्यन्ते ज्ञायन्ते धर्म्मार्थकाममोक्षा अनेनेति व्युत्पत्त्या केवलं वेद एव चतुर्व्वर्गज्ञानसाधनभूततया सर्वानतिशय्य वर्तते इति।

तथा च:—

धर्म्मार्थकाममोक्षार्थपुरुषार्थचतुष्टयम्।
वेदस्यैवाधीनमिह विमतिर्नास्ति कस्यचित्॥

मन्त्रब्राह्मणयोर्वेदसंज्ञेति वेदस्य द्वौ भागौ स्तः। तत्र मन्त्रभागः छन्दोबद्धपदसमुदायात्मकः, संहितेत्यपरपर्य्यायः। ब्राह्मणभागश्च तदन्यः। ऋग्यजुःसामाथर्वभेदेन चत्वार एव वेदाः। तत्र यजुर्वेदः पुनः शुक्लकृष्णरूपेण द्विविधः। प्रतिवेदश्च संहिता-ब्राह्मणञ्चेति भागद्वयं वर्तते। वेदाङ्गानि शिक्षाकल्पव्याकरणनिरुक्तच्छन्दोज्योतींषीति षट्।

तत्र शिक्षानाम वर्णानां स्वरूपोच्चारणादिज्ञानविधायको ग्रन्थविशेषः। नारदकात्यायनादि बहुविधाः शिक्षाः श्रूयन्ते। कल्पाश्च वेदविहितकर्म्मणामनुष्ठाननियमादिविधायका ग्रन्थविशेषाः, व्याकरणं वैदिकपदसाधनग्रन्थः, प्रातिशाख्यापरपर्य्यायः, निरुक्तं वैदिकशब्दानामर्थनिर्वाचकग्रन्थविशेषः, छन्दः गायत्र्यादिच्छन्दःस्वरूपनिर्देशकग्रन्थविशेषः, ज्योतिषं यज्ञियकालादिनिर्णायको निबन्धविशेषः। वेदेषु संहिताभागस्य प्राधान्याच्छन्दोबद्धवचनमयत्वाच्च तस्य छन्द इत्यभिधानम्। ब्राह्मणग्रन्थाश्च तत्तत्संहितार्थादिसूचकाः, प्रतिसंहितं खलु ब्राह्मणान्यनेकसंख्यकानि विभिन्नविषयाणि च। तथाहि तेषु कुत्रचिन्मन्त्राणां व्याख्यानं, कुत्रचित्तत्तत्कर्म्मनियोगविधिः, कुत्रचिदावश्यकेतिहासवर्णनञ्च। एवं बहुविधेषु ब्राह्मणेषु ऋग्वेदस्य ऐतरेयकौशीतकीति प्रसिद्धे द्वे ब्राह्मणे स्तः, यजुर्वेदस्यापि तैत्तिरीयशतपथेतिनामधेये द्वे ब्राह्मणे, तत्र तैत्तिरीयब्राह्मणं कृष्णयजुःसम्बन्धि, शतपथब्राह्मणं शुक्लयजुःसंश्लिष्टम्

अत्रहि यजुर्वेदोक्तानां यज्ञकर्म्मणां सविस्तरमालोचनमस्ति। ग्रन्थोऽयं शताध्यायसम्पन्नत्वात् शतपथेति नाम्नाभिहितः। सामवेदस्य पुनरष्टौ ब्राह्मणानि सन्ति आर्षेयसामविधानछान्दोग्यषड्

विंशतारण्डवमन्त्रदैवतादीनि। अथर्वणस्त्वेकमेव गोपथनामधेयं ब्राह्मणम्। सन्ति च तत्तत्संहिता संश्लिष्टाः केचिदारण्यग्रन्था अरण्येऽध्येतव्यतया तेषामारण्येति नाम। तेषु चैतरेयतैत्तिरीयबृहदारण्यकानां प्राधान्यम्। ऐतरेयारण्यकं ऋग्वेदानुगतं, तैत्तिरीयं कृष्णयजुःसम्बन्धि, बृहदारण्यकञ्च शतपथब्राह्मणस्यान्तिमकाण्डम्। ब्राह्मणारण्यकवत् प्रतिवेदं भिन्नस्वरूपा भिन्नसंख्यकाश्चोपनिषदितिप्रसिद्धा ग्रन्थविशेषाः सन्ति।

उप+निपूर्वकस्य सद्धातोः संसारनिवर्तकाध्यात्मविद्यार्थकत्वादुपनिषच्छब्देनाध्यात्मविद्याप्रतिपादकग्रन्थविशेष उच्यते।

वस्तुतो वेदानां सामान्यतः काण्डद्वयमस्ति, कर्म्मकाण्डं ज्ञानकाण्डञ्चेति। तत्र कर्म्मकाण्डं संहिताभागविषयं, ज्ञानकाण्डतूपनिषद्भागविषयम्। सर्वासामुपनिषदां नामतः संख्यातश्च निर्देशो दुर्घट एव। मुक्तिकोपनिषदि प्रथमं सामान्यतस्तासां सङ्ख्यां निर्दिश्यान्ततो नामान्यपि कासाञ्चित्प्रधानानां कथितानि।

यथाः —

ऋग्वेदस्य तु शाखाः स्युरेक विंशतिसंख्यकाः।
नवाधिकं शतं शाखा यजुषो मरुदात्मज॥
सहस्रसंख्यया जाताः शाखाः साम्नः परन्तप।
अथर्व्वणस्य शाखाः स्युः पञ्चाशद्भेदतो हरे॥
एकैकस्यास्तु शाखाया एकैकोपनिषन्मता।

एतद्वचनप्रमाणेन ऋग्वेदस्यैकविंशतिरुपनिषदः, यजुर्वेदस्य नवाधिकशतं, सामवेदस्य सहस्रम्, अथर्ववेदस्य पुनः पञ्चाशद् इति ज्ञायते।

आचार्य्यभट्टयज्ञेश्वरास्त्वेवमिह स्वीयमाशयमाविर्भावयामासुः यद् "यो ह्यव्यभिचरितस्वरवर्णादिपठनपाठनक्रमागतः सन् सर्वकालं सर्वदेशेषु प्रतिशाखमविभागेन वर्तमानः स एको मन्त्रराशिः, अपरस्तु विधिनिन्दाप्रशंसासुप्रश्नाख्यानादिभिस्तस्यैव प्रायो विनियोगप्रख्यापक उपव्याख्यानभूतो वाक्यनिचयो ब्राह्मणराशिः। अनयोरेकः सङ्ग्रहो वेद इत्यभिधीयते। वेदनिबन्धेषु मन्त्रब्राह्मणभागौ परस्परमसम्मिश्रावेव प्रायः पठ्येते, क्वचित्तु ब्राह्मणे सम्मिश्रितोऽपि मन्त्रभागः पठितोऽस्ति। एवमुभयात्मकोऽपि विध्यर्थवादमन्त्ररूपेण त्रिधा व्यवस्थितोऽयं वेदराशिरेकमूल एककर्मलक्षणफलो महाकल्पवृक्षो वरीवर्ति।

अस्य च फलभूतं कर्म्म विधिना विहितम्, अर्थवादेन प्ररोचितं, मन्त्रेण च स्मृतं सदभ्युदयकारि भवति। अवान्तराकृतिभेदेऽपि कर्म्मजातिव्यञ्जकप्रधानाकृतिभेदाभावात्प्रतिशाखं यज्ञकर्म्मणां भिन्नत्वादपि एककर्म्मफल एवायं वेदकल्पवृक्षः।

नह्येकस्यां शाखायां विहितस्याग्निहोत्रादिकर्म्मणः स्थाने विजातीयस्य ग्रहयज्ञादेरपरस्यां शाखायां विधानमस्ति, तस्मान्न प्रतिशाखं कर्म्मभेद इति मन्तव्यम्। यदि प्रतिशाखं बदरामलकादिवज्जात्यैव कर्म्मभेदः स्यात् तदा एकमूलाभावादादित एवारभ्य भिद्यमानत्वाद्वृक्षान्तरवद्वेदान्तराण्येवोच्येरन् न शाखान्तराणि, तस्मादेकमूलः समानफलोऽयं वेदकल्पशाखीत्याहुः।

"सर्वार्थवेदको वेदश्चतुर्द्धा भिद्यते क्रमात्।
ऋग्वेदोऽथ यजुर्वेदः सामवेदोऽह्यथर्वणः॥" इति



श्री तारादत्त पन्तः, साहित्य-व्याकरणाचार्यः ।



श्रीदामोदरशास्त्री भिषगाचार्यः, दर्शनतीर्थः



श्री नरदेवशास्त्री, वेदतीर्थः ।

यद्यपि बहुषु श्रुतिस्मृत्यादिवाक्येषु वेदत्रयी सङ्कीर्त्यते न तु चतुर्थोऽथर्वणवेदस्तथापि ब्रह्मवेदशब्देन चतुर्थस्याथर्वणवेदस्यापि मुण्डकोपनिषदि श्रवणात् स्मृतिपुराणादिष्वपि बहुशः सङ्कीर्तनाच्च चतुर्थत्वमुक्तम्। तथा चरणव्यूहेऽपि "अथातश्चरणव्यूहं व्याख्यास्यामस्तत्र निरुक्तं चातुर्विध्यं चत्वारो वेदा विज्ञाता भवन्ति" इति स्थितम्। एवं व्याकरणमहाभाष्ये पतञ्जलिनाऽप्युक्तम् :—

"महान् शब्दस्य प्रयोगविषयः, सप्तद्वीपा वसुमती त्रयो लोकाश्चत्वारो वेदाः साङ्गाः सरहस्या बहुधा भिन्ना एकशतमध्वर्युशाखाः, सहस्रवर्त्मा सामवेद एकविंशतिधा बह्वृच्यं नवधा ऽथर्वणो वेदः।" इति।

एवं वेदस्य चातुर्विध्यं तृतीयाष्टके अष्टमाध्याये दशमवर्गे श्रूयमाणया ऋचाप्यभिधीयते—

"चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य। त्रिधा बद्धो वृषभो रोरवीति महोदेवो मर्त्यां आविवेश।" इति।

अत्र निरुक्ते चत्वारि शृङ्गेति वेदा वा एते उक्ता इति यास्केनोक्तम्। वेदभाष्ये सायनाचार्येणापि तथा भाषितम्।

एवंस्वरूपः परमकारुणिकैर्निगमागमपारावारपारीणैः कर्म्मोपासनाज्ञानकाण्डत्रयधुरीणैरनेकैर्महर्षिभिः परिपोषमासादितो नक्तन्दिनमधीतिबोधाचरणप्रचारणैः परिरक्षितश्च कर्म्मकाण्ड-ब्रह्मकाण्डात्मको वेदः कदा प्रादुरासेति केषामनुदिनं शास्त्रानुशीलनानां श्रद्धाजुषां सुधियां स्वान्तं नितान्तं कौतूहलं नावलम्बते।

इदमित्थमविकलमेतदितिवृत्तमधिगन्तुं श्रुतिपरिशीलनपरिकरैरनल्पैः वैदिकतत्वकोविदैर्बहुशः प्रयतमानैरपि दैशिकैर्वैदेशिकैश्च नाद्यावधि कश्चन सिद्धान्त आसाद्यत।

यद्यपि एतादृशि अतिगहने विषयेऽस्माकमल्पमतीनां लेखनीविन्यासोऽनुचित एव; तथापि गुरुचरणकृपाकटाक्षवशेन यत्किञ्चिल्लब्धानुसन्धानेन मया समधिगतं वस्तूपस्थाप्यते समालोचनचतुराणां विद्वन्मूर्धन्यानां सहृदयानाम्पुरतः।

यद्यपि जरन्मीमांसकादीनां केषाञ्चन प्राचां मते वेदानामुत्पत्तिरेव नास्तीति तस्य कालनिर्णयः सुतरामसङ्गत एव। तथापि वेदान्तभाष्यकाराणां श्रीमच्छङ्कराचार्य्यचरणानां नैयायिकानाञ्च मते वेदानामुत्पत्तिवत्तत एव; सा हि सृष्टेः प्राक् प्रबभूव।

भगवान् भूतभावनो हिरण्यगर्भः किङ्कार्यं किमकार्यमिति वेदद्वारैवोपदिश्य सव संसारं ससर्ज्जेति तेषां मते समीचीनं वाग्वैदुष्यम्। यद्यप्येतदस्माभिः शिरसा धार्यं परं नैतत् सर्वेषां हृदयङ्गममिति काञ्चन लौकिकीं कलामाकलयामः।

बहुवारं वेदानां सम्प्रदायोऽलुप्यतेति वेदप्रकाशस्य नैकः काल इयत्तयाऽवधारयितुं शक्यते।

एकदा हि पुरा नामैकशेषङ्गते वेदानामध्ययनाध्यापनादिकार्ये, अस्तङ्गमिते च वेदसम्प्रदाये अत्रिवंशोद्भवो "दत्त" नामा कश्चन मुनिः प्रादुर्भूय वेदानां ऋष्यादीन् स्मृत्वा लुप्तानपि तान् पुनराविश्चकार। तथा च :—

यथा "सम्प्रदायविगमादुपेयुषी-
रेप नाशमविनाशि विग्रहः।
स्मर्तुमप्रतिहतस्मृतिः श्रुती-
र्दत्त इत्यभवदत्रिगोत्रजः॥"

शिशुपालवधम्

एतेन दत्तात्रेयसमयेऽपि वेदानां लिपिबद्धा ग्रन्था आसन्निति सम्भाव्यते; अन्यथा श्रुतीः स्मर्त्तुमभवदित्युक्तिर्न सङ्गच्छते। श्रुतिशब्दोऽपि श्रूयते आचार्य्यादिति व्युत्पत्त्या श्रवणेन ज्ञातत्वबोधको भवति। भागवतेऽपि दत्तात्रेयोपाख्याने स्मृतिशेषङ्गतानां वेदानां पुनः सम्प्रदायप्रवर्तकत्वात् दत्तात्रेयो विष्णोरवतार इत्युक्तम्। तस्मात् दत्तात्रेयो यदा जन्म लेभे, यदा वा वेदान् सस्मार तदा एव वेदाः प्रादुरभूवन्नित्येकः प्रकारो वेदाविर्भावस्य।

ततः पुनरपि लुप्ते वेदसम्प्रदाये भगवान् कृष्णद्वैपायनो नानास्थानेभ्यः श्रुतीः सङ्गृह्य शाखासहस्रैर्विभेजे। अतएव स "वेद-व्यास" इति ख्यातिमाजगामेति वेदव्यासस्य यः समयः स एव वेदाविर्भावस्येति द्वितीयः प्रकारः।

अस्मिन्नेव समये वेदा लिपिबद्धा बभूवुः। वेदानां ग्रन्थाश्च लिपिबद्धा अजायन्तेत्यपि सम्भावयामः।

एवं पुनरपि यवन-जलदजालतिरोहिते कीर्तिशेषङ्गते सवितरि वेदे प्रचलितेषु स्वार्थमूलकेषु वेदविरुद्धेषु परःशतेषु सम्प्रदायेषु "बाजीराव पेशवा" इति सुगृहीतनामधेयेन महाराष्ट्रीयेण राज्ञा वैदिकब्राह्मणान् सुचिरमासन्तोषमाश्रयं दत्वा शिष्योपशिष्येभ्यो मिथः शब्दोच्चारणपूर्वकमुपदेशादिभिर्वेदसम्प्रदायोऽरक्ष्यत। स एव सम्प्रदायस्तदा तथा सातिशयं विस्तीर्ण आसीद् यथाऽद्यापि देशे देशे ग्रामे ग्रामे यत्र तत्र वेदस्यास्तित्वं ज्ञातुं शक्यते। अतस्तस्य राज्ञः समयो वेदस्याविर्भावस्य समय इत्यपि कथयितुङ्कथमपि शक्यते।

एतेन वेदसम्प्रदायप्रवृत्तिकाला एव निर्णीता भवन्ति; नहि वेदानामाविर्भावसमय इत्युच्यते :—

अत्र च केषाञ्चन एतादृश आशयो यद् यदि च ब्रह्मैव वेदान् प्रणिनाय उपदिदेश वा, तथापि वेदद्रष्टॄन् ऋषीन् एव स्वयं वेदप्रणेतॄन् मन्यामहे, ऋषयो हि विश्वामित्रादयः परोक्षेण दिव्येन (ज्ञानमयेन) चक्षुषा ब्रह्मणः सकाशाद् वेदान् ददृशुः, ततस्ते तान् वेदान् मनुष्येषु प्रकाशयामासुरिति तेभ्य ऋषिभ्यो वयं ऋणिनः। तदृणञ्च वेदोपदेशग्रहणमेव। स्वाध्यायेन तस्माद् ऋणाद् वयं मुक्तिं लभामहे। इति तानेव ऋषीन् वेदकर्तॄन् वयं ब्रूमः। एवञ्च वेदानां कर्तारो बहव एव ऋषयो न तु कश्चिदेकः, यस्य मन्त्रस्य यो ऋषिः, तस्य मन्त्रस्य तमेव कर्तारं प्रणेतारं वा जानीमः। यथा गायत्र्या विश्वामित्रर्षिरिति गायत्रीमन्त्रस्य विश्वामित्रमेव प्रणेतारं कर्त्तारं वा कथयाम इति।

तथाचैषां सर्वेषां प्रमाणानामालोचनया सृष्टेः प्रारम्भ एव वेदानाम् आविर्भाव समय इत्यनुमीयते।

यदा हि ईश्वरः प्राणिनां ज्ञानोपदेशाय वेदान् प्राकाशयत् तदा तस्य सृष्टेः प्राक्काल एवोपस्थितिः परमावश्यकी। चेत् सृष्टेरनन्तरं वेदस्योपस्थितिः रङ्गीक्रियेत तदा सृष्टेरारम्भे समुत्पन्नानां मनुष्याणां ज्ञानोपदेशः कथङ्कारं जायेतेति वेदानामाविर्भावसमयः सृष्टेरारम्भ एवेति मतं निराकर्तुं समर्थं प्रमाणं नोपलभामहे।

य एव सृष्टिकालः स एव वेदाविर्भावकाल इति वैदिकङ्कालमवगन्तुं सुगम एष उपायः स्यादतः साम्प्रतं सृष्टिकाल एव मीमांस्यते । स चेत्थमुपवर्ण्यते—सृष्टेरादितः षण्मनवो व्यतीताः । वर्तमानः सप्तमो वैवस्वतमनुः, तस्य प्रवृत्तेः सप्तविंशतिमितानि महायुगानि व्यतीतानि, अष्टाविंशतितमे त्रयो युगचरणा गताः, चतुर्थे चरणे कलौ, कलेरादितः त्रिंशत्युत्तरपञ्चसहस्रमितानि वर्षाणि व्यतीतानि तथा कल्पादितः १९७२९४९०३० इति, एवं सृष्ट्यादितश्च १९५५८८५०३० एतावत्यः समाः समतीता इति यथामति विविच्य सर्वमनुमीयते यदेष एव कालो वेदानामिति। उक्तञ्च भगवता कृष्णद्वैपायनेन :—

"अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा ।
आदौ वेदमयी विद्या यतः सर्वाः प्रवृत्तयः ॥"

---

# वैदिकाग्निविमर्शः ।

लेखकः—पण्डित मूलशङ्कर केशवजी शास्त्री, मोडासावास्तव्यः ।

---

वेदयति यथार्थं ज्ञा सनातनसत्यनिवन्धनमिति वेदः । आधिभूताधिदैवाध्यात्मविषयकं सर्वमपि विज्ञानं वेदेषु बीजरूपेण दृश्यते । वेदा हि विज्ञानरसरत्नाकराः । ते वै केषु भावेषु न नानारूपेण विलसन्तो परमात्मनः शक्तिं प्रदर्शयन्ति, विभिन्ना अपि भावा तयैकयैव शक्त्या संहिता इति निदर्शयन्ति, 'सर्वं खल्विदं ब्रह्म' इति क्रमशोऽद्वैततां प्रतिपादयन्ति।

'वेदोऽस्य निःश्वसितव्यम्' इति परमात्मनो निःश्वासरूपत्वाद् 'वेदो नारायणः साक्षात् स्वयम्भूरिति शुश्रुमः,' शब्दप्रमाणेषु वेदानामेव प्रामाण्यम् । तच्च सर्वैः स्वीकृतम् । तत्र बहवो मन्त्रा वह्निविशेषणपरा दृश्यन्ते । तेभ्य उद्धृत्य कांश्चित् प्रकृते वह्निविषयको विमर्शः क्रियते ।

यथा पिपासितोऽपि कश्चिन्न सर्वं जलधिजलं पातुं समर्थः, अपितु स जलाञ्जलिनाऽऽत्मनस्तृषां शमयति । एवमेवात्रापि वोध्यम् । का नाम शक्तिरेकस्य प्राकृतस्य जनस्य विज्ञानवारिधितलस्पर्शने, मध्येऽवगाहनस्य वार्ताऽपि यत्र दूरापास्ता !

प्रकृते तु यथा कश्चिदर्भकः समुद्रतटस्थो मुक्ताशुक्तिभिः सङ्क्रीड्य निजानन्दं प्राप्नुयादिति नः स्थितिः । तथाप्येवंविधा बालक्रीडा स्पृहणीया न तूपेक्ष्या । अथ प्रकृतमनुसरामः ।

वेदा अग्निं परब्रह्मरूपेणोपस्तुवन्ति। यथा—
'ऊर्ध्वो मा पाह्य ँ् हसः'

हे वैश्वानर, त्वमूर्ध्वोऽसि। ततो मां पापात् पाहि पापं ह्यत्राधोगतिरूपम्। आत्मावसादनं हि महत् पापम्। तस्माद् को रक्षेत्? य ऊर्ध्वः। परमात्मैवोर्ध्वः। यतः स गुणत्रयातीतः 'तमसः परस्तात्'। तादृग्गुणोपेत ऊर्ध्वगतिरस्मिंल्लोकेऽग्निरेव दृश्यते। यतः 'अधः कृतस्यापि तनूनपातो नाधः शिखा याति कदाचिदेव' इति सुष्ठूक्तम्।

सो ह्यग्निर्दाह-पाक-प्रकाशादिभिर्गुणैः सर्वेषां जीवनहेतुः। तथा च सर्वानपि स पुनाति। 'यः पोता स पुनातुमाम्' इति श्रुतिरपि। यो हि स्वयंशुद्धोऽलिप्तश्च सोऽन्यान् पवित्रयति। अग्निः स्वयं शुद्धो न च कस्यचिद् गुणैर्दोषैर्वा संसृज्यते। यद्यपि जलमन्यान् पावयति तथापि तद् मालिन्यादिभिर्दोषैर्दुष्यति। अन्यस्य दोषैश्चापि गुणैश्चापि तस्य सङ्गः। एवं वायोरपि। आकाशोऽप्यभ्रैराच्छाद्यते तमसाऽऽव्रियते। सर्वदा सर्वत्र प्रकाशमानः शुद्धोऽलिप्तः प्रेरक उपयुक्तस्तु वह्निरेक एव। अत एव स परब्रह्मत्वेनोपास्यते।

'अगि' धातोरग्निशब्दो व्युत्पाद्यते। सहि गतिज्ञानार्थकः। अग्निनैव सर्वं गतिमत् प्रकाशश्च। एवमग्निरत्र सच्चिदानन्दत्वेनोपस्तूयते।

किंवर्णः स, इति श्रुतिर्विशिनष्टि :—

'कृष्णोऽसि'। कृष्णरूपो वह्निः। लौकिकेऽपि तथा। सत्सु सप्तस्वपि वर्णेषु नील एव तेजसः शुद्धो वर्णः। स हि तेजसः सत्त्वः। पीतो ज्ञानात्मको वर्णः। जीवनतत्त्वप्रदीपको हरिद्वर्णः। रक्तो रागात्मकः। नीलस्तु शुद्धः प्रेमरूपश्च। अत एव भगवान् श्रीकृष्णः प्रेमस्वरूपी। रसेश्वरश्च भगवान् शिवोऽपि तथा।

'कृषि' विलेखने इत्यस्माद् धातोः कृष्णशब्दो व्युत्पन्नः। वह्नेश्च पावकत्वं तु सार्वजनीनम्। अपरमपि स कृष्णत्वात् स्वं प्रति सर्वमपि कर्षति। स विश्लिष्टमपि सन्दधाति। वह्निनैव सर्वं सन्धीयत इति श्लोकविश्रुतम्। हृदयानुसन्धानमपि प्रेम्णैव भवति। अन्यच्च सोऽग्निः परमात्मा ब्रह्माण्ड-केन्द्रीभूतो वर्तुलमध्यबिन्दुवत् सर्वं व्याप्य सर्वमाकृष्य च स्थितः इदं सर्वं तस्मादुत्पन्नं तमनुभ्रमति, तस्मादेव पोषणं प्राप्य तस्मिन्नेव पुनर्लीयते। 'तज्जलानीति शान्तमना उपासीत' इत्युपनिषत्। स एव चन्द्ररूपेण रसाया रसमाकृष्य पुष्णाति चौषधीः सर्वाः। चन्द्रो ह्यग्निः।

अन्यच्च—'अन्तश्चरति रोचनाऽस्य प्राणादपानतो'। अस्याग्नेर्दीप्तिर् द्यावापृथिव्योर्मध्ये शरीरे च वायुरूपेण चरति। सैव प्राणापानयोः प्रेरिका। सति हि जठराग्नौ जीवनहेतोरौष्ण्यस्य शरीरे सत्त्वात् प्राणापानौ प्रवर्त्तेते। तस्मादग्निः प्राणापानरूपः। एवम्—'अग्ने अङ्गिरः' योऽङ्गानां रसः सोऽग्निरेव। तेनैव सर्वाण्यङ्गान्याप्यायितानि भवन्ति, तेजोवन्ति च। तदभावाच्छुष्काणि जायन्ते, यथेदानीन्तनानाम्। स रसोऽग्निव्रतेनैव विवर्धते। अग्निव्रतं हि ब्रह्मचर्यम्। उक्तञ्च—'अग्ने व्रतपते व्रतं चरिष्यामि'। तेनैव व्रतेन

अग्निव्रतं हि 'अनृतात् सत्यमुपनेतृ'। तेनैव व्रतेन ब्रह्मचारी तेजस्वी वर्चस्वी मेधावानन्नादश्च भवति। मन्तस्तेनैव व्रतेन कवि-कोविद-विशारदाः सञ्जाताः।

ब्रह्मचर्येणैव ब्रह्मचारी प्रेमपूर्णो रसिकश्च भवति। रसिको हि वीर्यवान्। हन्त! इदानीन्तु स्वच्छन्दचारिणः, प्रेमवन्तो रसिकाश्च भण्यन्ते।

महाभारते प्रोक्तम्—'आचार्यो ब्रह्मचर्येण ब्रह्मचारिणमिच्छति'। अग्निरेवाचार्यः। अग्निव्रतहीना आचार्याः कथं ब्रह्मचारिणः कामयेयुः? कामोऽत्र शुद्धः। विना ब्रह्मचर्यं कथं सोऽग्निरात्मनि समिद्धः स्यात्। अस्माभिर्यतो न स समिध्यते ततो वयं निस्तेजस्का भस्मीभूतजीवनतत्त्वाः सर्वेभ्यो निकारं प्राप्नुमः। विद्यावन्तोऽपि निश्चेतना इव जीवामः। विद्याऽपि नोर्जस्वती। वयं ह्रस्वदेहाः। कारणमत्र ब्रह्मचर्याभावः।

तनूपा अग्नेऽसि...वर्चोदा...अग्नेऽसि आयुर्दा अग्नेऽसि। क्व प्रचण्डशरीरा नः पूर्वजाः, क्व च वयं हीनदेहास्तेजोहीनाश्च? क्व ते दीर्घजीविनः, क्व च वयमकालमृत्युमुखपातिनः? क्व ते महाधियः, क्व च वयं कुण्ठमतयः?

उपनयनसंस्कार—कर्मणि वम्भण्यते—'ऋषय आयुष्मन्तस्ते व्रतेनायुष्मन्तः'। किन्तु तद् वाचिकम्, क्रियायां तु किमपि नास्ति। वर्चो ब्रह्मचर्येणैव प्राप्यते। वर्चो नाम तेजो—'व्रतानुष्ठानप्रयुक्तं; यद् दृष्ट्वा, महानयं विद्वांस्तपसाग्निरिव ज्वलतीति बुद्धिः भवति नृणाम्। इदानीन्तना वयं बहुधा नियम-व्रत-जपोहीना न कुत्रापि सत्कारं लभामहे। अस्मान् विलोक्य भवति किं पूज्यबुद्धिरितरेषां नः प्रति?

'पुरुषो वाव यज्ञः। तस्य ह चतुर्विंशतिः वर्षाणि तत् प्रातःसवनम्।' तस्मिन् काले सन्धुक्षयात्मन्यग्निं गायत्र्युपासना कर्तव्या। यतः स पञ्चविंशे पूर्णतां व्रजेत्सर्वतत्त्वविकासेन। वेदोऽप्यत्र—

'अयं पुरो भुवस्तस्य प्राणो भौवायनो'
वसन्तः प्राणायनो 'गायत्री वासन्ती।'

अग्निः सर्वेषामादिभूतः। तस्मात् प्राणो जज्ञे। प्राणो हि भौवायनः। यतो वैश्वानरात्मजः। प्राणो हि शक्तिः। तस्माद् वसन्तः। वसन्ते हि विश्वं प्राणवद् नवतरं विभाति विकासेन। पुरुषस्य प्रातः सवनं हि वसन्तः, चतुर्विंशतिवर्षाणि यावत्। स विकासकालः सफलो भवति। वसन्तो हि प्राणात्मजः। तस्माद् गायत्री जाता। प्राणवद्भिरेव गायत्र्युपासते। ब्रह्मचर्येण हि प्राण आप्यायति। अव्रतिभिरुपासिता गायत्री भवति निष्फला। 'गायत्री वा इदं सर्वम्'। प्राणवद्भिः सर्वमवाप्यते। तेषां न किञ्चिद् दुष्प्रापम्।

परन्तु, साम्प्रतं वयं गायत्र्याराधनविमुखा मृतकल्पा जीवामः। कष्टेनाजीविकामपि सम्पादयामः। कदा नो वसन्तो विकसिष्यति? परन्तु हा...! केन प्रकारेण विलसेत्? यत्र पण्डितवर्या अपि बालविवाहं शास्त्रप्रमाणैः समर्थयितुं कटिबद्धा भवन्ति! गायत्र्युपासनकाले गृहधर्मानाचरितुमुपदिशन्ति! न च तत्र जिह्रियति!! किन्तु 'नायमात्मा बलहीनेन लभ्यः।' निष्प्राणाः स्वराज्यं प्राप्तुं नालम्। लब्धमपि तैर्न संरक्ष्यते। ततः प्रथममेव सर्वैः प्राणवद्भिर्भाव्यम्। स एव नः परो धर्म इदानीम्।

अपरश्च—'आकूत्यै प्रयुजेऽग्नये स्वाहा, मेधायै मनसेऽग्नये स्वाहा, दीक्षायै तपसेऽग्नये स्वाहा, सरस्वत्यै पूष्णेऽग्नये स्वाहा।'

अत्र स्पष्टमुक्तम् । अग्निरेव मनः सङ्कल्पसिद्धेः प्रेरकः । 'द्वादशवर्षं वेदब्रह्मचर्यम्' । ततः शरीरमध्ये नूतनैका मेधा-नाडी जागृता भवति । विद्याधारण-शक्तिर्हि मनसः स्वास्थ्ये सत्येव भवति । अग्निरेव मेधालक्षणो मनोलक्षणश्च । स एव व्रतनियमलक्षणं तपः । तपसैव नियमसंरक्षणं भवति । अग्निरेव वागिन्द्रियस्य पोषकः 'मुखादग्निरजायत' । अतः स बृहस्पतिर्ब्रह्मणस्पतिर्गणपतिश्च कथ्यते ।

इदानीन्तु न नो मनः सङ्कल्पसिद्धिर्न सर्जकता न धारणाशक्तिर्न तादृशं वाचि वीर्यं न च वक्तृत्व-शक्तिरसाधारणी ; यतो वयं यथार्थतोऽग्नेरुपासनं न कुर्मः ।

अग्निरेवात्मा । उक्तञ्च—'मर्त्येष्वग्निरमृतो निधायि' । स हि स्वर्गीयोऽग्निः कठवल्ल्यां यमेन प्रोक्तः । येन देवा अजरा अमराः क्षुत्पिपासापीडारहिता निर्भयाः स्वानन्दाश्च ।

'विद्मा ते अग्ने त्रेधा त्रयाणि विद्मा ते धाम विभृता पुरुत्रा । विद्मा ते नाम परमं गुहा यद् विद्मा तमुत्सं यत आजगन्थ ।' यो हि भगवानग्निः सूर्यवाय्वग्निरूपेण त्रिलोक्यां व्याप्यावस्थितः । स हि नानारूपैर्विश्वं व्यश्नुत । तस्य नाम पवित्रं परमम् । आत्मरूपेण स सर्वेषां हृदयगुहास्थितः । 'यद् गत्वा न निवर्तन्ते तद् धाम परमं' तस्य । स हि जड-जीवा-नन्द-स्वरूपः ।

'त्वमग्ने द्युभिस्त्वमाशुशुक्षणिस्त्वमद्भ्यस्त्वमश्मनस्परि । त्वं वनेभ्यस्त्वमोषधीभ्यस्त्वं नृणां नृपते जायसे शुचिः ।'

स सर्वव्यापकोऽपि दिव्येषु विशेषतो लभ्यते स्वर्गादिषु, अन्तःकरणादिषु च एवं दीपनशीलेषु पदार्थेष्वपि । ते च-राल-अस्थिसार (फॉस्फरस)-लाक्षा-कर्पूर-गन्धक-तेजोरस (तेजाब)-इत्यादयो बहवः ।

स हि वह्निर् वडवारूपेण विद्युद्रूपेणाप्स्वपि, एवं पारदादि सर्वरसेषु, तैलेषु च संस्थितः । अतो हि विद्युद्दाहकम् ।

अश्मभ्योऽपि सङ्घर्षेणाग्निः प्रजायते । पुरातनीयं वह्निप्रज्वालनपद्धतिः ।

तथा च वनस्पतिभ्योऽपि स प्रजायते, अरणि-शमीपिप्पल-देवदार्वादिभ्यः । वंशाद्यौषधिभ्योऽपि । अतएव वनस्पतय औषधयश्च जनान् नीरोगयन्ति स्वास्थ्यं च प्रापयन्ति । वह्निनैव वृक्षा लताश्चोषयन्ति, सौन्दर्यवन्ति सुगन्धीनि च कुसुमानि प्रसुवते, फलन्ति च षड्रसयुक्तानि नानाफलानि ।

आसन् पुरा भारते वृक्षलतौषधिसमृद्धानि बहून्यरण्यानि सघनानि । तत्रैव भारतीया संस्कृतिः प्रादुरासीत् । तदा पर्जन्योऽपि निकामे निकामे ववर्ष । प्रजाश्चापि चिरञ्जीविन्योऽभवन् । बहुधा रोगोत्पत्तिरपि नाभवत् । न चाकालमृत्युरपि । हन्त, ते हि नो दिवसा गताः । साम्प्रतं तु वनस्थानेषु मरुधन्वस्थलानि दृष्टिपथमायान्ति । स हि पाश्चात्यसंस्कृतेः प्रभावः । वनस्पतिक्षयाद् रोगोत्पत्तिरनावृष्टिर्बलबुद्धिहानिरायुषःक्षयोऽकालमृत्युश्च भवति । वनस्पतयो हि प्राणाः । शार्मण्यदेशीया (जर्मनलोक) अधुना प्रबुद्धाः । ते हि निजदेशे प्रतिस्थानं वृक्षान् रोपयन्ति संवर्धयन्ति च ।

सह्यग्निः सर्वेषामात्मरूपेण ज्ञानरूपेण च हृदि स्थितः सर्वशोधको ज्ञानाग्निः सर्वकर्माणि भस्मसात्

कुरुतेऽर्जुन'। स हि 'विश्वानि वयुनानि विद्वान्'—सर्वकर्मणां साक्षी, यतोऽन्तर्यामी।

कीदृशो हि सः ? कथ्यते आशुशुक्षणिः—स्वतेजसाऽह्वाय तमसो निहन्ता। तमो हि,—अन्धकारः रोगाः, दुष्टं वातावरणमज्ञानञ्च।

धातवश्चाग्न्यात्मकाः। उक्तञ्च—'या तेऽग्ने अयःशयातनूः—रजःशया तनूः—हरिशया तनूः।' लोह-रजत-सुवर्णादिधातवोऽग्निरूपाः। 'ततोऽसुरा एषु लोकेषु पुरश्चक्रिरे अयस्मयीमेवास्मिँल्लोके, रजतामन्तरिक्षे हारिणीं दिवि।' हारिणी नाम हिरण्मयी। एते हि धातवः क्रमशः 'तमोरजः सत्त्वरूपाः प्रोक्ताः। सर्वेऽप्युपकारकाः। सत्ययुगो हि स्वर्णयुगः। त्रेता रजतयुगः। द्वापरस्ताम्रयुगः। कलिश्च लोहयुगः।

किं बहुना ? तारा नक्षत्राणि ग्रहा भूगोलश्च सर्वेऽग्न्यात्मकाः। प्रत्यक्षं तत्। अयं भूगोलो यत्र वयं स्थितिं कुर्मः, तस्य पृष्ठभाग एव घनीभूतः शान्तश्च। मध्यभागो जलमयः। तस्याधोभागस्तु (द्वाविंशतिं क्रोशार्धानतिक्रम्य) वह्निरूपः। अत्र साक्षिणो ज्वालामुखा नगाः। तेह्यन्ततो धगत्तेजोरसमुद्गिरन्ति। यो रसो भाषायां 'लावा' इति कथ्यते। अतो ह्यग्निर 'गह्वरेष्ठः'।

स ह्यग्निर्गवादिषु दुग्धरूपेण स्थितः। अत्र श्रुतिः—'अस्य प्रत्नामनुद्युत ँ शुक्रं दुदुह्रे अह्रयः। पयः सहस्रा मृषिम्।' अह्रयो-गावः। ता अस्याग्ने श्चिरत्नीमात्मानुषक्तां द्युतिमेव पयो दुदुहे-क्षरन्ति। अग्निना शुक्ररूपेण दीप्तां स्वकान्तिमेव गावो दुग्धरूपेण क्षरन्तीत्यभिप्रायः। विद्युदाधिक्याद् गोदुग्धमेव सर्वश्रेष्ठम्। तत् सहस्रं (अनन्तगुणं) बलं सनोति-ददाति। तथा च बुद्धिमप्यकुण्ठां वितनोति। गावो वह्निनिवासरूपाः। अतएव पञ्चगव्यं यज्ञेषूपज्यते प्राश्यते च पापनिवृत्तये। गावो हि देवानामाधारभूताः। भारतः कृषिप्रधानो देशः। गोधनमेव भारतस्य धनम्। अनेकेष्वगदेषु गोमूत्रस्यापि विभिन्नाः प्रयोगाः प्रयुज्यन्ते। गव्यं पयो जाड्यहरं स्फूर्तिदायकं मेधाविवर्धनं बलप्रदञ्च। गोपुच्छं—नेत्रस्पर्शेण नेत्ररुजां हन्ति तेजश्च विवर्धयति। 'सर्वेषामपि दुग्धानां गोदुग्धं शुक्लं लघु।' गौर्हि विश्वमाता। गावो गोपालप्रियाः। कष्टं बत,! अद्य ता निर्दयैर्निहन्यन्ते। त्राहि त्राहि विभो !!

अपरञ्च :—'अग्निमूर्धा दिवः, ककुत्पतिः पृथिव्या अयम्। अपाँ रेताँसि जिन्वति।' सोऽग्निः सूर्यरूपे स्वर्गलोकस्य मूर्धस्थानीयो विराजते। स पृथिव्या उत्तमः पतिः (पालकः)। स एव वृष्टेः कारणानि पोषयति। वह्निः सूर्यरूपेण स्वकिरणै रसमादत्ते। अथ बाष्परूपेणोर्ध्वं गतं जलं संहत्य रजःकणैर्घनीकृत्य वारिदरूपेण परिणयति। ते च वारिदा वर्षन्ति। सुष्ठूक्तम्—

'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते।
आदित्याज्जायते वृष्टिर् वृष्टेरन्नं ततः प्रजा॥'

एवं गीतास्वपि :—'अन्नाद्भवन्ति भूतानि पर्जन्यादन्नसम्भवः। यज्ञाद्भवति पर्जन्यो यज्ञः कर्मसमुद्भवः॥'

अहह ! विधेर्विचित्रं विलसितम् ! यत् कर्मभूमिभूतेऽप्यस्मिन् भारते देशे साम्प्रतं यज्ञाभावः समजनि। पुरा कर्मठोऽपि सम्प्रति कर्मशून्योऽयं देश

आधि-व्याध्युपाधिभिः पेपीडयते। पारतन्त्र्यश्रृङ्खलानिगडितोऽयं कदा नु विमोक्ष्यते। भारतदेशो भूगोलस्य हृदयस्थानीयः। स यदि दूनः कुतो हि जगति शर्मसम्भवः? भग्ने हृदये सर्वेषामङ्गानां विनाश एव।

अयि भारतीयाः, प्रमादं हित्वा साम्प्रतमुत्तिष्ठत, महामोहनिद्रां त्यक्त्वा जागृत, प्राप्य वरान् निबोधत। जानीत यत्—"कलिः शयानो भवति सञ्जिहानस्तु द्वापरः। उत्तिष्ठंस्त्रेता भवति कृतं सम्पद्यते चरन्।" स्वकीयकर्माचरणद्वारा पुनः कृतयुगं प्रवर्तयत। प्रार्थयत च भगवन्तं वैश्वानरम्—

"ॐ अग्ने नय सुपथा राये अस्मान् विश्वानि देव वयुनानि विद्वान्।
युयोध्यस्मज्जुहुराणमेनो भूयिष्ठान्ते नम उक्तिं विधेम॥"

ॐ शान्तिः शान्तिः शान्तिः॥

# वैदिकविज्ञाने द्रव्य-विज्ञानम्।

लेखकः—श्रीमान् दामोदरशास्त्री कविराजः, भिषगाचार्यः, साङ्ख्यसर्वदर्शनतीर्थः।

अजामेकां लोहितशुक्लकृष्णां
बह्वीः प्रजाः सृजमानां सरूपाः।
अजा ये तां जुषमाणां भजन्ते
जहत्येनां भुक्तभोगां नुमस्तान्॥



इह खलु कार्य्यार्थिनः कारण एव जिज्ञासोदयात्; सुखार्थिनां सुखकारणे सत्त्वद्रव्ये जिज्ञासा स्वाभाविकीति 'अजामेका' मित्यादिना सुखादिभावकारणत्वेन सत्त्वादिद्रव्यत्रयं विहितम्। तथाहि सुख-प्रसाद-लाघवादिगुणवत्तया, संयोगविभागादिमत्तया, अनाश्रितत्वोपादानत्वादिना च सत्त्वादेर्द्रव्यत्वम्। गुणवद्द्रव्यत्वेऽपि पुरुषबन्धकत्वेन पुरुषोपकरणत्वात् सत्त्वादयो गुणशब्देनोच्यन्ते। सुश्रुतेऽपि—

"तन्मयान्येव भूतानि तद्गुणान्येव चादिशेत्।
तैश्च तल्लक्षणैः कृत्स्नो भूतग्रामो व्यजन्यत॥" इति।

तन्मयानीति सत्त्वादिमयानि निर्दिष्टानि। अतएव तत्कार्याणि पृथिव्यादिस्थूलभूतानि स्थूलमात्रस्य कारणानीति प्रतिपादितम्—

इन्द्रियेणेन्द्रियार्थन्तु स्वं स्वं गृह्णाति मानवः।
नियतं तुल्ययोनित्वान्नान्येनान्यमिति स्थितिः॥ इति।





श्री गोपाल शास्त्री, दर्शनकेशरी, साहित्याचार्यः ।



श्री गौरीनाथ पाठकः, साहित्याचार्यः ।

बाह्याभ्यन्तर-जगतो मूलं भूतपञ्चकम्, अतो देहसृष्टेः, रोगाणाम्, भैषज्यस्य, चिकित्सायाश्च मूलमपि तदेव । एतदेव हि भूतपञ्चकं सृष्टिस्थिति-लयमूलं सर्वस्य भावजगतः । सुतरां जीव-तन्तु-संयोगौ पञ्चभूते, आहारः पञ्चात्मकः, पञ्चभूतात्मकं द्रव्यं, पुष्टिः पञ्चभूते, वृद्धिः पञ्चभूतात्मिका, वियोगः, संहारश्च पञ्चभूते, पञ्चत्वप्राप्तिश्च पञ्चभूतानां चिन्तयैव । अतएव प्रोक्तं सुश्रुताचार्यैः—

पञ्चाभिभूतास्त्वथ पञ्चकृत्वः,
पञ्चेन्द्रियं पञ्चसु भावयन्ति ।
पञ्चेन्द्रियं पञ्चसु भावयित्वा,
पञ्चत्वमायान्ति विनाशकाले ॥

पञ्चभूतानां मध्ये वाताग्निसलिलानामति-प्राधान्यात्, त एवायुर्वेदे वात-पित्त-कफ-संज्ञया प्रोच्यन्ते । यथा बाह्याग्निसलिलमरुतां ह्रासवृद्धी भवतस्तथैवात्र देहजगतो वात-पित्तकफानाम् । तथाहि, पुरुषोऽयं लोकसम्मितः, यावन्तो हि मूर्त्तिमन्तो लोके भावविशेषास्तावन्तः पुरुषे, यावन्तः पुरुषे, तावन्तो लोक इत्युपक्रम्य षड्धातवः समुदिता लोक इति शब्दं लभन्त इति प्रतिपाद्य पुरुषस्य पृथिवी मूर्त्तिः, आपः क्लेदः, तेजोऽभिसन्तापः, वायुः प्राणः, वियच्छिद्राणि, ब्रह्मान्तरात्मेति प्रतिपादितम् । तत्र संयोगापेक्षी लोकशब्दः । षड्-धातुसमुदायो हि सामान्यतः सर्वलोकस्तस्य हेतुः, उत्पत्तिः, वृद्धिः, उपप्लवः, वियोगश्च । तत्र हेतुः = उत्पत्तिकारणम् । उत्पत्तिः = जन्म । वृद्धिः = आप्यायनम् । उपप्लवो दुःखागमः । षड्धातु विभागो वियोगः, स जीवापगमः, स प्राणनिरोधः, स भङ्गः, स एव च लोकस्वभावः । सोऽयं संयोगा-परपर्यायस्य लोकस्य यथाकालस्थितिः, विकाशः, नियतानियतह्रासश्च । द्रव्य-विज्ञानापेक्षतया प्रधा-नोपादानवाताग्निजलापरपर्य्यायाणां वातपित्त-कफानां रजःसत्त्व-तमोबहुलानां द्रव्यत्रयाणां विज्ञानं लोकस्थित्यै परमावश्यकमितीह प्रतन्यते ।

[ क्रमशः ]

# निम्बार्कमतम् ।

लेखकः—महामहोपाध्याय डा० श्रीगङ्गानाथझा
एम० ए०, डी० लिट्० महोदयः



प्रस्थानत्रयावलम्बिनां नानावेदान्तप्रवर्तयितॄणामाचार्यवर्याणामेकः श्रीनिम्बार्को नाम । किन्तन्मतमिति स्थूलरूपेणैवात्र प्रदर्श्यते । श्रीनिम्बार्काचार्यरचितत्वेन प्रसिद्धयोर्वेदान्तसिद्धाञ्जन-तत्त्वसिद्धान्त-विन्दुनाम्नोर्ग्रन्थयोरवलोकनेनास्य दर्शने त्रीणि तत्त्वानि प्रतिभान्ति । यथा चोक्तं वेदान्तसिद्धाञ्जने—

सर्वं हि विज्ञानमयो यथाऽर्के
श्रुतिस्मृतिभ्यो निखिलस्य वस्तु ।
ब्रह्मात्मकत्वादिति वेदविन्मतं
त्रिरूपताऽपि श्रुतिसूत्रसाधिता ॥ इति ।

त्रिरूपता चेयं चिदचिदीश्वराख्य-भोक्तृभोग्य-नियन्तृरूपेण । तथा च तत्त्वसिद्धान्तविन्दौ—

भोक्ता भोग्यं नियन्तेति तत्त्वं त्रिविधमेव हि ।
चिदचिदीश्वराख्यं वै चतुर्थन्नैव विद्यते ॥ इति ।

आचार्योऽयं न भेदवादी नाप्यभेदवाद्यपितु भेदाभेदवादी । उक्तं च—

तस्मात् स्वाभाविको भेदोऽभेद एव द्वयोस्तयोः ।
ब्रह्मणा सह मन्तव्यः सूत्रकारमतानुगैः । इति

'तयोः' चिदचिदोरिति यावत् ॥

तथा च

अभेदः केवलो भ्रान्तिस्तथा भेदोऽपि केवलः ।इति।

सत्यप्येवं भक्तिप्रधानमेवेदं दर्शनमिति प्रतिभाति। तथाचोक्तं वेदान्तसिद्धाञ्जने—

नान्या गतिः कृष्णपदारविन्दादिति ।

तथा चोपसंहार श्लोकः—

उपास्यरूपं यदुपासकस्य
कृपाफलं भक्तिरसस्ततः परम् ।
विरोधिनो रूपमथैतदाप्ते
ज्ञेया इमेऽर्था अपि पञ्चसाधुभिः ॥ इति ।

## हृषीकेशे विद्वत्सम्मेलनम् ।

हृषीकेशे कैश्चन धूर्तैर्वञ्चकैश्च सभाव्यापरिभिर्निखिल भारतीय-विद्वत्सम्मेलनस्यैकादशाधिवेशनं कर्तुं प्रयत्नः कृत कृत आसीत् । एतस्य सम्मेलनस्यास्तित्त्वमद्यापि कैश्चन भारतीयैर्विद्वद्भिर्न ज्ञायते । नामापि न श्रुतम् । ईदृशाः बहवो व्यापारिणः परीक्षासम्मेलनादिव्याजेन मुग्धान् विदुषः, जनताश्च चिराद्वञ्चयन्ति । एतेषां विषये सुप्रभातसम्पादकानां विस्तृता विचारा अग्रे प्रकाशिता भविष्यन्ति । तदेभिर्धूर्तप्रवरैः हृषीकेशस्थाः पण्डिताः, धनिकाः, मठमन्दिराधीशाश्च माया-जाले गृहीता आसन् । ते च वराका मुग्धाः स्वागतसमितेर्निर्माणं कृत्वा सम्मेलनव्यवस्थामकुर्वन् । कियद्दिवसेभ्यः पूर्वमेव स्वीयं धौर्त्यं प्रख्यातमवगत्य किञ्चिन्मुद्रादिकं गृहीत्वा सम्मेलन-संयोजकः शनकैः प्रपलायितः, समाचारपत्रेषु चैतेन सम्मेलनस्य तिथिविपर्ययः प्रकाशितः, येन हृषीकेशीया स्वागतसमितिमर्हति दुःखपारावारे निमग्ना अर्द्धमार्ग एव इतो भ्रष्टा ततो भ्रष्टा सती कथमपि तं सम्मेलनं हृषीकेश-विद्वत्सम्मेलन नाम्ना कृत्वा स्वीयं परिश्रमं सम्मलितवती । अत्र सम्मेलने हरद्वार—ऋषिकुलब्रह्मचर्याश्रम-प्रधानाचार्याः श्रीमन्तो घुटरझा शास्त्रिमहोदयाः सभापतिपदमलमकुर्वन् ।

दिनत्रयं यावत् विदुषां भाषणानि सञ्जातानि । तत्र च सुप्रभात-सम्पादकेन, संस्कृतसाहित्य-समाजमन्त्रिणा श्रीमता श्रीकेदारनाथशर्म्मणा सारस्वतेन संस्कृत-समाज क्रमिकमितिहासं प्रदर्शयता साम्प्रतिकानां सभा-परीक्षा-पाठशालादिव्यापारिणां जनवञ्चकानां वञ्चकत्वं सुस्पष्टतया निर्भयं प्रतिपादितं येन जनतायां महान् सन्तोषः समजनि।

श्रीमतां पण्डितवर वालकरामशर्म्माग्निहोत्रिणामपि वेद-मीमांसायामभूतपूर्वं सुदीर्घं भाषणमभवत् ।

सम्मेलनञ्च ज्येष्ठशुक्ल-चतुर्दशीत आषाढकृष्ण प्रतिपद् यावद् जातं । आषाढकृष्णद्वितीयायां तत्रैव सम्मेलन-मण्डपे छात्रसम्मेलनं समभूत्, यत्र समाजमन्त्रिणो महत्त्वपूर्णं सुस्पष्टम्, रुचिरम्, क्रान्तिकारि सुदीर्घं च भाषणमभूत्, येन तत्रत्येषु छात्रेष्वभूतपूर्वं उत्साहः समजनि । वीररसावतारस्य काशीस्थ-श्रीरघुनन्दनप्रसादशास्त्रिणोऽपि उत्तेजनापूर्णं जीवनाधायकं भाषणमभवत् । छात्राणां प्राणभूतस्य हृषीकेशरत्नस्य श्रीगुप्त महोदयस्य भाषणानन्तरं छात्राणां संग्रन्थनमभूत्

सायं मायाकुण्डेऽपि सर्वेषां छात्राणां व्यायामः, सभादिकं सञ्जातम् । एवं सम्पन्नमभूदिदं कार्यम् ।

साम्प्रतं जनवञ्चकानां सभाव्यापारिणां धूर्त्तानां कृते संस्कृत-साहित्य-समाजः प्रवलं प्रयतिष्यत इति मन्त्रिमहोदयादवगत्य वयं परं प्रमोदमाप्नुमः ।

श्रीशिवरामशर्म्मा



## निवापाञ्जलयः ।

क्षते प्रहारा निपतन्त्यभीक्ष्णमिति प्राकृतिक-नियमानुसारमस्माकं विपत्परम्परा प्रतिदिवसं पराकाष्ठामासादयन्ती किंकर्तव्यविमूढतामचीकरदिति विदितप्रायमेव सर्वेषामेव सहृदयानां सुप्रभातपाठकानाम् । वयं नितरां चकित-चकिताः, हतचेतनाः, निर्जीवा इव अकर्मण्यतामाश्रयामः । न जाने कोऽयं दैवदुर्विपाकः ! चिरात्पृष्ठलग्ना मृत्यु-परम्परा नाद्यापि विश्राम्यति । संस्कृतज्ञेष्वेव परिभ्रमति कुटिलं कालचक्रम् । पञ्चषमासेष्वेवा-पूर्वाणि महार्हाणि समुज्ज्वलानि च विद्वद्रत्नानि शनैः शनैः विलुप्यन्ते । वयमिदानीं भ्रान्ता इव सर्वतोऽवनतिं विलोकमाना विमूढचेतसः सम्वृत्ताः स्मः । षष्ठवर्षस्य प्रथमेऽङ्के कीर्तशेषं गतेभ्यः स्वसम्बन्धिभ्यो निवापाञ्जलिं दत्वा सुप्रभातमिदं नवीने वत्सरे पदमादधाति । हन्त !!

प्रथमो निवापाञ्जलिः सहृदय-धुरीणेभ्यः सुहृत्प्रवरेभ्यः पण्डितसमाज-प्राणभूतेभ्यः श्रीगिरी-शशुक्लमहोदयेभ्यः प्रदीयते । येन संस्कृत विदुषामेव न; सर्वेषामेव लोकानां पुरस्तादादर्शरूपेण समुत्तिष्ठता स्वल्प एव वयसि तानि कार्याणि सम्पादितानि, यानि संस्कृतसमाजं परं गौरवमासादयन्ति ।

यश्च तत्र भवान् गिरीशशुक्लः, सभ्यतायाः, शिष्टतायाः, उदारतायाः, कर्मण्यतायाश्च मूर्तिमानिवासीदवतारः ।

द्वितीयो निवापाञ्जलिरस्माकं पितृकल्पेभ्यः समाराध्य-चरणेभ्यः श्रीमद्भ्यो वैदिकशिरोमणिभ्यः श्रीप्रभुदत्तशर्म्माग्निहोत्रिमहोदयेभ्यः, ये खलु भारतेवष सर्वत्रैव लुप्तप्रायाणां यज्ञादिवैदिक-क्रियाणां प्रचारं कृत्वा वास्तविकं धर्मनेतृत्व-मकुर्वन् । येषाञ्च सहृदयतया गुणग्राहकतया च शतशो विद्वाँसो यथायोग्यं जीवननिर्वाहं कुर्वन्ति । निसर्गभिन्नास्पदमेकसंस्थं यस्मिन् द्वयं श्रीश्च सरस्वती च । ये च भारतवर्षस्य महापुरुषेषु प्रथमां प्रतिष्ठां लभन्तः परं पदमासाद्य संतिष्ठन्ते ।

तृतीयो निवापाञ्जलिः विद्वद्रत्नेभ्यः सौजन्या-वतारेभ्यो वैदिक-प्रवरेभ्यः सुहृद्वरेभ्यः श्रीविजय-चन्द्रवेदाचार्यमहोदयेभ्यः, ये खलु शान्तरसस्या-वतारभूताः स्वल्प एव वयसि संस्कृत-समाजं स्वकुटुम्बञ्च महति शोकसागरेऽपातयन् ।

चतुर्थो निवापाञ्जलिः प्रातःस्मरणीयचरणेभ्यो विश्वविख्यातवैदुष्येभ्यो भारतवर्षस्य गौरवलङ्कारभूतेभ्यः श्रीमद्गुरुपादेभ्य आचार्य श्रीरामावतारशर्म्ममहोदयेभ्यः; ये खलु कपिल-कणाद-गौतम-कल्पाः साम्प्रतिका महर्षय आसन् । येषां महात्मनां स्मारं स्मारमद्यापि दासतापाशबद्धानां विद्यावैभवविहीनानामस्माकं हृदयमपूर्वं गौरवमासादयति । ये च सदाचारेण, शान्त्या, पवित्रतया, उदारतया, निस्पृहतया च विश्वस्मिन्नपि भूमण्डले संस्कृतविदुषो वास्तविकमादर्शं समस्थापयन् ।

पञ्चमो निवापाञ्जलिः प्रियवर्येभ्यः साहित्याचार्येभ्यः श्रीमद्भ्यः श्रीविक्रमादित्यशास्त्रिमहोदयेभ्यः प्रदीयते, येषां स्मरणं हृदयं निर्दयं विदारयति । यः खलु त्रिंशद्वर्षात्मके वयसि महान्ति कार्याणि सम्पाद्य अकाण्ड एवास्माकं हृदि शोकताण्डवमरचयत् ।

षष्ठो निवापाञ्जलिः श्रीमद्भ्यः समाराध्यचरणेभ्यः साक्षादिव सनातनधर्मेभ्यः प्राचानपण्डितानामादर्शभूतेभ्यः श्रीमद्भ्यः श्रीचन्द्रधरशास्त्रिमहोदयेभ्यः समर्प्यते । ये खलु हिन्दूविश्वविद्यालयस्य गौरवस्वरूपा आसन् । येषां कैलासवासेन काश्यां व्याकरणशास्त्रस्य प्राचीना रीतिरेव विलुप्तप्राया सञ्जाता । ये च गानविद्यायां वीणावादने च परममार्मिकाः सहृदयशिरोमणय आसन् ।

अन्येच लवपुरीय-सनातनधर्म कालेजाध्यक्षाः, सनातनधर्म-महासभा-सभापतयः श्रीमन्तः श्रीरघुवरदयालुशास्त्रिमहोदयाः, अस्माकं सहयोगिनः हिन्दूविश्वविद्यालयीय-रणवीर-संस्कृत-पाठशालायां ज्योतिःशास्त्राध्यापकाः श्रीरसालदत्तज्यौतिषाचार्यमहोदयाः, हिन्दूविश्वविद्यालयस्य जीवनदातारः सनातनधर्मस्य प्रधानस्तम्भभूताः, संस्कृतभारत्या अनन्यसेवकाः हिन्दूजातेः प्रधाननेतारः दरभङ्गाधीश्वराः श्रीमद्रमेश्वरसिंहमहोदयाश्च भारतं वर्षमिमं शोकाकुलं कुर्वन्तः साम्प्रतमस्मासु न सन्ति, तेभ्यश्च सादरं सबहुमानं निवापाञ्जलीः दत्वा वयं जगदीश्वरात्तेषां चिरशान्तिं प्रार्थयन्तो भृशं दुःखिता विरमामः ।

एतस्मिन्न वत्सरे भारतवर्षस्य हिन्दूसमाजस्य चाभूतपूर्वाणि महान्ति समुज्ज्वलानि च रत्नानि कालवशादन्तर्हितानि सन्ति । अस्माकं जीवने नैतादृशो दारुणो दुर्विपाकः समजनि । भयङ्करमिममुत्पातमालोक्य रोरुद्यमानाः दग्धहृदया वयं विश्वेश्वरात् भारतवर्षस्य, हिन्दूजातेः, सनातनधर्मस्य, सुरभारत्याश्च कल्याणं कामयामः ।

सर्वेऽत्र सुखिनः सन्तु सर्वे सन्तु निरामयाः ।
सर्वे भद्राणि पश्यन्तु मा कश्चिद्दुःखभाग्भवेत् ।

सम्पादकः

---

## वैदिकप्रवराः-स्वर्गीय-श्रीनरोत्तममिश्रमहोदयाः ।

काशीस्थेषु विद्वद्वर्येषु श्रीमन्तः स्वर्गीय-नरोत्तममिश्रमहोदयाः सुप्रसिद्धाःस्तम्भा इव आसन् । इमे सारस्वत वंशावतंशा वेद-कर्मकाण्ड-शास्त्रेषु प्रथित-कीर्त्तयो मर्मविदश्चाभवन् । एतेषां जन्म १९२९ वैक्रमाब्दे श्रावणशुक्लचतुर्थ्यां गुरुवासरे काश्यामेवाभवत् । बाल्यकाल एव मातापित्रोर्वियोगः समजनि । एतेषां पितुर्ज्यायांसो भ्रातरः श्रीमत्पण्डित ठाकुरदत्तमिश्रा एव अभिभावका अभवन् । बाल्य एव प्रखरा

प्रतिभा, गम्भीरता, सहिष्णुता चेति बहवो गुणाः एतेषां समुज्ज्वलं भविष्यन्तं सूचयन्तिस्म ।

एतेषामभिभावकमहोदयाः श्रीमन्तः पण्डित ठाकुरदत्त शास्त्रिणो ज्योतिःशास्त्रस्य धर्मशास्त्रस्य च सुप्रसिद्धा विद्वांस आसन् । तैः साहित्य-व्याकरणादिव्युत्पत्तिं विधाय शुक्ल-यजुर्वेदाध्ययने प्रवर्त्तिता इमे श्रीमद्भ्यः श्रीकेशवभट्ट-



महोदयेभ्यः सस्वरं सविवर्तनञ्च शुक्लयजुर्वेदमधीतवन्तः । श्रीमद्भ्यः ठाकुरदत्तमिश्रमहोदयेभ्यश्च धर्मशास्त्राणि ज्योतिःशास्त्रञ्चाधीतवन्तः । इमे विद्याध्ययनं कृत्वा भृतकाध्यापनं विहाय स्वातन्त्र्येण शतशो ब्राह्मणान् वेदं कर्मकाण्डञ्चाध्यापितवन्तः । स्वसमये काश्यामिमे प्रसिद्धतरा माननीयाश्च वैदिका आसन् ।

एभिर्मिश्रमहोदयैरपि कष्टतरावस्थायामध्ययनं कृत्वा स्वहस्तेनैव सर्वमपि विद्या-वैभवं सम्पादितमिति महनीय-मुज्ज्वलतरञ्चैतेषां जीवनमभूत । देश-देशान्तरेषु शतशः सहस्रशश्च तेषां शिष्याः सन्ति ।

साम्प्रतमेतेषां प्रधानशिष्येषु पण्डित गजानन्द महोदयाः काश्यां सुयोग्याः सदाचारपरायणाः श्रौतस्मार्तकर्मानुष्ठान-निष्ठाः व्रतिनश्च सन्ति, यादृशा विद्वांस्तादृशा एव त्यागमूर्त्तयो विरक्ताश्च सन्ति ।

अपरे च पं० अनन्तरामशास्त्रिणो डेगरामहोदयाः सुयोग्या विद्वांसः सन्ति । ते साम्प्रतं खेमक-वेदविद्यालये अध्यापकाः सन्ति । इदानीं राजकीय-संस्कृत-महाविद्यालये वेदाध्यापकपदे प्रयतमाना लब्धप्रायसाफल्याश्च सन्ति ।

श्रीमतां मिश्रमहोदयानां कैलाशलाभः १९८३ तमे वैक्रमाब्दे ९८वर्षात्मके वयसि समभवत् । तेषां चरित्रं चित्रञ्च वैदिकाङ्कस्य कृते सङ्क्षिप्ततयाऽस्माभिः सम्पादितम् । विशिष्टं पुनः सुप्रभाते प्रकाशयिष्यामः ।

डेगरा—भवनम्
काशी ।

तेषामनुचरः—
श्रीकार्तिकेयशर्मा डेगरा
साहित्यभूषणम्

## हा ! प्रिय विक्रमादित्यत्रिपाठिन् ।

"शोके क्षोभे च हृदयं प्रलापैरेव धार्यते ।"

परलोकतिरोहितस्यापि भवतो गुणानुवादेन विना न शान्तिमेति मेऽन्तरङ्गम् । जौनपुर ( यवनपुर )-मण्डलीय-नाऊपुर-ग्रामाभिजनो भवान् पाटलिपुत्रे मीमांसापरीक्षां दत्त्वा काशीमागच्छन् मध्ये मार्गं धूमानसि वेद-चन्द्राङ्काब्जमिते वैक्रमाब्दे प्रथमं मिलित आसीत् । ततो बलियास्थभृगुक्षेत्रीय-श्रीपराशरब्रह्मचर्याश्रमाचार्य्यपदमधितिष्ठति भवति सर्वेषामप्यस्माकं श्रीरघुनाथत्रिपाठि श्रीचन्द्रिकादत्तत्रिवेदि प्रभृतितत्सञ्चालकानां श्रीमता सह यो गृहकुटुम्ब-व्यवहार आसीत्, स हि स्मृतिपथमधुनोपेतः सर्वानप्यस्मान् व्यथयति । ततः समुद्घोषिते राष्ट्रमहासभयाऽसहयोगनिनादे भवानस्मा-कमप्यग्रेसरोऽभूत । यतो हि वयं कारागारसुपवेदिवांसं भवन्तमभिनन्दितुमेव गतवन्तो नहि तत्सुखमनुभूतमस्माभिः ।

अस्तु, तत एवान्येभ्यः सुहृद्भ्यो दूरीभूतसम्बन्धोऽपि भवान् काशीवास्तव्यसम्बन्धेन मम सन्निहित एवासीत् ।

रङ्गूनदेशभ्रमणव्याजेन हिन्दूमहासभा-सनातनधर्मसभा-प्रभृतिसार्वजनीनं कार्य्यं कुर्वन्तःपुनरपि भवतो राष्ट्रि-कार्य्यव्यासङ्गो वाराणस्यां काशीविद्यापीठे यतः प्रभृति समाचकर्ष ततस्तु भवान् सर्वथापि समान्तरङ्ग एव सञ्जातः। संस्कृत-साहित्य-समाजीयायव्ययनिरीक्षकत्वमङ्गीकृत्य सर्वेषामपि तत्सञ्चालकानां दत्तहस्तावलम्बो भवान् पुनरपि श्रीपराशरब्रह्मचर्य्याश्रमाभिमुखो भवन् न मर्षितो हतदैवेन। हा हन्त! क्व तत् भवतः सारल्यं कुत्र च स सर्वंसहः स्वभावः कुत्र सोऽलै। किकोदम्योत्साहः सम्प्रत्युपलप्स्यते। विरल एव पुमान् इह संस्कृत-विद्वत्समाजे ईदृग् राष्ट्रकार्य्य-करणप्रेमा दृश्यते। योऽगणितनिजपरिवारो भवानिव राष्ट्रियकार्य्यव्यग्रः स्यात् सामाजिक-कुरीतिपरिष्कृतौ च सर्वप्रत्यक्षमेव गृहीतमार्जनीको निर्भीकः सन् सुधारकाणामपि कार्यतो नतु वाङ्मात्रत एव मार्गदर्शकः स्यात्। अहो सत्यपि सर्वेषां सर्वस्वे मम तु भवान् "सचिवः सहराष्ट्रसेवकोऽप्युपदेष्टा व्यवहार-वर्त्मनि।

अपि मानकरोऽवमत्य हाऽकरुण त्वं क गतोस्यतर्कितः।

इदानीं त्रयस्त्रिंशद् वार्षिके वयसि भवतः परलोकान्त-र्धानं सर्वानपि सुहृदः कुटुम्बाश्चात्युग्रमुद्वेजयति। भवतो विधवामर्द्धाङ्गिनीं जाठं पितरं कोमलं कुमारं दुःखिते दुहितरौ त्रनपि भ्रातॄन् चतुरोऽपि भ्रातृव्यान् सर्वदैव सन्तापयिष्यति। अस्तु न भवान् पुनरप्यस्मात् तेनाकारेण दर्शनपथमागमिष्यति इति वज्रीकृतहृदयः परमेश्वरं प्रार्थयते चिरशान्तये भवत :— श्रीगोपाल शास्त्रित्रिपाठी।

---

## शोकसम्वादः।

येन खलु पुरुषपुङ्गवेन मथुरायां विशालं "श्रीमाथुरचतुर्वेद विद्यालय" भवनं निर्माय तत्र ( वेदादि ) संस्कृतभाषाया आङ्गलभाषायाश्च ( अष्टमकक्षापर्यन्तं ) निःशुल्कशिक्षादानार्थं सुदृढा समीचीना च व्यवस्था व्यधायि। तथा कृतेऽप्यनुरोधे वेदाध्ययनस्याऽनिवार्यतां, शिक्षाया निःशुल्कतां, द्विजातिमात्र प्रवेशनियमं च परिरक्षितुमिच्छुना नाकारि राजानुमतं ( Recognized ) तद्। स एव धर्मधुरीणो वदान्याग्रेसरः पूज्यः श्रीवैजनाथचतुर्वेदोऽतीतेऽस्मिन् चैत्रशुक्लस्यचतुर्दशदिवसे कलिकातायां नश्वरशरीरमपहाय स्वर्वासित्वतामगादित्युदन्तमुपलभ्य तद्वियोगखिन्नैर्मथुरावासिभिर्वैशाख-कृष्ण-द्वितीयायां मथुरायां विश्रामघट्टोपर्येका महती शोकसभा कृता। तत्र च बहूनां विदुषां भाषणानि, निम्नलिखितानां विदुषां शोककवितापाठोऽप्यभवत्।

( १ ) श्रीरमेशचन्द्रशुक्लः, शास्त्री ( २ ) श्रीचक्रपाणि-शर्म्मा चतुर्वेदः, ( ३ ) गिरिराजशर्म्मा शास्त्री चतुर्वेदश्च।

उपस्थितैर्जनैरुत्थायैष प्रस्तावो निश्चितः। "समस्त मथुरानिवासिनामेषा साधारणसभा, देशभक्त-स्वजातिरत-दानवीर-श्रीवैजनाथचतुर्वेदानां पञ्चत्वे नितान्तं शोकाकुला सती परमात्मानं प्रार्थयते "स स्वर्गस्थतदात्मने शान्तिं, तदीयदुःखितपरिवाराय धैर्यं च प्रदद्यादिति" ॥

संवाददाता-

चक्रपाणि शर्म्मा चतुर्वेदी।

## हा हन्त !!

आरामण्डलान्तर्गत कवलपट्टीग्रामवास्तव्यानां श्रीमतामोझोपाह्व पण्डितप्रवराणां धर्मशास्त्राचार्य्याणां श्रीरामगोपालशर्ममहोदयानामाकस्मिकमोक्षाधिगमेन समुत्पन्ना, उपमण्डलवीहिया-प्रान्तीय सनातनधर्मसभायाः हानिर्न शक्यते प्रयत्नसहस्रेणापि पूरयितुम्। यदा तेषां सुमधुरभाषणमीषद्धास्यञ्च स्मृतिपथमारोहति तदा विदीर्यते नो हृदयं, न प्रचलति लेखनी। वयं घने दुःखार्णवे निमज्जन्तः पारं गन्तुमसमर्थाः। हा दुर्दैव! ईदृग् जनस्योपरि कथं न दयसे त्वम्। सांप्रतं सर्वे वयं दुस्तरे शोकार्णवे निमग्ना किं कर्तव्यमिति विमूढाश्च संजाता। अतएव किमपि विलप्य प्रलप्य वा विरमाम इति ॥

कवलपट्टी, बीहिया, आरा। } शोकाकुलः— रामसुभग ओझा

## स्वर्गीय श्रीरघुवरदयालुशास्त्रिमहोदयः।

साम्प्रतवत्सर एव पञ्चनदप्रदेशस्य सुप्रसिद्धो महान् विद्वान् नेता श्रीमान् रघुवरदयालुशास्त्रिमहोदयः स्वर्गवासमकरोत्। एष खलु महाशयः सनातनधर्मकालेजस्य प्रधाना-

व्यापक आसीत् । अस्य महाविद्यालयस्य संस्थापनेऽप्यस्य प्रबलः प्रयत्न आसीत् । पञ्चनदीय-विश्वविद्यालयस्य सञ्चालनसभायां व्यवस्थापनसभायाञ्च संस्कृत-प्रतिनिधिरासीत् । पञ्चापप्रान्तीयसनातनधर्मप्रतिनिधिसभायाः संस्थापने सञ्चालने चास्य हस्त आसीत् । तस्य सभापतिपदमप्यलङ्कृतमासीदेतेन । अन्येषु च सनातनधर्मसम्मेलनेषु साभापत्यादिविविधकार्येषु सर्वदा सर्वथा च दत्तचित्त आसीत् । पञ्चनदप्रान्ते सनातनधर्मस्य छरभारत्याश्च प्रधानयं कार्यकर्ता पुरुष-पुङ्गवः स्वीयं नश्वरं कलेवरं विहाय महतीं क्षतिं सम्पादयतीति परं शोकस्थानमस्माकम् । सम्पादकः



श्रीरघुवरदयालुशास्त्री, एम० ओ० एल०

## श्रीकाशी विद्यापीठः ।

ग्रीष्मावकाशानन्तरं काशीविद्यापीठ एषमश्रावण मासस्य प्रथमे दिवसे ( १७ जुलाई, २९ ) समुद्घाटितो भविष्यति । विद्यापीठस्य पाठ्यक्रमस्त्रिषु विभागेषु विभक्तो वर्तते । ( १ ) बाल विद्यालयः ( स्कूल ) । ( २ ) कुमार विद्यालयः, ( हाई स्कूल ) । ( ३ ) महाविद्यालयः ( कालेज ) श्चेति । बालविद्यालये कुमारविद्यालये च षट् कक्षाः सन्ति, महाविद्यालये च कक्षाचतुष्टयम् । तत्र बालविद्यालयस्य प्रबन्धः साम्प्रतं नास्ति । कुमार विद्यालयस्यान्तिमे द्वे श्रेण्यौ विशारदपरीक्षात्वेनाभिधीयेते । महा विद्यालये ( कालेज ) तेषामेव छात्राणां प्रवेशो भवति, ये विद्यापीठस्य विशारद ( मैट्रिक ) परीक्षा समुत्तीर्णा भवेत् अथवा तादृश्येव काचनान्या परीक्षा समुत्तीर्णा स्यात् । विद्यापीठे हिन्दीभाषाद्वारा, देवनागरी लिपिद्वारा च शिक्षा भवति । योग्येभ्यश्छात्रेभ्यश्छात्रवृत्तयोऽपि दीयन्ते । प्रवेशपत्र-पाठ्यक्रम-नियमादिजिज्ञासायां पत्रव्यवहारो विधेयः ।



श्रीमान् रमेश्वरसिंहः दरभङ्गाधीश्वरः ।

## आवश्यकताऽस्ति—

एकस्य कृताध्यापनकार्यस्यानुभविनः सदाचारिणः संस्कृत गद्य-पद्य रचनानिपुणस्याऽऽचार्य-परीक्षोत्तीर्णस्य व्या०-मध्यमपरीक्षोत्तीर्णस्य वा तद्योग्यतावतो वाऽऽध्यापकस्य व्याकरण-साहित्यविदुष इति ।

निवेदनस्थानम्:—

श्रीसेठिया जैन-पारमार्थिक-संस्था,

बीकानेर ( राजपूताना ) ।

## सामुद्रिक-दर्पणम् ।

लेखकः—श्रीकालिका प्रसाद शर्म्मा, राजज्यौतिषी

अस्य पुस्तकस्य पठनेन केवलं हिन्दीभाषाभिज्ञा अपि हस्तरेखानां लक्षणानि चित्राणि चावलोक्य सम्यक् तया भूतम्, भविष्यन्तम्, वर्तमानञ्च फलमवगन्तुं प्रभवेयुः । मूल्यम्—अष्टाणकमात्रम् ।

## संस्कृत-वर्णमाला ।

लेखकः—श्रीत्रिविक्रमपन्तः शास्त्री, साहित्याचार्यः

संस्कृतशिक्षायां प्रारम्भिकशिक्षाया अभावात् संस्कृत-साहित्य-समाज-प्रेरणया संस्कृत-प्रारम्भिक-छात्राणां कृते सर्वाङ्ग-सम्पूर्णेयं सर्वथा नवीना वर्णमाला विरचिताऽस्ति । अस्याः पठनेन संस्कृतस्य मौलिकं वास्तविकं सुदृढञ्च ज्ञानं भविष्यति । एकवारमवश्यं द्रष्टव्या । वस्तुतः शिक्षकाणां कृते पथप्रदर्शकमिदं पुस्तकं शिक्षकैः शिष्यैश्चावश्यमेव स्वसविधे स्थापनीयम्, मननीयञ्च । मूल्यम्—आनकद्वयमात्रम् ।

## परमलघुमञ्जूषा ।

परमलघुमञ्जूषाया नाद्यावधि तादृशी सरलसरला छात्राणामुपकारिणी टीका मुद्रिता । अतिरमणीया व्युत्पादयित्री टीका वर्तते । हन्त ! त्वरितं गृह्यताम् । स्वल्पैव विद्यते । मूल्यम् १) एकामुद्रैव ।

## शुभ-सम्वादः ।

चिरकालादहं हृद्वेदनया, राजयक्ष्मणः पूर्वरूपेण च सन्त्रासितो विविधवैद्यानां पाश्चात्य चिकित्सकानाञ्च चिकित्सां कुर्वन्नारोग्यमलभम् । प्रत्युत रोगस्य वृद्धिरेव भवतिस्म ।

एकदा कस्यापि सुहृदः कथनेन सुपरिचितस्य सुप्रसिद्धयशसः श्रेष्ठिवरस्य चिकित्सकचूडामणेः रायजगन्नाथप्रसाद महोदयस्य चिकित्सां कृतवान् । सप्ताहाभ्यन्तर एव महान्तं नैरुज्यमलभन्नहं मासाभ्यन्तरएव सर्वथा रोगनिर्मुक्तः स्वस्थश्चाभवम् । एतेषां चिकित्सासरणिर्नितरां मनोहरा, प्रसादकारिणी सद्यः फलकरी च वर्तते । एकदा समासन्नप्रसवाया मम भगिन्या गले महान् विस्फोटकः समुत्पन्न आसीत् । तदानीं सर्वेषामेव प्राच्य-पाश्चात्य चिकित्सकानामियमेव सम्मतिरभवत्, यत् प्रसवानन्तरमेतस्या उपायो भवितुमर्हति । नान्या गतिरस्ति । तदानीमप्येभिः सत्वरमक्लेशञ्च प्रसवात्प्रागेव नीरोगा स्वस्था च कृता सा ।

एतेषां चिकित्साया लाभः सर्वैरपि नैराश्यं गतै रोगिभिर्नूनं ग्रहीतव्य इतिसुदृढोऽस्माकं विश्वासः । जगदीश्वरादस्य महोदयस्य कल्याणं कामयामः ।

गवर्नमेन्ट-संस्कृत-कालेज, काशी । } श्रीशिवदत्तशर्म्मा गौड़ः न्यायाचार्यः

## सूचनाः ।

### अध्यापकावश्यकता ।

( पंजाब ) लायलपुरस्थ—श्रीसनातनधर्म-बार ऋषिकुलस्य प्रधानाचार्य-( प्रिन्सिपल )-पदे न्याय व्याकरणज्ञः, सदाचारः, उत्साह-सम्पन्नो विशिष्टो विद्वानपेक्ष्यते । प्रार्थिभिः स्वयोग्यतापत्राणि प्रशंसा पत्राणि च श्रावणमासस्य पञ्चदशतमदिवसात् प्रागेव निम्नसङ्केतेन प्रेषणीयानि । वेतनं योग्यतानुरूपम् । पत्रप्रेषण सङ्केतः—

मन्त्री, श्रीसनातनधर्म-बार-ऋषिकुल ।

लायलपुर, [ पंजाब ] ।

Preshed by Gaurinath Pathak and printed by Rameshwar Pathak at the Tara Printing Works, Benares.

षष्ठ-वर्षे
तृतीयाङ्कः

आषाढस्य
१९८६

# सुप्रभातम् ।

संस्कृत-साहित्य-समाजस्य सचित्रं मासिकं मुखपत्रम् ।



तिमिर-ततिमुदस्यद् भेदताराविलुम्पन्, नयदधि-सुरभाषाभापि जागर्तिमुच्चैः ।
विबुध-विहग-वादैराह्वयद्भाग्यभानुम्, विलसतु भुवनेऽस्मिन् सर्व्वतः 'सुप्रभातम्' ॥

सम्पादकः—श्रीकेदारनाथशर्म्मा सारस्वतः ।

व्यवस्थापकः—

कविराजः श्रीसत्यनारायणशास्त्री भिषक्शिरोमणिः

( टेढ़ीनीम, बनारस-सिटी )

वार्षिक मूल्यम्—३)
माननीयेभ्यः—१२)

छात्रेभ्यः—१॥)
वैदेशिकेभ्यः—५)




विविध-विषय-विभूषितम्, अद्वितीयम्, सचित्रम्, संस्कृत-मासिक-पत्रम् ।

| | | |
|---|---|---|
| षष्ठ-वर्षे | सौर—आषाढे १९९६ विक्रमाब्दीये | तृतीयोऽङ्कः । |

## प्रभातवर्णनम्

[ ले०—साहित्यशास्त्री पं० कुलभूषणमणिः त्रिपाठी ]

...ये कल्याणकेलिं कुवलयविपिने सूत्रयन् षट्पदानां-
...ल्यान्धां दिङ्नटीनां तिमिरजवनिकां संहरन् दूरदूरम् ।
...क्षीनाभं सुप्रभातं समरसमधुरां कां वितन्वत्स्वभिख्यां
...ाचीमूलाग्रजन्म प्रविशति नटयच्चक्रवालं जगत्याः ॥

( २ )

...न्ध्यां क्रीडां पुरारेः प्रलयपटुनटीं प्रत्यहं रात्रिधात्री
...न्ये प्रातर्मुरारेर्जठरसरसिजं भास्करव्याजकोशम् ।
...कुलात्पद्मयोनेस्त्रिभुवनभवनारम्भणं नाम यस्मात्-
...स्यायं दिक्षु रेणुः प्रसरति रुचिरः पीतकिञ्जल्कचारुः ॥

### प्रतीक्षा ।

चण्डैश्चण्डकरः करैर्वितपते,
सर्वं जगज्जीवनं-
धत्ते कामपि दुःस्थितिं,
विघटितो वर्गो रसालाम्बिनाम्
भोक्तुं छादयितुं ततुं च न तरां
तप्तात्मभिः पार्यते
क्वासि श्यामघनाधुना
दृगयनातिथ्यं कदा यास्यसि

भट्ट गिरिधारी शर्म्मा "कविकिङ्करः"

# वैदिकधर्म-संस्थापना ।

लेखकः—श्रीहरि-गोविन्द-बोरवणकरः

आर्यसंस्कृतिनिधानानि वेदाः स्वाधिकृतज्ञानवैशिष्ट्येन समग्रजगतीतलेषु विद्वत्प्रवरसम्मताः सन्तीति प्रशस्ता विद्वांसो विदन्त्येव । तन्मतमैतिहासिकानामपि नास्त्यसम्मतमित्यविदितं न केषाञ्चिद्विपश्चिताम् । अस्माकं भारतीयानां सनातनधर्मानुयायिनां तु वेदा एव सारसर्वस्वम् । वेदाविरुद्धानामेव वचनानां कृत्यानां वा सम्पादनं प्रामाणिकमित्यङ्गीकर्तुं शक्यतेऽस्माभिः । तद्विपरीतं तु निश्चयेनाप्रामाणिकमत एव निषिद्धम् । कार्याकार्यव्यवस्थितौ शास्त्रस्य प्रामाण्यमिति श्रीमद्भगवद्गीतोपनिषत्सु भगवता श्रीकृष्णेनोक्तम् । शास्त्र-शब्देन श्रुतिस्मृत्योर्ग्रहणमुचितम् । धर्मनिर्णये 'श्रुतिः, स्मृतिः, सदाचारः, स्वस्य च प्रियमात्मनः' इत्येतानि प्रमाणानि निर्दिष्टानि । तत्राद्यं श्रुतेरेव स्थानं श्रुतिमहत्त्वं सूचयति । श्रुति-कर्त्ता न कोऽपि विद्यते; चतुर्मुखस्तां स्मृतवान्, ततो मनुः—

'न कश्चिद्वेदकर्त्ताऽस्ति वेदं स्मृत्वा चतुर्मुखः, इति पाराशरवचनात् । ऋषयोऽपि मन्त्रद्रष्टार एव न मन्त्रकृतः ।

'ऋषीणामृषिपुत्राणामृषिकाणां स्वयम्भुवाम् ।
तथा नामाभिजानीयाद्यैषां मन्त्रदृष्टयः ॥

इत्यनुस्मरणात् । अतएव वेदा अपौरुषेया अनादिनिधना नित्या इति चास्माकं परम्परानुगतो विश्वासः ।

विद्यन्ते ज्ञायन्ते लभ्यन्ते वा धर्मार्थकामादि पुरुषार्था एभिरिति वेदाः । तथा च सायणः 'इष्टप्राप्त्यनिष्टपरिहारयोरलौकिकमुपायं यो वेदयति स वेदः' इति कृष्णयजुर्वेदव्याख्याने तल्लक्षणमाह । वेदानां स्वरूपं तु बौधायनेन 'मन्त्रब्राह्मणमित्याहुः' आपस्तम्बेन 'मन्त्रब्राह्मणयोर्वेदनामधेयम्' चेति कथितम् । वेदाश्चत्वारो यथा—'ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः' इति ।

पूर्वस्मिन्काले द्विविधा दार्शनिका आसन् । केचिद् आस्तिकाः केचिन्नास्तिकाश्च । वेदानां प्रामाण्यं स्वीकुर्वाणा आस्तिकाः, वेदनिन्दकाश्च नास्तिकाः । यथा लिखितमेव—

नास्ति वेदो नास्ति लोक इति येषां मतिः स्थिरा ।
नास्तिकास्ते तथाऽस्तीति मतिर्येषां त आस्तिकाः ।
अवैदिक-प्रमाणानां सिद्धान्तानां प्रदर्शकाः ।
चार्वाकाद्याः षड्विधास्ते ख्याता लोकेषु नास्तिकाः ॥
वेदप्रमाणकानीह प्रोचुर्ये दर्शनानि षट् ।
न्यायवैशेषिकादीनि स्मृतास्त आस्तिकाभिधाः ॥ इति

तत्र नास्तिकेषु बौद्धानामपि परिगणनं कृतमेव तेषां वेदप्रामाण्यास्वीकरणादनात्मवादित्वाच्च । ऐतिहासिका जानन्त्येव यत्तेषां महती प्रतिष्ठाऽस्मिञ्जम्बूद्वीपे बभूव, महाँश्च धर्मविस्तरोऽभूत् । फलतो यज्ञस्य महत्त्वं जनैर्विस्मृतप्रायमेव । सर्वेऽपि वर्णाः स्वे स्वे कर्मण्यदत्तचित्ता अन्येषां कर्मसु निरता आसन् । सङ्करस्य सर्वत्र साम्राज्यं सुप्रतिष्ठितम् ।

सर्वेऽपि वर्णा राज्यमविशेषेण कुर्वाणा अदृश्यन्त। भागवतेऽपि सम्यगुक्तं हि—

पुराणेषु चान्येषु 'नन्दान्तं क्षत्रियकुलम्' इत्युपलभ्यते। ह्यूएन्त्सङ्ग' (Huent-sang) नाम्ना चीनदेशीय-प्रवासिना स्वकीये प्रवासवृत्ते लिखितं दृश्यते यत् 'श्रीहर्षवर्धनो वैश्यः, काञ्ची-वलभी-महाराष्ट्रादिदेशेषु क्षत्रिया राजानः, उज्जयिनी-महेश्वरपुरादिषु ब्राह्मणा नृपाः, सिन्धप्रान्ते तु शूद्रा एव राजान' इति। अस्य प्रवासिनो वर्णनस्य पुष्टिः कुमारिलभट्टस्य 'तच्च राज्यमविशेषेण चत्वारोऽपि वर्णाः कुर्वाणा दृश्यन्ते' इति वाक्येन भवत्येव।

महानन्दिसुतो राजन् शूद्रागर्भोद्भवो बली।
महापद्म इति ख्यातो नन्दः क्षत्रविनाशकृत्॥
ततो नृपा भविष्यन्ति शूद्रप्राया अधार्मिकाः।
येऽतीता वर्त्तमाना ये भविष्यन्ति च पार्थिवाः॥
तेऽत उद्देशतः प्रोक्ता वंशीयाः सोमसूर्ययोः।
आरभ्य भवतो जन्म यावन्नन्दाभिषेचनम्'॥ इति

सर्वेऽपि संन्यासमहिंसां च प्रशशंसुः। तेन वैदिकधर्मस्य बह्वी हानिः समपद्यत। जना यज्ञकर्माणि न चक्रुर्यतस्तस्मिन्पशुवध आवश्यकः। स तु बौद्धमते विरुद्ध एव। संन्यासग्रहणेन शीघ्रमेव मुक्तिर्लभ्यत इति बौद्धानुमतेन भावेन राजानो राज्यशासनभारं त्यक्त्वा देशाटनं स्वीचक्रुः। किन्तु तेन देशस्यास्याक्षुद्रो विनाशः सञ्जातः, परदेशस्याक्रमणान्यारेभिरे। स्वतन्त्रोऽयं देशो विदेशीयशासकाधीनो बभूव।

दयनीयां दशामिमां देशस्य वैदिकधर्मस्य च दर्शं दर्शमाकुलस्य सुधीरो दृढप्रतिज्ञो द्विजश्रेष्ठोऽवतीर्णो भारतवर्षे। तेनाश्रान्तपरिश्रमेणेयं दशा शीघ्रमेव परिवर्त्तिता। बौद्धधर्ममतानां पराजयं कृत्वा वैदिकधर्मस्य पुनरुज्जीवनं संस्थापनं च कृतम्। तस्य नाम भट्ट कुमारिल आसीत्। अनेन स्वरचितेषु ग्रन्थेषु स्वविषयकं न किमपि वस्तु लिखितं दृश्यते। अन्येषां केषाञ्चित्साधनानां साहाय्येन तद्विषयकं यत्किञ्चिद्वृत्तं लब्धं तल्लेखोऽधुना क्रियते। महाकवेर्भवभूतेरयं गुरुरित्युल्लेखः 'श्री शं० पां० पण्डित नाम्ना विदुषा सम्पादित उत्तररामचरिते लभ्यते, भवभूतिस्तु कान्यकुब्जाधिपतेर्यशोवर्मणः काले समभूदिति नास्त्यविदितमैतिहासिकानां विदुषां च। यशोवर्मा खृष्टाब्दस्याष्टमे शतके बभूव। अतस्तत्कालात्पूर्वमेव कुमारिलभट्टस्य काल इति सप्तमे शतके तस्य कालेन भाव्यते।

तेन च स्वविरचिते तन्त्रवार्त्तिके ग्रन्थे 'हिमवद्विन्ध्यान्तराला तु कृष्णमृगचरणाद्युपलक्षित-आर्यावर्त्तनिवासिव्यतिरिक्त-बर्बरादिभाषागतम्लेच्छितस्वसमानाधिकरणापशब्द०' इत्यार्यावर्त्तस्य महती प्रशंसा कृता अन्येषां म्लेच्छदेशानां च निन्दा कृतेति दर्शयति यदयमार्यावर्त्तवास्तव्य आसीदिति। केचित्तं कामरूप (आसाम) देशनिवासीति, अन्ये तु द्रविडोऽयं ब्राह्मण इति कथयन्ति। किन्तु प्रमाणाभावात्तदुक्तेः सत्य-

त्वमग्राह्यम् । अनार्यभाषासु द्राविडभाषाया अपि तेन परिगणनं कृतम् । अन्येषां पारसीक-वर्बर-यवन रोमकादिभाषाणामुल्लेखस्तेन कृतः । विदेशिभाषा भाषिणां जनानामभिप्रायज्ञानार्थं द्वैभाषिका ( दुभाषीति भाषायाम् ) आसन्निति–

म्लेच्छैरवगतं पश्चादार्यैर्द्वैभाषिकैः क्वचित्

इत्यनेन श्लोकार्धेन स्पष्टीभवत्येव । पारसीकभाषायां पीलु-('फील') शब्दस्य 'हस्ती'ति, संस्कृते तु 'वृक्ष' इत्यर्थो भवतीति तेन

'यथा पील्वादिशब्दानां वृक्षहस्त्यादिबोधने ।
तथा विप्रतिपत्तिः स्यादार्यम्लेच्छादिबोधने ॥

इति लिखितम् । अनेनोद्धरणेन ज्ञायते यत्तस्य समये पारसीकभाषा बाहुल्येन प्रचलितासीदिति ।

'स्वमातुलसुतां प्राप्य दाक्षिणात्यस्तु तुष्यति'

इत्यत्र तुष्यतीति निन्दाव्यञ्जकेन शब्दप्रयोगेण तस्य दाक्षिणात्यत्वमप्यपाकृतमेव ।

बाल्य एवायं स्वकीयप्रकाण्डपाण्डित्येनानेकेषां पण्डितप्रवराणां पराजयं चकार । बौद्धमतस्याध्ययनार्थमनेन कस्मिंश्चिद्बौद्धविहारे कस्यचिद्भिक्षुसमीपे निवासः स्वीकृतः, तत्त्वग्रहणानन्तरं विवादपद्धत्या सर्वेषां भिक्षूणां पराभवं कृत्वा वैदिकमतानां प्रतिष्ठापनमनेन भट्टकुमारिलेन सम्पादितम् । इदमेवास्य महत्कार्यं तस्य चिरकालिकयशसः प्रधानतमं कारणमिति वयं मन्यामहे । न्यायमीमांसादिदर्शनेषु पारङ्गतोऽयमिति तु सर्वे जानन्त्येव ।

बौद्धधर्मानुयायिन आचार्यस्य सन्निधे छद्मवेषेणाध्ययनं कृतमिति दोषपरिमार्जनार्थं कुमारिलभट्टेन स्वकीयो देहोऽग्निचितायां स्थापयित्वाऽदह्यत । मरणात्पूर्वं श्रीमच्छङ्कराचार्येण सह कुमारिलभट्टस्य संभाषणं बभूव । श्रीमच्छङ्कराचार्येण –

'श्रुत्यर्थधर्मविमुखान् सुगतान्निहन्तुं,
जातं गुहं भुवि भवन्तमहं नु जाने ।'

इत्येतैः शब्दैस्तस्य स्तुतिः कृतेति शाङ्करदिग्विजयस्य कथनम् । किन्तु प्रमाणाभावादस्य सत्यताविषये सन्देहः समुद्भवति । श्रीमद्भगवतः शङ्कराचार्यस्य जन्मकालः खिष्टीये ७८८ तमेऽब्दे पतति । कुमारिलस्य निधनं तत्पूर्वमेव प्रायः खिष्टीये ७०० तमेऽब्देऽवर्ततेत्येतयोर्मेलनं सम्भाषणं चाशक्यमेव प्रतिभाति ।

यागादिके हिंसा भवतीत्यतः साधारणजनानां मनःप्रवृत्तिर्यज्ञकर्मणो विरुद्धा बभूव । यद्यपि तस्यां परिवर्तनसम्पादनार्थं कुमारिलभट्टेनाश्रान्तः प्रयत्नो विहितस्तथापि स निष्फल एव बभूव । इमामहिंसाप्रवणां जनमनो वृत्तिमाकलय्य भगवता शङ्करेणाहिंसामार्गस्योपदेशः कृतः । वेदानां प्रामाण्येनैव तेन संन्यासमार्गस्य प्रचारः कृतः ।

एवं पुरुषद्वयेनानेन वैदिकधर्मस्य वर्णाश्रमधर्मस्य महत्त्वं पुनः प्रतिष्ठाप्य पुनरुज्जीवनं कृतम् । नास्तिकदर्शनानां पराजयं सम्पाद्य सर्वत्रास्तिक्यबुद्धिः प्रस्थापिता ।*

*अस्य लेखस्य कृते पं० चिं० वि० वैद्य-कृत-' मध्ययुगीन-भारत ' नामकस्य ग्रन्थस्योपयोगः त इति सविनयं निवेदयति—लेखकः ।

# भुवनेश्वर-यात्रा ।

रचयिता-श्रीमान् पं० कालीप्रसन्न चक्रवर्ती बी. ए., कविरत्नम्
[ प्रधानाध्यापकः—सेन्ट्रल-हिन्दूस्कूल, काशी ]

काश्यां भ्रातृवियोगतापविधुरो ग्रीष्मेण सन्तापितो
वाञ्छन् देशमनातपं सुविमलं, शान्तिप्रदं शीतलम् ।
श्रीक्षेत्रे जगदीश्वरस्य शरणे, चैतन्यपूताश्रमे
सञ्जातो मलयाद्रिसागरतटे, लब्धाश्रयोऽहं सुखी ।१।
हा कष्टं ! श्रीजगन्नाथोऽप्यशक्तः कर्ममोक्षणे ।
तत्रापि पीड्यमानस्य वायुना सैकतेषुभिः ॥ २ ॥
गत्यन्तरविहीनस्य मन्ये कर्मक्षये पुनः ।
आयातः सखिरूपेण श्रीमान्मदनमोहनः ॥ ३ ॥
तेन प्रीत्या परिष्वज्य प्रापितो हरमन्दिरम् ।
तटस्थं विन्दुतीर्थस्य भुवनेश्वरसन्निधौ ॥ ४ ॥
सर्वतीर्थमयं विन्दु-सरः शङ्कर-खानितम् ।
गौरीतृप्तिविधानाय रक्षसो हननात्परम् ॥ ५ ॥
तीरेषु तस्य तीर्थस्य स्वयं त्रिभुवनेश्वरः ।
मन्दिराणां सहस्राणि मठानाञ्च शतानि च ॥ ६ ॥
शिल्पविद्यासुनैपुण्य-युतानि विविधानि च ।
पुरीं संस्थापयामास विरच्यय्य बुधोत्तमैः ॥ ७ ॥
एकाम्रकाननं नाम गुप्तकाशीति कथ्यते ।
तपसे तप्तसिद्धानां शान्तये शान्तचेतसाम् ॥ ८ ॥
खण्डोदयगिरी यत्र नानाकारगुहान्वितौ ।
स्थानौ बौद्धकीर्तिश्च जैनकीर्त्तिस्तथैव च ॥ ९ ॥
प्राचीनासीमसम्पत्तिं सूचयन्तौ सुरक्षितौ ।
बौद्धानां धर्मबुद्धीनां गिरिकन्दरवासिनाम् ॥ १० ॥
भुवनेश्वरसम्पत्तेस्त्यागराशिसमुद्भवा ।
देवतानामधिष्ठानं लब्धाधिक्येन साधितम् ॥ ११ ॥
नृपतीनां न कुत्रापि प्रासादः परिदृश्यते ।
प्राधान्यं देवसेवायाः गुप्तकाशीविशिष्टता ॥ १२ ॥
पानार्थं लभ्यते यत्र गिरिप्रस्रवणाच्च्युतम् ।
दुग्धफेननिभं नित्यममलं धवलं जलम् ॥१३॥
मधुरं शीतलं स्निग्धमपि स्वल्पायतिस्थितम् ।
केदारेश्वर-सन्नद्धं सर्वकालेषु चाक्षयम् ॥१४॥
पीतं बहुशतैर्नित्यमन्यान्यमिव दृश्यते ।
गौरीकुण्डं बुधैः प्रोक्तं दुग्धकुण्डञ्च केनचित् ॥१५॥
भक्तानां भुक्तिमुक्तिभ्यां रुग्णानां रक्षणाय च ।
मन्ये गिरिजया नित्यं निजस्तन्येन पूरितम् ॥१६॥
स्नानाय पल्वलं दिव्यं गौरीमण्डपपूरतः ।
दृढघट्टादिसंयुक्तं सुदृश्यञ्च सुनिर्मितम् ॥१७॥
नित्यं प्रवहमानञ्च पूर्यते निर्झराम्बुना ।
पुण्यं रोगहरं बल्यं सुखशान्तिप्रदायकम् ।
एभिः खातादिभिर्दिव्यैर्मन्दिरैश्च मनोहरैः ॥१८॥
विशालायुतवृक्षैश्च काकेन्दुवनराजिभिः ।
विविधैः पक्षिभिश्चैव गुप्तकाशीविराजते ॥२०॥
तत्र संस्थापितं दिव्यं श्रद्धया हरमन्दिरम् ।
साधुना मदनाख्येन पितृभक्तेन सूनुना ॥२१॥
तुङ्गस्तूप-स्थितं दुर्गं दशद्वारसमन्वितम् ।
नवचक्रविशिष्टञ्च विभातीव नवोत्पलम् ॥२२॥
समायतं सुविस्तीर्णं चत्वरेण च वेष्टितम् ।
वातायनादिसंयुक्तं सुदृश्यञ्च मनोहरम् ॥२३॥
अमलं कमलाकारं "पद्मकोठी" ति विश्रुतम् ।
स्निग्धं सुशीतलं नित्यं विन्दुवारिभूतानिलैः ॥२४॥

चन्द्रालोकोज्ज्वलं स्निग्धं पतितं विन्दुवारिषु ।
प्रतिविम्बं मठश्रेण्याः शोकसन्तापहारकम् ॥२५॥
शिवलोकस्थितं मन्ये दृष्ट्वेदं हरमन्दिरम् ।
तत्र काञ्चनवर्णाभा देवी गौरीव राजते ॥२६॥

सा देवी सरला यथैव कमला स्निग्धानना मातृवत्
भोज्यानां परिवेशने व्यवसिता मातान्नपूर्णा यथा ।
देव्या चाशुतया समाहितधिया यत्नेन पुत्रीकृतो
धन्योऽहं भुवनेश्वरस्य कृपया 'कालीप्रसन्नो' द्विजः॥२७॥

## मङ्गलम् ।

श्रीमद्गुरुचरणारुण-पङ्कजयुग्माय मे नमोऽस्तु सदा
यत्कृपयैव मयाऽत्र-व्यरचि सुवृत्तैरिदं षट्कम् ॥
लिप्सुर्लक्ष्म्याश्रयत्वं स्वयमतिशयितं त्रिश्रुतं सारसस्व-
देवत्वाद्यं वितत्याद्भुतममृतकरः किङ्करः कायसङ्घम् ।
सन्नास्ते यन्नखश्रीश्रिततनुरनिशं सेवमानो विमानः –
श्रीमत्ताया न सत्ता श्रयतु तव कुतः श्रेयसस्तं स्वतोऽङ्घ्रिम् ॥१॥
जेगीयसे जगति यद्बहुशोऽनिशन्त्वं-विद्वद्वरैर्गुरुरसीति तदद्भुतम्मे ।
स्वान्तोत्पलेऽत्रभवतो भवतो न जात्वत्यल्पीयसीह्यपि सुदुर्वहता विभाति ॥२॥
शब्दानुशासनविदां विदिता निरुक्तिः क्षित्यामनेन चरतीति न तावकीना ।
मन्मानसे तु निभृते चरणाश्चिरेण-चारु त्वदीयचरणे चरणत्वमस्ति ॥३॥
अज्ञानोद्भवमान्तरं नु तिमिरं नान्यै निपीतन्तमम्-
मत्वोन्मूलयितुं समूलमखिलं शश्वन्मदन्तर्गतौ ।
हृत्पद्मैकविकाशिनौ स्वकरजद्युत्या जितेन्दू च तौ-
राजेतामरुणौ सुचारुचरणौ यौ तेऽपरौ वारुणौ ॥४॥
सच्चारुचारुणमणिद्युतिमत्त्वदीयम्-मन्मानसे सरसि सारसमङ्घ्रियुग्मम् ।
तत्पङ्कतोऽधिगतजन्म मृषेति नो यत्-किं स्वां समुद्भवभुवं हरतीत्यहो तत् ॥ ५ ॥
त्वत्पादपांशुरमृतांशुसितांसुकीर्ति-स्पृष्टः सकृत्सदसकृच्छिरसा रसाच्छम् ।
नित्यन्तनोत्यपि तनोरतनूभयत्र-कृत्स्नस्तुतस्तु तत एव नमोनमस्ते ॥ ६ ॥

श्रीदामोदरशास्त्रिणां मतिमतां श्रद्धास्पदानां सता-
मन्तेवासिजनेन भूरि भजता बुद्धिं सदा शैशवीम्।
"बस्ती" मण्डलवासिना कृतिरियं विद्वन्मुदे निर्मिता-
ब्रह्मेत्यन्वितशङ्करेण भवतु श्रीशादिति प्रार्थना॥

लेखकः—
—श्रीब्रह्मशङ्करमिश्रः।

# वैदिक-विज्ञाने द्रव्य विज्ञानम्।

(लेखकः—श्रीदामोदर शास्त्री, भिषगाचार्यः, साङ्ख्य-सर्वदर्शनतीर्थः)।

[शेषांशः]

तत्र भगवान् वायुः प्रभवश्चाव्ययश्च भूतानां, भावाभावभूतानां भावाभावकरः, सुखासुखयो-र्विधाता, मृत्युः, यमः, नियन्ता, प्रजापतिरदितिर्विश्वकर्म्मा, विश्वरूपः, सर्वगः, सर्वतन्त्राणां विधाता, भगवानणुर्विभुर्विष्णुः, क्रान्ता लोकानां, अनिलः, अतिपरुषः, अतिशीघ्रकारी, आत्ययिक इति वायो-र्यथार्था स्तुतिरपि भवत्यारोग्याय, बलवर्णविवृद्धये, वर्चस्वित्वायोपचयाय, ज्ञानोपपत्तये, परमायुषः प्रकर्षाय च। एवम् अग्निरेव पित्तान्तर्गतः पक्तिमपक्तिं दर्शनमदर्शनं, मात्रामात्रत्वमूष्मणः, प्रकृतिवर्णौ, शौर्य्यम्, भयम्, क्रोधम्, हर्षम्, मोहम्, प्रसादमित्यादिकं विधत्ते।

शरीरे जलमेव सोमः श्लेष्मान्तर्गतं दार्ढ्यम्, शैथिल्यम्, उपचयम्, कार्श्यम्, उत्साहम्, आल-स्यम्, वृषताम्, क्लीबताम्, ज्ञानमज्ञानम्, बुद्धिम्, मोहमेवमादीनि विधत्ते। अतएवैषां प्रकृतिभूतभावार्थं यतितव्यं बलवर्णोपचयप्रसादनायेति। एतेषां प्रकृतिविकृतिरूपविज्ञानं परमावश्यकं लोकानाम्। एतत्त्रयं वातपित्तकफसंज्ञकं प्रकृतिभूतं शरीरोपकारकं भवति। विकृतिमापन्नं खलु नानाविधैर्विकारैः शरीरमुपतापयति। त्रयस्त्रयो रसास्तेषामेकैकं जनयन्ति त्रयस्त्रयश्चोपशमयन्ति। तद्यथा कटुतिक्तकषायाः वातं जनयन्ति, मधुराम्ललवणास्त्वेनं शमयन्ति, कटुकाम्ललवणाः पित्तं जनयन्ति, मधुरतिक्तकषायास्त्वेनं शमयन्ति, मधुराम्ललवणाः श्लेष्माणं जनयन्ति, कटुतिक्तकषायास्त्वेनं शमयन्तीति। रसदोषसन्निपाते हि यैर्दोषैः समानगुणाः समानगुणभू-

यिष्ठाः ते तानभिवर्द्धयन्ति, विपरीतगुणास्तु विपरीतगुणभूयिष्ठा वा शमयन्त्यभ्यस्यमाना इति व्यवस्थाहेतोः षट्त्वमुपदिश्यते रसानां परस्परेणासंसृष्टानां त्रित्वं च दोषाणाम् । तत्र तैलसर्पिर्मधूनि क्रमेण वातपित्तकफप्रशमनानि द्रव्याणि प्रभावतः प्रभवन्तीति तैलं स्नेहौष्ण्यगौरवोपपन्नत्वाद्वातं जयति सततमभ्यस्यमानम् । वातो हि रौक्ष्यशैत्यलाघवोपपन्नो विरुद्धगुणो भवति । विरुद्धगुणसन्निपाते हि भूयसाल्पमवजीयते । तस्मात्तैलं वातं जयति सततमभ्यस्यमानम् । सर्पिः खल्वेवमेव पित्तं जयति माधुर्यात् शैत्यान्मन्दत्वाच्च । पित्तं ह्यमधुरमुष्णं तीक्ष्णं च । मधुच श्लेष्माणं जयति, रौक्ष्यात्तैक्ष्ण्यात्कषायत्वाच्च । श्लेष्मा हि स्निग्धो मन्दो मधुरश्च । यच्चान्यदपि किञ्चित् द्रव्यम्, एवं वातपित्तकफेभ्यो गुणतो विपरीतं विरुद्धं तच्चैतान् जयत्यभ्यस्यमानम् । अतएव

विसर्गादानविक्षेपैः सोमसूर्य्यानिला यथा ।
धारयन्ति जगद्देहं कफपित्तानिलास्तथा ॥ इति

सर्वथैवैतेषां प्रकृतिभावाय यतितव्यम् । तत्र वातस्य प्राधान्यात् योगिभिरेव स आयत्तीकृतः प्राणभूतस्य वातस्य आयमनेन । यतः प्राणपरित्यागे सर्वत्यागः । एवं ते वातकलाकलनेन तमायत्तीकृत्य महाप्राणाः सर्वसिद्धिमन्तः सर्वैश्वर्य्यशालिनश्च बभूवुः । तेनैव च बहुकालनिरन्तराभ्याससाध्यमोक्षमपि तेषां करामलकवदासीत् । कैव कथा सिद्ध्यैश्वर्य्यादीनाम् । एवं बहुधा वातादीनां स्वरूपादिवर्णनं वैश्वरूप्यत्वात्तेषां भवितुमर्हतीति नेह प्रतन्यते प्रबन्धविस्तरभिया अमत्सरैरेवाधीतविद्यैरधिगन्तव्यम् ।

कस्तावदेवं मर्त्यः, यो न सिद्ध्यैश्वर्य्यनिवहमिच्छति कृतविद्यैरपि भूसुरैः स्वाराज्यकामैर्वाजपेयादिना यतितं महदैश्वर्य्यसिद्धिसम्पत्तये बहुधा । अत एव योगसूत्रे 'जन्मौषधितपःसमाधिजाः सिद्धयः' इति प्रतिपादनेन द्रव्यक्रियामन्त्रविज्ञानालोचनेन यतितव्यमिति वदति । अतएव रसेश्वरसिद्धान्ते षड्रससारभूतरससेवया सर्वसिद्धिरिति "रसो वै सः" रसं ह्येवायं लब्ध्वानन्दी भवतीति प्रतिपादितम् । तथाहि, अपरे माहेश्वराः परमेश्वरतादात्म्यवादिनोऽपि पिण्डस्थैर्य्ये सर्वाभिमता जीवन्मुक्तिरिति पिण्डस्थैर्य्योपायं पारदादिपदवेदनीयं रसमेव सङ्गिरन्ते । रसस्य पारदत्वं संसारपरपारप्रापणहेतुत्वेन । सुतरां "षड्दर्शनेऽपि मुक्तिस्तु दृश्यते पिण्डपातने । करमालकवत् साऽपि प्रत्यक्षा नोपलभ्यते । तस्मात्तं रक्षयेत्पिण्डं रसैश्चैव रसायनैः ।"

गोविन्दभगवत्पादाचार्य्योऽपि " इति धनशरीरभोगान् मत्वा सदैव यतनीयं । मुक्तौ, सा च ज्ञानात्, तच्चाभ्यासात्, सच स्थिरे देहे " इति व्याचख्यौ । किञ्च "ये चात्यक्तशरीराः, हरगौरिसृष्टिजान्तरं प्राप्ताः वन्द्यास्ते रससिद्धाः, मंत्रगणः किंकरो येषा-मिति द्रव्यविज्ञानस्य देहदार्ढ्यादिना मन्त्रक्रियासिद्धिमूलत्वं दर्शितम् । अत्यल्पमिदमुच्यते । देवदैत्यमुनिमानवादिषु बहवो रससामर्थ्यात् दिव्यदेहमाश्रित्य जीवन्मुक्तिमाश्रिताः श्रूयन्ते रसेश्वरसिद्धान्ते ।

तथा चः—देवाः केचिन्महेशाद्याः दैत्याः काव्यपुरःसराः

मुनयो बालखिल्याद्याः नृपाः सोमेश्वरादयः ।
गोविन्दभगवत्पादाचार्य्यो गोविन्दनायकः
चर्पटी कपिलो व्याली कपाली कन्दलायनः ॥
एतेऽन्ये बहवः सिद्धाः जीवन्मुक्ताश्चरन्ति ते
तनुं रसमयीं प्राप्य तदात्मककथाचणाः ।

अयमेवार्थः परमेश्वरेण परमेश्वरीं प्रति प्रपञ्चितः ॥

कर्म्मयोगेन देवेशि ! प्राप्यते पिण्डधारणम्—
रसश्च पवनश्चेति कर्म्मयोगो द्विधा स्मृतः ।
मूर्च्छितो हरते व्याधिं मृतो जीवयति स्वयम्
बद्धः खेचरतां कुर्य्याद्रसो वायुश्च भैरवीति,

एवं ब्राह्मयामलकरसायननामपि महत्सिद्धिप्रदत्वं दृश्यते । एवं सर्वसिद्ध्यैश्वर्य्यादिसम्पत्तये द्रव्यादिविज्ञानालोचनं कर्त्तव्यमिति किमपि वैदिकविज्ञानानुसन्धानभवनं स्थापनीयं सर्वैरेव वैदिकधर्मावलम्बिभिः । येन बलवत्वमासाद्य नाभिभूताः हेयाश्च भवेम । 'नायमात्मा बलहीनेन लभ्य' इति ज्ञानमात्रसेवकानामपि बलमपेक्षितमिति सर्वस्यावश्यकता ।

अधुना वैदिकविज्ञानद्रव्यक्रियामन्त्रालोचनाभावेन भारतस्य भा विनष्टैवेति भारतत्वमपि विनष्टं जातम् । क्वापि न दृश्यन्ते मन्त्रौषधिसमाधिजाः सिद्धयः । येनैकदा—

एतद्देशप्रसूतस्य सकाशादग्रजन्मनः ।
स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः ॥

इतिस्मृतिपथमधिगच्छति । अतएव मृतभाषेयमिति निगद्यते परन्तु नेयं भाषा मृता, मृता एव ब्राह्मणादयः भारतीयाः सुरभारतीसेवकाः ।

यदि समिच्छसि भारतवैभवं हृदयतो भज रे सुरभारतीम् ।
कुरु च योगरसेषु परिश्रमं निगमकल्पतरोस्तलमाश्रय ॥

किमधिकं सहृदयेषु सत्सद्विचारचतुरोदारचरितेषु सुरभारतीसेवकेषु इति ।

## वेदाधःपतने विचारः

[ ले० — श्रीचित्रकूटपाण्डेयः ]

संस्कृतसाहित्यसमज्ञानां भवतां पुरस्तात् प्रसरतु विचारोऽसौ । भवन्तस्तु दत्तावधाना हृदये हस्तौ निक्षिप्य वेदरक्षानिर्भरेण मनसा पक्षपातराहित्येन च विचारयन्तु यत्, किं ते वैदेशिका स्तथैतद्देशीया धर्म्मप्रियाः समाजप्रिया अप्रियाश्च वा देशकालज्ञानज्ञा एव केवलं स्वार्थपरायणा इतस्ततो भ्राम्यन्तो राजकीयसंस्थासु प्रविश्य प्रविश्य स्वकार्यमनुकूलयन्तः स्वीयां समुन्नतिं साधयन्ति न वा ? नेति न वक्तुं शक्यते ।

विद्यां च ते न जानन्ति, तस्या एव प्रसारमयूखाच्छादितं जगद् भवति, किन्त्वेतत्क्रियमाणाः कनीयांस अल्पतरज्ञाश्च, संस्कृतसाहित्यानवरत परिश्रमशीलान् मनोरमा-शब्दरत्न-शब्देन्दुशेखरपारङ्गतानुपहसन्तो विलोक्यन्ते । तथाप्यत्र विबुध धुरन्धरै र्न विधीयते ? वर्तमाने त्विदमुपहासास्पदमेवेति । भाष्यमवलम्ब्यैव ग्रन्थाश्चैते प्रणीताः सन्ति इति । एषु ग्रन्थेषु सर्वत्र स्थले प्रतिपादितं अत्र परीक्षाध्यक्षैः कौंसिलसदस्यैर्धर्मस्य राष्ट्रस्य

समाजस्य चाधःपतनं विचिन्त्य वेदाधःपतनहेतुं विचार्य्य विनिश्चयताम् । वहवस्तु ते महाशयाः पाण्डित्यलोभेनाध्ययनाध्यापनपरायणाः धर्म्मबुद्ध्या देवविद्यापठनरता भवन्ति । तेषु ये मनोरमादिषु प्रतिष्ठा अधीत्य परिश्रमेणोपाधिमाचार्य्यपरीक्षां वा लिस्तीर्य्योत्तीर्य्य च शक्तिशालिनोऽपि भूत्वा स्वाधीनतद्ग्रन्थाध्ययनमन्तरा विदुषः प्राप्य स्वीयं पराजयं विना वा द्वितीयं किं फलं प्राप्नुवन्ति ? यदि केचन " ईसाइ " यवनाश्च तेषां पुरस्तादागत्य सनातनधर्म्मस्योपरि कुठाराघातं विधाय तद्वेदान्वा निन्दयित्वा भारतजलवायूत्पन्नान् हिन्दून् स्वकीयधर्म्मे समावेशयन्ति तदा मूकवाद्रते किं कुर्वन्ति ते ? अन्यानपि भूयस अत्याचारान्पश्यन्तोऽपि व्याकुलितमनसो हाहेति कुर्वन्त ईश्वरेच्छां मन्यमानाः मनोरमादिव्याकरणग्रन्थाध्ययनतत्परा एव तिष्ठन्ति ते अहो आश्चर्य्यतरमिदम् ! कुतः समागतेयं दशा वैयाकरणानां शिरसि ! अहो ! व्याकरणाध्ययनन्तु वेदान् रक्षितुमेव, किं च वेदविमुखांस्तार्किकान्पराजित्य वेदाभिमुखनयनमेवेत्यादितत्प्रयोजनमस्ति । अत एव मध्येऽज्ञानामस्य तु प्राधान्यम् । इतस्तु गाढपरीक्षाश्रमशीलानामेतेषां व्याकरणाचार्य्यपरीक्षां विना तत्पाण्डित्यस्य सौजन्यं न । इमे ग्रन्था अपि विवादग्रस्ता एवेति । एतेषां को हि दोषः ? अहो! तत्पथप्रदर्शकानान्तु कर्त्तव्यमिदं भवति । यादृशी शक्तिरार्षग्रन्थेषु निहिता तादृशी कथं स्यादनार्षग्रन्थे ! किं भोः यादृशी योग्यता कालिदासादिभिरासीत्सम्पादिता सा किं अनार्षानेतान्ग्रन्थानेवाधीत्य, आधुनिकेष्वनार्षग्रन्थेषु भाषाकाठिन्यम् । किन्तु प्राचीन–भाष्यादिष्वार्षग्रन्थेषु विषयस्वच्छता भाषायाश्च सरलता स्फुटमेव प्रतिभाति साम्प्रतन्तु संस्कृतज्ञानां कृते भौगोलिकज्ञानमैतिहासिकञ्च सर्वं वाहुल्येनापेक्षितं विद्यते । सर्वतस्तु पूर्वं वेदविज्ञानमत्यधिकम् । अत एव साम्प्रतिकान्प्रचलितान्ग्रन्थान्परित्यज्य, भाषादिषु प्राचीनार्षग्रन्थेषु च यदि पठनपाठनादि प्रणाली प्रचलेत्तदा वेदादीनां समुद्धारोऽवश्यमेव स्यादिति । अत्र नास्ति मे सन्देहः । किं वहुना भवतां सुप्रभातपाठकानामग्रे ।

# तुलसी-स्मृतिः ।

आनन्द-कानने ह्यस्मिन् तुलसी जङ्गमस्तरुः ।
कविता-मञ्जरी यस्य रामभ्रमरभूषिता ॥

महात्मनां तुलसीदास-महोदयानां कैवल्यतिथिः श्रावण शुक्ला सप्तमी विद्यते । तेषां जन्मतिथेर्यथावदनुपलम्भात् मृत्युतिथावेव तेषां स्मृति-महोत्सवो भारते बहुषु स्थलेषु सम्भवति । महात्मनस्तुलसीदासस्य विषये किं ब्रूमो वयम् । सहि खलु भगवान् महर्षिः भारतवर्षस्यार्यजातेश्च यादृशमुपकारं कृतवान्, न तादृश उपकारः केनापि कृतः, न च करिष्यते । यदि चेद्भगवान् तुलसीदासो नाभविष्यत्तदा कोटिशो हिन्दवोऽद्य विधर्माणो दुराचारिणश्चाभविष्यन् । कः खलु देशः ? कः खलु मनुष्यो भारतीयः ? यो हि भगवतस्तुलसीदासस्य पावनं गौरवञ्च नाम न जानाति । हिन्दीभाषाभाषिषु च वेदानाम्, धर्मशास्त्राणाम्, पुराणानाम्, दर्शनानाञ्चातिगूढमपि सिद्धान्तं सरल-सरल्या सरण्या आग्रामारं प्रविचारयिषुर्महर्षिस्तुलसीदासो रामचरितमानसं नाम पावनं ग्रन्थरत्नं निर्माय सनातनधर्मस्य,

महाभारत्याः, ब्राह्मण-समाजस्य विशेषतश्च हिन्दूसमाजस्य यादृशीं सेवां कृतवान् न तादृशी सेवा पण्डितकोटिभिरपि कर्तुं पार्यते। यत्र तत्र प्रतिप्रान्तम्, प्रतिनगरम्, प्रतिग्रामम्, प्रतिगृहम्, प्रतिव्यक्ति च परमपुण्यां रामचरितभागीरथीं प्रवाहयन्नयं संस्कृत-समाजस्य नितरां श्रद्धा-सम्मान-गौरव-भाजनभूतः। हिन्दीभाषाविद्वांसस्तु महात्मनस्तस्य कृते यावच्छक्यं श्रद्धामादरञ्च प्रदर्शयन्ति, परं संस्कृतज्ञा अत्र नितरामुदासीनाः सन्ति। तेषां कूपमण्डूकदृष्ट्या तुलसी-दासस्य महत्त्वमेव नास्ति। ते तत्र भवन्तं "भाखा-कवी" इति ब्रुवते। परं वास्तविकया दृष्ट्या विचारे तु महात्मनस्तुल-सीदासस्य यादृशं संस्कृताध्ययनमासीत् न तादृशमिदानीन्तने कस्मिन्नपि संस्कृत-पण्डिते दरीदृश्यते। स आसीन्महाकविः, तस्य महाकाव्ये किं नास्ति? महाभारतवत् हिन्दी-वाङ्मये रामायणमेव तादृशं विद्यते, यत्कृते "यन्नेहास्ति न कुत्रचित्" इति वक्तुं पार्यते। प्रायो भारतीय-ग्रामेषु सर्वाण्यपि धर्मकार्याणि प्रश्नोत्तराणि शुभाशुभफलानि च रामायणद्वारैव सम्पाद्यन्ते। कियदध्ययनमासीदस्य महाकवेः, कियांश्चायमासीद्विद्वानिति तस्य प्रतिज्ञा-पद्येनैव प्रत्यक्षं प्रतीयते। यथा—

नानापुराण-निगमागम-सम्मतं यत्
रामायणे निगदितं क्वचिदन्यतोऽपि।
स्वान्तः सुखाय तुलसी रघुनाथ-गाथा—
भाषा-निबन्धमतिमञ्जुलमातनोति॥

नानापुराणानाम्, निगमानाम्, आगमनाम्, रामायणस्य, महाभारतादीनाञ्च कियज्ज्ञानमासीदिति प्रतिपदमेव स्फुटी भवति। न केवलं तेषामेव ज्ञानम्, प्रत्युत नैषधरघुवंशादि काव्यानाम्, उत्तररामचरित-हनुमन्नाटक-अनर्घराघव-प्रसन्न-राघवादीनाञ्च नाटकानां श्लोकास्तदवस्था एव, क्वचिच्च ततोऽपि सुन्दरतरा रामायणे समालोक्यन्ते।

रामायणद्वारा संस्कृतभाषाप्रचारेऽपि कविप्रवरो महान्तं कार्यं कृतवान्। रामायणीय-भाषायां प्रायः सर्वे संस्कृतशब्दा एव व्यवहृताः सन्ति। एतेन न जाने कियतां मुखानि संस्कृतशब्दोच्चारणद्वारा संस्कृतानि पवित्रीकृतानि च।

साम्प्रतमत्र तेषां किञ्चित् संस्कृत-हिन्दीकाव्यं पाठकानां पुरो निवेद्यन्ते—

सीताराम-गुणग्राम-पुण्यारण्य-विहारिणौ।
वन्दे विशुद्ध-विज्ञानौ कवीश्वर-कपीश्वरौ॥

अत्र प्रसादः, कोमलता, माधुर्यम्, रूपकम्, अनुप्रासः, सारल्यम्, भाव-गाम्भीर्यं च चित्तं चोरयन्ति।

भवानी-शङ्करौ वन्दे श्रद्धा-विश्वास-रूपिणौ।
याभ्यां विना न पश्यन्ति सिद्धाः स्वान्तस्थमीश्वरम्॥

अत्रापि श्रद्धया विश्वासेन च विना न कदाप्यात्मसाक्षात्कारः कर्तुं शक्य इति व्यञ्जयन्ती कविसूक्तिः गुणालङ्कार-रमणीया रमणीयेव रमणी रमयतितरां रसिकजन-मनांसि।

अन्यच्च—

यन्मायावशवर्ति विश्वमखिलं ब्रह्मादिदेवाः सुराः
यत्सत्त्वादमृषैव भाति सकलं रज्जौ यथाहेर्भ्रमः।
यत्पादप्लवमेकमेव हि भवाम्भोधेस्तितीर्षावतां
वन्देऽहं तमशेषकारणपरं रामाख्यमीशं हरिम्॥

अत्रापि चरमं सिद्धान्तं भक्तिमार्गस्य प्रतिपादयता भगवता प्रगाढं पाण्डित्यं प्रदर्श्यते।

यथा संस्कृत-साहित्ये कवयः काव्यारम्भे प्रथमं मङ्गला-चरणानि, ततः सज्जन-दुर्जनयोः स्तुतिनिन्दे, कविकाव्य-प्रशंसाञ्च विधाय काव्य-कथामारभन्ते, तथैवायमपि महाकविः सरस-मसृणैः, भाव-गभीरैः, हृदयस्पृग्भिः, प्रसन्न-मधुरैश्च पदैः काव्योपक्रममारभते। यथाः—

नील-सरोरुह-श्याम, तरुण-अरुण-वारिज-नयन।
करौ सो मम उर धाम, सदा क्षीरसागर-शयन॥

* * *

बन्दौं गुरु पद-पदुम परागा, सुरुचि सुबास सरस अनुरागा।

* * *

श्याम-तामरस-दामशरीरम्, पाणिचाप-सर-कटितूणीरम्।
अरुण-नयन-राजीव-सुवेषम्, हर-हृदि मानस-बाल-मरालम्[1]।

* * *

---

१ 'हर-हृन्मानस-बाल-मरालम्' इतिशुद्धः पाठः—सम्पादकः

सरनि सरोज विटप बन फूले, गुंजत मञ्जु-मधुप रस-भूले ।

* * *

मलिन-बसन, विवरण, विकल, कृशशरीर दुखभार ।

* * *

सोचिय गृही जो मोहबस करै कर्म-पथत्याग ।

सोचिय यती प्रपञ्च-रत, विगत-विवेक-विराग ॥

किमेतावता रामचरितमानस-बिन्दुमात्रेण । एतस्मिन् महासागरे किं किं नास्ति, तच्च मानसादपि महत्तरे ग्रन्थेऽपि मानस-महिमा न वर्णयितुं शक्यते । सर्वथैवास्य ग्रन्थस्य महत्त्वं विस्मृत्य वयं भगवन्तं तुलसीदासं विस्मृत्य वितिष्ठामहे नैतदुचितम् ।

भक्त-दृष्ट्यापि तुलसीदासस्य स्मरणं कृत्वा पुनीमहे । कलौ, तत्रापि प्रखरतरे यवन-साम्राज्ये तुलसीदास-सदृशानां भक्तशिरोमणीनां जन्म भारतस्य आर्यजातेश्च सौभाग्यमेव ।

## "दिवा धूर्तैर्जगद्वञ्च्यते ।"

[ हृषीकेश-कथा ]

### अखिल-भारतीय-विद्वत्सम्मेलनम् ।

ग्रीष्मावकाशे प्रतिवर्षं मया हृषीकेशे यथावकाशं नूनं क्रियते निवासः । एतद्धि प्रशान्त-पावनं रमणीयतरं महर्षीणां तपःस्थानं प्रकृतेर्लीलाक्षेत्रं नितरामाकर्षति हृदयम् । जनसम्मर्दबहुले हरद्वारे नास्ति तावानानन्दो यावान् हृषीकेश-क्षेत्रे । उत्तराखण्डस्य केन्द्रभूतं शम-सत्वप्रधानमिदं क्षेत्रं तामसिकैर्दुराचारिभिर्दुर्दोदूयमानमिदानीं घृणामुत्पादयति । सनातनधर्मस्य दुर्भद्येऽस्मिन् दुर्गे, सनातनधर्मस्य नग्नचित्रमालोचयतामस्माकं हृदि दारुणा वेदना समुत्पद्यते । अत्र दुर्गमे दुर्गे महत्कार्य-सम्पादनाय सत्य-प्रतिज्ञानामुत्साहवतां धर्मश्रद्धावतां क्रान्तिकारिणां नवयुवक-कार्यकर्तॄणां महत्यावश्यकता वरीवर्ति । एतद्विषये तु पुनः कदापि प्रकाशं पातयिष्यामः । साम्प्रतं प्रकृतमनुसरामः ।

तुलसीदासस्य भक्तिविषये, काव्यालोचनविषये बहु समालोचनीयं वरीवर्ति, पुनः कदापि समालोचयिष्यामः ।

अद्यापि ग्राम्यजनतायामियती धार्मिकी श्रद्धा केवलं तुलसीरामायणद्वारैव विद्यते, यां दृष्ट्वा सनातनधर्मध्वजिनो गौरवं मन्यन्ते । न केवलं हिन्दीभाषायामेव कनारी-तेलगू-आन्ध्र-मलयालम-उडियाप्रभृतिष्वपि स्वल्पप्रचारासु भाषासु तत्तद्देशीयच्छन्देषु रामायणस्यानुवादा स्तमेवादर्शीकृत्य विरचिताश्च रामकथाः प्रत्युटजं जेगीयन्ते इति परं सौभाग्यम्, पुण्यविलसितञ्च भगवतो महात्मनस्तुलसीदासस्य भक्तशिरोमणेः ।

अद्य वयमपि तत्स्मृति दिवसे तत्स्मरणेनात्मानं कृतकृत्यं मन्यामहे ।

नित्यानन्द-निकेतनम् काशी<br>श्रावण-शुक्ल-सप्तमी १९८६ } —श्रीकेदारनाथ शर्मा सारस्वतः

एतस्मिन् वत्सरे प्रिया-विप्रयोग-विह्वलोऽहं यदा हरद्वारक्षेत्रे आसम्, तदा तत्रत्येभ्यः पण्डितेभ्यः श्रुतम् यत्, ज्येष्ठ-कृष्ण-त्रयोदशीतो दिनचतुष्टयं यावत् हृषीकेशे अखिल-भारतीयं विद्वत्सम्मेलनं भविष्यति । तच्छ्रुत्वा मुदितमानसेन मया चिन्तितम्, यदिमे दिवसाः समीचीनतया सरसतया च व्यत्येष्यन्ति । यतो विविध-विदुषां विपुलेविमर्देऽस्मिन् मनोरञ्जनं ज्ञानवृद्धिश्च भविष्यति । परं दिनत्रयानन्तरमेव हरद्वारे यत्र तत्र भित्तिषु महान्ति विज्ञापनानि समवलोकितानि, येषु लिखितमासीत्, यत् "अखिल भारतवर्षीय-विद्वत्सम्मेलनस्य, संस्कृतमहामण्डलस्य, परीक्षापीठस्य एकादशतममधिवेशनं दिनचतुष्टयं यावत् भविष्यति" इति । तदवलोक्य तु तदैव मम मनसि समागतं यत् "प्राचीनेन सिद्धहस्तेन केनापि गुरुणा हृषिकेश-सदृशे पर्वतैककोणे सनातनधर्मस्य विशाले वक्षसि विस्तारितं जलम्, मुग्ध-कुरङ्गाः पतिष्यन्ति । साधु, सुचतुरोऽयं कश्चन गुरुः" इति । एतस्य सम्मेलनस्य अन्येषाञ्च सम्मेलनानामीदृशानां विषये मया सुप्रभातस्य विशिष्टाङ्के सुतीव्रा टिप्पणी विहितासीत् । एतस्य रहस्यम्, रहस्यानि च

गुप्तपत्राणि मया सुप्रभात-सम्पादनं कुर्वता समासादितान्यासन् । अस्माभिर्विचरितमासीत् यत् "संस्कृत-संस्थास्तु कार्यन्तु भवत्येव नहि; तासां नाममात्रस्थितिर्भवति । यदि ताभ्यः कोऽप्युपकारो न भवति चेदपकारस्तु न भवति । तदा तिष्ठन्तु ता अस्माकं बलवृद्धिरेव स्यात्, परं शनैः रहस्यं विदित्वा तु विदग्धान्तःकरणा वयं संस्कृत-समाजे, ब्राह्मण-समाजे च नैतादृश अत्याचाराननाचारांश्च कदापि सहितुं प्रभवेम । अन्धेन नीयमाना दिवान्धा हिन्दूजनता नितरां पतिता विद्यते । यदि कश्चित् कथयेत् यत् 'विष्ठाभक्षणेन मुक्तिर्लभ्यते' तदा भारतीया धार्मिक-जनता सादरं सश्रद्धञ्च सबहुमानञ्च विष्ठां भक्षयितुं सोत्साहं प्रवृत्ता भवेदिति सुनिश्चितं कथयामः । सन्त्येव राधास्वामी-पुष्टिमार्ग-बीजमार्ग-चोलीपन्थ-प्रभृतयस्तादृशा एव शतशः सम्प्रदायाः । भवतु ! अयं सारांशो यत् अन्धजनतायां तत्रापि पर्वतकुक्षौ तत्रापि मुग्धानां दाम्भिकानाञ्च प्रधानक्षेत्रे अखिलभारतीय-विद्वत्सम्मेलन-संयोजकस्य जाल-विस्तारः समुचित एवासीत् । तत्रापि संस्कृत-पण्डितास्तु महात्मन एव भवन्ति । तेभ्यस्तु धूर्ततया सर्वमपि कार्यमकार्यं वा केनापि कारयितुं शक्यते । यतस्ते मुमूर्षवो विनाशोन्मुखाश्च सन्ति ।

ज्ञातरहस्योऽहं तूष्णीं सम्मेलनावसरं प्रतीक्षमाणोऽवस्थितवान् । अत्रान्तर एवास्माकं सुपरिचितौ, प्रियसुहृदौ श्रीशिवदयालुमिश्र-श्रीविवेकानन्दसन्यासिनौ हरद्वारमागत्य पण्डितेभ्यः सदस्यशुल्कं गृह्णन्तौ निमन्त्रणञ्च ददतौ सहसैव सम्मिलितौ । ताभ्यां साग्रहं निमन्त्रणमवाप्य मया सम्मेलन-संयोजकानां विषये स्वीया विचाराः प्रकटीकृताः, सुप्रभातस्य टिप्पणी च प्रदर्शिता । उक्तञ्च यत् अखिलभारतवर्षीय-संस्कृत-साहित्य-सम्मेलनं विहाय संस्कृतस्य नान्या काचन तादृशी महती संस्था विद्यते । भवन्तस्तु धूर्तजाले समापतिताः संस्कृत-समाजं कदर्थयिष्यन्ति, निन्दयिष्यन्ति च । तैरप्युक्तम्, "सत्यमसौ सम्मेलन-संयोजको महान् धूर्तः, अस्मान् प्रोत्साह्य किञ्चिन्मुद्रादिकं गृहीत्वा विविधव्याजं प्रदर्श्य प्रेषिताः, साम्प्रतं वयं मध्ये मार्गं पतिताः स्मः । कार्यामवसादितम् । इदानीं कथमपि लोकलज्जा-निवारणाय, परिश्रम-साफल्याय चास्माभिः किमपि कर्त्तव्यमेव । किंकुर्मः मग्नाः स्मः पङ्के ।" इत्यादि ।

यथा समयं हृषीकेशे गत्वा मया ज्ञातम् यत् नागरिकेषु, छात्रेषु, सन्यासिषु, यत्र, तत्र सर्वत्रैवेयं सम्मेलन-कथा प्रचलति यत् "केनापि धूर्तेन वञ्चिता अत्रत्याः पण्डिताः, मोहान्तश्चेति।" मया च सर्वमवगत्य स्वागतसमितेरुपाध्यक्षाः श्रीशिवदयालु मिश्राः प्रोक्ता यत् "इदानीं न केऽपि पण्डिताः समागताः, अन्येषां कथा तिष्ठतु; हरद्वार-सहारनपुर-देहरादून प्रभृति-पार्श्ववर्तिनगरनिवासिनोऽपि पण्डिता न समागताः-अत इदानीं साधित-सामग्र्या 'हृषीकेश विद्वत्सम्मेलनम्' इत्यनेन नाम्ना सभाकार्यं कथमपि समापनीयम् । 'अखिलभारतीय' पदस्य दुर्दशा न विधेया ।" परं मिश्रमहोदयेन साभिमानमुक्तं यत् "एवमेव भवति, कोऽप्यागच्छतु, मा वा आगच्छतु, वयन्तु अखिल-भारतीयमेव सम्मेलनं विधास्यामः ।" कृत निर्बन्धा अपि ते यदा नाग्रहं त्यक्तवन्तस्तदा मया प्रोक्तम्, यत् "नास्माभिः प्रत्यक्षमिदमालोकयितुं शक्यते जनतावञ्चनात्मकं कर्म । अहं निःशङ्कं विरोधमाचरिष्यामि ।" तेन च महोदयेन सर्वत्र सम्मेलन-कार्यकर्तृषु प्रचारः कृतो यदयं सुप्रभात-सम्पादकः सम्मेलन-विघटनं विधास्यतीति ।" अहमपि तूष्णीं स्थितो हृषीकेश-रत्नभूतानां आस्तिकशिरोमणीनां पण्डितप्रवराणामाहिताग्नीनां माननीय-श्रीबालकराम शास्त्रिणामस्मद्बन्धुभूतानां सविधे गत्वा सविस्तरं रहस्यमश्रावयम् । इमे खलु सत्ययुगीया विद्वदग्रेसराः हृषीकेश एव नहि, समस्तेऽपि तस्मिन् प्रान्ते अद्वितीयाः प्रभावशालिनश्च वैदिका विद्वांसः सन्ति । एतेषां सत्वमयः स्वभावः, सत्यमयं परमपूतञ्च जीवनं अनुकरणीयं विद्यते । एतेऽपि तत्र प्रायो विंशतिमुद्रामितं साहाय्यं दत्त्वा, तस्य च दुरुपयोगं स्वार्थपरताञ्चालोक्य विपण्णा आसन् । सम्मेलन-संयोजकैः कथितमासीत् यत् महामहोपाध्यायाः डा० गङ्गानाथझा, एम० ए०, डी० लिट्०-महोदयाः समापतित्वमङ्गीकरिष्यन्ति । अन्ये च सुप्रसिद्धा भारतवर्षीयाः काशीस्थाश्च विद्वांसः समेष्यन्ति । परमिदं धौर्त्यमालोक्य ते भृशं दुःखिता अभवन् । तत्रैव च मया दृष्टं यत् सम्मेलन-संयोजकेन "आचार्य" नामकमेकं किमपि हिन्दीपत्रमपि प्रकाश्यते । तत्पत्रं यदाकदाचिद्वि-

शिष्ट-समये निःसरति यथावसरं यथेच्छं च प्रकाशमेति । नैतत् पाक्षिकं साप्ताहिकं मासिकं वा किमपि । केवलं जनानां मुण्ड-मोचनाय, मायाजाल-प्रसाराय च तेनैतदपि साधनं संस्थापितमस्ति । तत्र ज्ञातं यत्-अत्र दश, द्वादश वा सम्मेलनानि भविष्यन्ति । केचन नामतः स्मर्यन्ते । यथा—अखिल भारतीय विद्वत्सम्मेलनम्, संस्कृत-महामण्डलाधिवेशनम्, अ० भा० संस्कृत-परीक्षापीठस्य उपाधिवितरणोत्सवः ( Canvocation ), अ० भा० महिला महापरिषद्, अ० भा० हिन्दू महासम्मेलनम्, अ० भा० छात्र-सम्मेलनम्, अ० भा० आयुर्वेद-सम्मेलनम्, अ० भा० सम्पादक-सम्मेलनम्, सङ्गीत-सम्मेलनम्, एवमेव बहूनां सम्मेलनानां कार्य-विवरणं मुद्रितमासीत् । हन्त भोः ! हन्त !! कियती विडम्बना ! कियान् दम्भः ! कियच्च मौढ्यं जनतायाः !

एवं प्रचलत्येव विचारे पलायितेन तेन सम्मेलनाध्यक्षेण हिन्दी-आँग्ल-समाचारपत्रेषु तडित्सूचना मुद्रापिता यत् साम्प्रतम् अखिलभारतीयं विद्वत्सम्मेलनं हृषीकेशे न भविष्यति । जुलाई मासस्य ३० तमे दिवसे प्रयागनगरे निर्णयो भविष्यतीति, एतदवलोक्यैव वराकाणां स्वागतसमितिसदस्यानामुत्साहभङ्ग अभवत् । केषाञ्चन स्वागतसमितिपदाधिकारिणां स्वार्थहानिरपि समभवत् । यतस्ते एकदैव दैव-योगात् अखिल-भारतीय-विद्वत्सम्मेलनस्य स्वागत-समितेः पदं प्राप्तवन्त आसन् । तेषामियमिच्छा मनस्येव स्थितेति ते नितरां भग्नोत्साहाः सञ्जाताः । साम्प्रतं सभापति-निर्णये हरद्वारस्थऋषिकुल-ब्रह्मचर्याश्रम-प्रधानाध्यापकानां श्रीघुटरझामहोदयानां निर्वाचनं कृत्वा तेऽपि समानीताः । घुटरझा महोदयाः साम्प्रतं परमोत्साहवन्तो नवयुवका अस्माकञ्चान्तरङ्गप्रणयिनः सन्ति । इमे विविधशास्त्रेषु लब्धोपाधिका आचार्या आङ्ग्लभाषाया परीक्षां ददति । वर्षद्वयाभ्यन्तर एव बी० ए० परीक्षामुत्तरिष्यन्तीत्याशास्महे । इमेऽप्यविदितरहस्याः सभ्या अत्रागत्य सर्वां स्थितिमवालोकयन् । मयापि तेभ्यः स्वकीयाः भावाः सुस्पष्टं प्रतिपादिताः ।

[ शेषमग्रे ]

—श्रीकेदारनाथशर्मा

# सम्पादकीयम्

## जरठस्य कामुकत्वम् ।

विगतमासेषु काशीस्थेन सुप्रसिद्धचिकित्सकेन श्रीमता त्र्यम्बकशास्त्रिणा सप्ततिवर्षात्मके वयसि स्वकीयः सप्तम अष्टमो वा विवाहो विहित इति तत्तद्भाषासमाचारपत्रेषु सुस्पष्टं प्रकाशितोऽयं समाचारः । यत्र तत्रास्माभिर्नितरां भीषणेन रूपेण विकटैश्च शब्दैरस्य विवाहस्य निन्दा समालोकिताविद्यते । बहुषु च सभासु प्रस्तावद्वाराऽस्य विवाहस्य विरोधः समजनि । काशीस्थेन नामधारिणा पण्डितपत्रेणापि प्रकारान्तरेण विवाहसमर्थनं कुर्वता कथमपि विवाहस्यास्य विरोध एव कृतः । एतस्मिन् विषये साम्प्रतं किमपि वक्तव्यं नावशिष्यते । अस्माभिस्त्विदमेव साभिमानमुद्घोष्यते यत्, साम्प्रतं ये सनातनधर्मनाम्ना रोदनं कृत्वा हाहाकारं कुर्वन्ति, दम्भजालेन च मुग्धान् मुण्डयन्ति, सनातनधर्मञ्च स्वीयां पैत्रिकीं सम्पत्तिमामनन्ति, ते प्रायो धूर्ताः, वञ्चकाः, सनातनधर्मस्य प्रच्छन्नशत्रवो दाम्भिका अनार्याचरणाश्च सन्ति । हन्त ! साम्प्रतमेव यैः पण्डितपदं कलङ्कयद्भिरिदमुद्घोषितमासीत् यत् " द्वादशवर्षानन्तरमप्यविवाहिता ब्राह्मणकन्या वृषलीत्वमापन्ना कृतप्रायश्चित्ताऽपि न कदापि समाजग्राह्या भविष्यति । सा च पित्रादिभिः परित्याज्या,

नो चेत्तेऽपि वृषलत्त्वमवाप्स्यन्ति ।' इत्यादि । वयं तान् पृच्छामो यत् किं भोः ! सा त्रयोदशवार्षिकी ब्राह्मणकन्या किं वृषलत्वं न गता ? यदिगता चेत्, तत्पित्रादयस्तत्कामुकश्च जरठः शास्त्रिमहोदयोऽपि वृषलत्त्वं न गतः ? यद्येवं तदा तेषां सम्बन्धिनः, सहवासिनः, सहभोक्तारश्च किं न पतिताः सन्ति ? यदि सन्ति चेत्तदा किं न दाक्षिणात्य-समाजस्त-त्यान्दोलनं करोति ? किं न तं जातिबहिष्कृतं करोति ? एव मेवान्यदपि विद्यते महदाश्चर्यकरं यत् सा कन्या सगोत्रैवासीत् शास्त्रिचरणानाम् । विवाहात् पूर्वमेव दत्तक-विधानं कृत्वा तस्यास्य दोषस्य परिमार्जनं कृतम् । तदप्यशास्त्रीयमेव । त्रयोदशवर्षात्मिकायाः कन्यायाः सद्यो दत्तकविधानम्, तदपि च जघन्यकार्यायेति नितरां लज्जाजनकं धर्मविरुद्धञ्च । एत-द्दन्तः केचन भोजन-भट्टा द्रव्यलोभेन कार्यकर्तार आसन् । हन्त ! ते के ? न जानीमहे !

साम्प्रतं सर्वाऽपि मण्डली पण्डितपदभाजां पण्डित-राजपदभाजाञ्च निषण्णा सन्तिष्ठते । वदति च यदयं गोपनीयो विषयः । न वयमत्र किमपि वदिष्यामः । कि-मेतदेव धर्मध्वजित्वम् । मालवीय-महोदयानामुपरि पङ्क-प्रक्षेप्तारो गोवसाभक्षकानाम्, गोमांस-विक्रेतृणाम्, व्यभिचार प्रचारकाणां धनिकानां चाटुकाराः स्वयमेव पापपङ्के निमग्ना कृष्णमुखमादधाना अपि न त्रपन्त इति परा सीमा धाष्टर्यस्य ।

केचन प्राचीनमुदाहरणं प्रदर्श्य विवाहमिमं समर्थयन्ति यत् च्यवनेन, शन्तनुना, दशरथेन अन्यैश्चैवं कृतमिति । अयि भो ! अन्धेन नीयमाना अन्धाः ! किं च्यवनादीनामिव विद्यते भवत्सु सामर्थ्यम् । अहरहो पापमाचरन्तो भवन्तो च्यवनं निदर्शयन्ति । क्षत्रियं वा शन्तनुम्, यद्येवमेव निदर्शनं चेत्तदा चन्द्रेण गुरुपत्नीगमनं कृतम्, इन्द्रेण ब्राह्मणपत्नीगमनं कृतम्, यदुभिर्मुनिभिर्महर्षिभिश्च राजकन्यानां वैश्यकन्यानां परिणयः कृतः, पराशरेण धीवरकन्या समुद्वाहिता, व्यासेनापि तथैव कृतम्, एवं बहूनि साधकान्यपि प्रमाणानि मेलिष्यन्ति । किमेतावता ? भवन्तोऽपि तथा विधातुं क्षमाः स्युश्चेत् कृतं विवादेन । प्राचीनानि निदर्शनानि तु मेलिष्यन्त्येव । प्रथममप्यासन् पापाः नास्तिकाः, कामुकाः, जरठाः; परं ते नास्माकमादर्शभूताः । तेषां नाम ग्रहणेन कुशका-शावलम्बनेन च कार्यं न सेत्स्यति ।

शास्त्रिणां बालकोऽपि वर्त्तते षोडशवर्षवयाः । तस्यो-द्वाहमकृत्वैव प्रपौत्री समवयस्कायाः कन्यायाः निर्दयं पाणि-पीडनं कुर्वता कम्पमानेन जरठेन कामुकत्वस्य पराकाष्ठा-प्रदर्शिता । नैतन्नवीनं समाजे । बहवः सन्ति श्रेष्ठिनो ब्राह्म-णाश्च ये धनबलेन एवं विदधति । तेषामेवासीत् ब्राह्मण सम्मेलने विशिष्टं साहाय्यम् । हन्त ! ब्राह्मणसमाज ! निश्चित एव निकटे भविष्यति ते सर्वनाशः । तव कृपयैव समाजे व्यभिचार-दुराचार-विधवाविवाह-भ्रूणहत्या-प्रभृतयः पापा आर्यजातिमिमां विलोप्तुं प्रभूता भवन्ति । भवानेवा-नर्थस्य कारणमस्य, निरीहकन्यकानां जीवनग्रहीतारो मानवापसदाः । भवतां कृते नास्ति स्थानं नरकेऽपि । विनाशकाले विपरीतेयं भवतां बुद्धिरिति विनाशाय सन्नद्धाः सन्तिष्ठन्ताम् ।

संस्कृत-साहित्य-समाजः सघृणमेतत्कृत्यं निन्दति, परञ्च विषीदति ।

* * *

ब्राह्मण-परिषत्-प्रयत्नः ।

चिरसंस्थापितायाः बङ्गीयब्राह्मणपरिषदो वृहदायोजनं ब्राह्मणमहासम्मेलननाम्ना काश्यां सञ्जातमासीत् । तत्र च यथा स्वार्थपरायणैर्महत्त्वाकाङ्क्षिभिः कैश्चन द्वित्रैः पण्डितैः स्वार्थसाधनाय नियम-हत्या, धर्म-हत्या च कृता साऽपि विदितप्रायैव पत्रपाठकानाम् । तेष्वेव दिवसेषु पण्डित सम्राजां भारतविख्यातविदुषां विद्यावयोवृद्धानां विद्वत्समाज नेतृणां संस्कृत-साहित्य-समाज-सभापतीनां महामहोपाध्याय आचार्य श्रीप्रमथनाथ भट्टाचार्यमहोदयानां प्रयत्नेन देशकाल-पात्र-शास्त्राद्यनुसारं धर्मव्यवस्था-सम्पादनाय कलिकत्ता-नगरे अखिलभारतीय-ब्राह्मणपरिषत् संस्थापिता आसीत् । तया च साम्प्रतं पञ्चविंशतिसङ्ख्यकेभ्यो विद्वद्भ्यः षष्टिमुद्रावार्षिकी-वृत्तिः प्रदीयते । येन ते धर्मशास्त्राणि पुराणानि इतिहासांश्चा-वलोक्य धर्मव्यवस्थापकान् ग्रन्थान् प्रणेष्यन्ति । श्लाघयामो वयं हृदयेन पुण्यमिमं प्रयत्नम् ।

* * *

## शुभ-समाचारः ।

एतत्तु विदितचरमेव सुप्रभात-पाठकानां यच्छ्रीमतां गिरीशशुक्लमहोदयानां कैवल्यलाभानन्तरं हिन्दूविश्वविद्यालये जैनदर्शनाध्यापकपदं रिक्तमासीत्, तत्रास्माकं पूज्यपादाः गुरुचरणाः श्रीकविचक्रवर्त्तिमहोदया अध्यापकत्वे नियुक्ता आसन् ।

दौर्भाग्याद् ग्रीष्मावकाश एव तत्रत्य-साहित्य-प्रधानाध्यापकाः पण्डितप्रकाण्डाः पूज्यपादाः श्रीचन्द्रधरशास्त्रिमहोदया अपि काशीवासं कृतवन्तः । तेषामपि स्थानं रिक्तमासीत् ।

हिन्दूविश्वविद्यालयाधिकारिभिः साम्प्रतमेव प्रधान-साहित्याध्यापकपदे महामहोपाध्यायानां कविचक्रवर्त्ति-महोदयानां नियुक्तिः कृता । जैनदर्शनाध्यापकपदे च श्रीमतामस्मत्सुहृदां विद्वद्वराणां श्रीमहादेवशास्त्रिणां नियुक्तिः कृता । इमे खलु पाण्डेयमहोदयाः साहित्याचार्याः, व्याकरणाचार्यास्तु सन्त्येव; परं न्यायशास्त्रनिष्णाता दर्शनाचार्या अपि सन्ति । इमे अपि नवयुवकाः, परमोत्साहवन्तः, जीवनवन्तः, सुशीलाः, शान्तप्रकृतयो विद्याभ्यासनिरताः सन्ति । हिन्दू-विश्व-विद्यालये द्वादशवर्षाणि यावदेभिर्यथाविधि शास्त्राध्ययनं कृतमासीत् । वर्षद्वयात् गोयनका-संस्कृत-महाविद्यालये प्रधान-साहित्याध्यापका आसन् । एतेषां योग्यपदलाभेन समुन्नत्या च परं मुदितावयं सादरमभिनन्दयामस्तान् । धन्यवादांश्च वितरन्तो महतीं समुन्नतिमेतेषां कामयामहे ।

* * * *



श्रीमत् पण्डित ठाकुरदत्त शास्त्रिणः ।

Preshed by Gaurinath Pathak and printed by Rameshwar Pathak at the Tara Printing Works, Benares.

चतुर्थ-पञ्चमाङ्कौ | १९८६ वैक्रमाब्दाः | सौर-श्रावण-भाद्रयोः
No. 4-5 | 1929 A. D. | August-September.

# सुप्रभातम् ।

संस्कृत-साहित्य-समाजस्य सचित्रं मासिकं मुखपत्रम् ।

तिमिर-ततिमुदस्यद् भेदताराविलुम्पन्, नयदधि-सुरभाषाभावि जागर्तिमुच्चैः ।
विबुध-विहग-वादैराह्वयद्भाग्यभानुम्, विलसतु भुवनेस्मिन् सर्वतः 'सुप्रभातम्' ॥

वैदिक-शिरोमणिः



श्रीविद्याधर शर्म्मा गौडः अग्निहोत्री ।

सम्पादकौ—
श्रीकेदारनाथशर्म्मा सारस्वतः—श्रीविन्ध्येश्वरीप्रसादशास्त्री च
व्यवस्थापकः—
श्रीसत्यनारायणशास्त्री, कविराजः भिषगाचार्य्यः

वार्षिकम्मूल्यम्—३) माननीयेभ्यः—१०)
वैदेशिकेभ्यः—६) छात्रेभ्यः—१॥)

# विषय—सूची।

१—गीर्वाणभारती-स्तवनम्—
श्रीचैतन्यखड्गः, न्यायतीर्थः ... ... ६५
२—कयोश्चिन् छात्रयोः संलापः—
मीमांसाकेशरी पण्डित चिन्नस्वामि शास्त्री .. ६६
३—कालीदह-प्रासादः—
श्रीगोपीकृष्ण वैद्यः, व्याकरणाचार्यः, काव्यतीर्थः ६९
४—अभ्यर्थना—
श्रीमाधवानन्दः पर्वतीयः ... ... ७३
५—वृजिनां गणराज्यम्—
श्रीरामोदारः स्वामी साङ्कृत्यायनः ... ७४
६—वेदार्थ-प्रक्रिया—
श्रीरामप्रसाद शास्त्री धर्मशास्त्राचार्यः ... ७९
७—करुण-क्रन्दनम्—
श्रीरमापति शास्त्री ... ... ... ८२
८—भारत-सम्बन्धे कृष्णविनयः—
श्रीभीमसेन शर्म्मा शास्त्री ... ... ८२
९—कान्तापृष्ठवर्णनम्—
श्रीरविशङ्कर दयाशङ्कर शास्त्री ... ... ८४
१०—भृङ्गान्योक्तयः—
श्रीजीवनाथ झा शर्म्मा ... ... ... ८४
११—प्राचीन-भारते पारदेशिक-व्यापारः—
श्रीशिवशङ्कर प्रसादः, बी ए०, ई० इडी० ... ८५
१२—उपदेश लहरी—
शास्त्री अमृतलाल शर्म्मा, वेदान्त-व्याकरणतीर्थः ७८
१३—प्रश्नाः—
श्रीनिरीक्षणपतिमिश्रः ... .. ८७
१४—श्रीकृष्णाह्वानम्—
श्रीचक्रदत्तशर्म्मा बहुगुणः ... ... ८७
१५—संस्कृते हिन्दी-समस्या-पूर्त्तिः—
सङ्कलयिता—श्रीतारादत्त पन्तः, साहित्याचार्यः ८८
१६—शोकोद्गारः—
श्रीरामसुभग ओझा ... ... ... ८८
१७—नरेन्द्रान् प्रत्यावेदनम्—
श्रीनन्दकिशोर शर्म्मा साहित्याचार्यः... ... ८८
१८—स्वर्गीयस्मृतिः—
श्रीकुलानन्द शर्म्मा व्याकरणाचार्यः ... ... ८९
२६—संस्कृत-समाचाराः—
श्रीरामचन्द्र मिश्र-सुरेन्द्रझा-शर्म्माणौ
श्रीबालमुकुन्द शर्म्मा ... ... ... ९०
श्रीवासुदेवशर्म्मा, जोशी
श्रीउमानाथ मिश्रः, काव्यतीर्थः
२०—समालोचनम्
२१—सम्पादकीयम्

# चित्र-सूची।

१—२—कालियादेह प्रासादः, तस्य चैकं दृश्यम्
३—वृद्ध-बाल-विवाहः ( व्यङ्ग्यचित्रम् )
४—वैदिक-शिरोमणिः, अहिताग्निः श्रीविद्याधर शर्म्ममहोदयः।




विविध-विषय-विभूषितम्, अद्वितीयम्, सचित्रम्, संस्कृत-मासिक-पत्रम्।

| | | |
|---|---|---|
| षष्ठ-वर्षं | सौर—आषाढ़े १९८६ विक्रमाब्दीये | तृतीयोऽङ्कः। |


## गीर्वाणभारतीस्तवनम्

अपार-साहित्य-विभूषितां त्वा-
मध्यात्म-सद्दर्शन-दिव्यदेहाम्।
श्रेयःसमाराधकसत्कृताङ्गाम्
गङ्गोपमां सर्वजनः स्तवीति ॥ १ ॥
त्वमेव सत्काव्य-विशेषबोध-
विज्ञापिताशेषमनोरथाप्तिः।
त्वमेव बोधार्णवसंभवाऽसि
सन्नीतिरत्नव्रजरत्नराशिः ॥ २ ॥
प्रचण्डविज्ञानगभस्तिमाला-
प्रणाशिताऽज्ञानघनान्धकारा।
शुभा विभूषा वरभारतस्य
सदोन्नतिः स्यात्तव मे समीहा ॥ ३ ॥
शान्तिक्षमामार्दवसद्गुणौघान्
सदा स्वभक्तान् बहु शिक्षयन्ती।
समस्तभाषा-जननी त्वमेव
महर्षिवृन्दैरतिवन्दनीया ॥ ४ ॥
विशुद्धपुण्यातिशयेन लभ्ये!
सदानुभाव्ये! भुवि भव्यभावैः।
कवीन्द्रमुख्यैः सततं स्तुते! ते
भूयात् प्रचारो भुवनत्रयेऽस्मिन् ॥ ५ ॥
नानाकलालङ्कृतकान्तकाये!
विकामसाधुप्रणताङ्घ्रिपद्मे!
समादरोऽभूत् तव पूर्वकाले
कथं तदास्यं मलिनायतेऽद्य ॥ ६ ॥
न तादृशं सौष्ठवमस्ति मान्ये!
भाषात्मकं यत्त्वयि विद्यमानम्।
अन्यत्र भाषासु भुवस्तलेऽस्मिन्
त्वमेव वन्द्याऽमितशर्मदा च ॥ ७ ॥
सुरासुरैः संततसंस्तुतायाः
सर्वादृतायास्तव दुर्निरीक्ष्याम्।
दशां विचित्रां हि निरीक्ष्य केषाम्
मनो न दूयेत विचक्षणानाम् ॥ ८ ॥

—श्रीचैनसुखदासो न्यायतीर्थः।

# कयोश्चित् छात्रयोः संलापः।

ले०-" मीमांसाकेसरी " पण्डितप्रवर श्रीचिन्नस्वामि शास्त्री ( हिन्दू विश्वविद्यालय-मीमांसाध्यापकः )

चिरन्तनवचोऽम्बुधिं परिविलोड्य सारं ततो,
नयोच्चयमुदारधीरुदधरन्मुनीनां वरः।
य आदिनयकोविदस्तमहमादरादन्वहं,
नमामि शिरसा मुनिं विगतकल्मषं जैमिनिम्॥

वंशीधरः—सखिवर्य शशिकान्त! चिराद्दृष्टोऽसि, अपि कुशलं सानुजस्य भवतः? अपि समुचितमुदश्चत्यध्ययनम्। अपि कुशलिनो गुरुवर्याः? किं ब्रवीमि ते भागधेयपरम्पराम्। प्रथमतो वासस्तावदमरधुनीपरिसरे तन्नीरकणपरिपूते, सेवनं चानुदिनमिन्दुकलावतंसस्य भगवतो विश्वभर्तुर्भगवत्या अन्नपूर्णायाश्च, परिशीलनं च पङ्क्तिपावन्या भगवत्या मीमांसायाः। सर्वमिदं समुचितमेव भवतो विद्वत्कुलप्रसूतस्य। कस्मिन् ग्रन्थे मीमांसायामध्ययनमिदानीं प्रचलति?

शशिकान्तः—वयस्य वंशीधर, सर्वं कुशलं भगवतो विश्वेशस्यानुकम्पया। प्रचलत्यप्यधीतिरापरितोषादात्मनः। परंतु.........

वंशीधरः—किमर्धावशिष्ट एव वचसि वृणोषि मुखम्। पूरय वक्तव्यशेषम्। किमस्ति क्वचिदंशे त्रुटिः? किं नितान्तं गोपनीयम्? येन बलान्निस्सृतमपि निगूहितुमिच्छसि।

शशिकान्तः—नास्ति नितान्तगोपनीयम्। अपितु जिहेमि कथयितुम्।

वंशीधरः—अरे! सुहृदि गोपनीयं लज्जनीयमप्यस्ति भूतले? यद्येवं मा माभितःपरं व्यपदिश सुहृदिति।

शशिकान्तः—मा कुप्य मित्रमणे! यदाहं पतितो भवच्चक्षुषि तदा क्व गन्तुं पारयेयं वक्तव्यं सर्वमनुक्त्वा। बलान्निस्सारणशीलो हि भवान् प्रयत्नसुच्छादितस्याप्यर्थस्योपायेन। किन्तु प्रतिज्ञान्यथाकरणजनिता लज्जा भीतिश्चोदेति किञ्चिदिव प्रथमतः।

वंशीधरः—मित्र! सेदानीमपगता भवेत्। कथय विस्रब्धं का वा प्रतिज्ञान्यथा कृतेति।

शशिकान्तः—जानात्येव भवान्, यदाहं गृहान्निर्गतः,तदा मत्पितृचरणैराज्ञप्तम्-वाराणसीं प्राप्य सर्वेषामादौ कुलविद्या पूर्वमीमांसैवाध्येयेति। मयापि तथैव प्रतिज्ञातमिति।

वंशीधरः—सखे! न केवलं जानामि। अद्यापि तथैव विश्वसन्नप्यस्मि। किं तदन्यथा संवृत्तम्?

शशिकान्तः— तदेव कथयितुं लज्जेऽहम्।

वंशीधरः—वयस्य तिष्ठतु तावत् स्वप्रतिज्ञोल्लङ्घनमेकत्र कोणे। कथं तत्तादृशानां पितृचरणानामप्याज्ञातिलङ्घने धाष्टर्यमासादितं भवता?

शशिकान्तः—शृणु त्वमवहितो विस्तरात् ब्रवीमि।

वंशीधरः—अनुमिनोम्यहं यद्वदिष्यति भवान्। तथापि शुश्रूषे भवन्मुखादेव। अतो वद सर्वं तथ्यतो यद्वृत्तम्।

शशिकान्तः—वयस्य! प्रस्थाय गृहात् तस्मिन् दिने, आगत्येमां पुण्यपुरीं, प्रातरेव प्राप्तनगरोऽपि अपरिचितपूर्वतया प्रथमतोऽनुपलब्धस्थान इतस्ततः पर्यटन्नासायम्, अन्ततोऽस्मद्देशीयेन केनचित् दैवात्

सङ्गतः, तेनैव प्रदर्शितं स्थानमेकं प्राप्य तत्र स्थित एव क्वचिदपवरके हस्तस्थितं वस्तुजातं निक्षिप्य यावद् बहिर्निस्सरामि तावदकस्मात् तत्र सङ्गतान् आत्मसदृशाननेकान् स्वहस्तधृतपुस्तकान् अस्मद्देशीयान् विद्यार्थिनः। तेऽपि मां दृष्ट्वैव स्वदेशीयं ममतापहृतचेतसो मन्निकटमागत्यापरिचितपूर्वमपि मां कुशलमपृच्छन्। ततः तदन्यतमेन केनचिदुपदर्शितां सरणिं प्राप्य भगवतीं भागीरथीं अतिप्रीतमना अवागाहिष्यतिपावनं तत्सलिलम्। स्नात्वा च, प्रातरारभ्यानशनतया बुभुक्षया पीडितः सङ्क्षेपेणैव सन्ध्यामनुष्ठाय तेनैव साकं मार्गदर्शकेन तावत्पर्यन्तं तत्र स्थितेन स्थानमागत्य, तद्दत्तेनाशनीयेन क्षुधं शमयित्वा, श्रान्तस्तस्मिन्नेवापवरके सुखमस्वाप्सम्। उत्थाय च प्रातःशयनीयात् बहिरागत्य यावत् पश्यामि तावत् सर्वेऽप्यधीतिनोऽगच्छन् स्वस्वगुरुगृहं प्रत्यध्येतुम्। एककोऽहमनभ्यस्तमार्गोऽपि कथंचिद् गङ्गां गत्वा तत्र निर्वर्त्य प्रातःकृत्यं, पुनः प्रतिनिवृत्य तावतापि निवृत्ताध्ययनव्यापारं गुरुगृहान्निर्गतं कमपि छात्रमनवलोकयन् विवृतद्वारं स्वशयनापवरकं प्राविशम्।

वंशीधरः—किमप्रकृतं किमपि प्रस्तुत्य कालं निनीषसि? मन्ये भवानाम्रान् पृष्टः कोविदारानाचष्टे तथ्यं गोपयितुमेवेति।

शशिकान्तः—सखे! मैवं मन्यथाः। वृत्तं यथावदुपवर्णयितुकाम एवैतावद्दूरंगतोऽहं यदि तत्र तुभ्यं रोचते तर्हि संक्षिपामि।

वंशीधरः—अस्तु! यथाभिलाषं कथय।

शशिकान्तः—प्रविश्य तमपवरकं तत्रेतस्ततो विकीर्णेषु पुस्तकेषु हस्तेनैकमादाय विवृत्यावलोकनाय प्रवृत्तः तत्रापश्यं शीर्षके "परिभाषेन्दुशेखरे भूतिभूषिते" इति। तत् तथैव निक्षिप्य पुस्तकान्तरं गृह्णानः तत्रादर्शं "वृद्धो यूना" इति सूत्रमेकम्। तदपि पाणिनीयं सूत्रमवगच्छन् पुस्तकान्तरमक्षिविषयीकुर्वाणस्सर्वाण्यपि पुस्तकानि तदपवरकस्थानि व्याकरणसम्बद्धानीत्यवागच्छम्।

वंशीधरः—नेदमपि वचः प्रायशः प्रकृतपरामर्शि।

शशिकान्तः—किमेवं त्वरसे। नाहं मण्डूकः, यदुत्प्लुत्योत्प्लुत्य गच्छेयम्। किन्तु दूरं गतः शक्नोमि यथेतमेव प्रत्येतुम्। अतश्शनैरेव वक्तुं प्रभवामि। यदि तवाद्य त्वरितं गन्तव्यं, तर्हि गच्छ श्वो द्रक्ष्यावः।

वंशीधरः—किं साकाङ्क्षमेव मां प्रेषयितुमभिलषसि? नैतत् समुचितम्। अतोऽद्यैव समापय।

शशिकान्तः—एवं तत्रत्यानि पुस्तकान्यवलोक्य, ततोऽपवरकान्तराणि गत्वा तत्राप्येवमेव पश्यन् मनस्येवमचिन्तयम्—अत्र मयोपलब्धेषु पुस्तकेषु शताधिकेषु, उपदशान् साहित्यग्रन्थान्, त्रिचतुरान् न्यायग्रन्थांश्च वर्जयित्वा सर्वे व्याकरणग्रन्था एव। किमत्र व्याकरणसाहित्यातिरिक्तानां शास्त्राणां पठनपाठनरीतिरेव न प्रचलति? यद्येवं कथं तर्हि मन्मनोरथतरुणा फलितेन भाव्यम्? इति। एवं चिन्तयत्येव मयि स्वाध्यायादुपरतास्सर्वेऽपि छात्रास्समागताः स्वं स्वमपवरकं पूर्वमेवोद्घाटितकवाटं प्रविश्य, पुस्तकानि स्वहस्तस्थितानि निक्षिप्य, बहिरागत्य, सर्वे सम्मिलिता मया सह संलपितुमारभन्त। तेषु केनचन पृष्टं-ब्रह्मन्! दर्शनादेवावगम्यते भवानत्र विद्यामधिगन्तुमागत

इति। व्याकरण-साहित्ययोः कतरदध्येष्यते भवतेति परं विशेषजिज्ञासास्माकमिति। भयोक्तम्-द्वयमिदं मुक्त्वा तृतीयं न पृच्छत्येव भवान्। किमिदमितस्तृतीयं शास्त्रमेव नास्तीति वो मतम्? इति। अपरेण केनचिदुक्तम्—अस्ति शास्त्रान्तरमपि न्यायाख्यम्। तस्य तु प्रचारोऽतिविरलः काश्यामत्र। शते विद्यार्थिनां पञ्चषा भवन्ति न वाऽन्यशास्त्राध्येतारः। बहवोऽधीयते व्याकरणमेव शास्त्रम्। केचन साहित्यम्। अत एव पृष्टमेवमस्माभिरिति। तावतैवाश्चर्याविष्टचेतसा मया निगदितम्—इतशशास्त्रान्तरमेव मन्ये भवतां कर्णपथं नारूढम् इति। ततोऽन्येनोक्तम्—व्याकरणमधीयतेऽस्माभिः। साहित्याध्यायिनो दृष्टाश्छात्राः। श्रुताश्च न्यायशास्त्रपरिशीलिनोऽपि केचन। ततोऽन्यत् शास्त्रं नाम्नापि नाकर्णितमिति। श्रुत्वैतदतिखिन्नमनाः तानब्रवम्—अयि सखायः! सन्त्यन्यान्यपि शास्त्राणि मीमांसादीनि, येषामध्ययनेन महानुपकारश्शास्त्रान्तराध्ययने सम्पाद्यत इति श्रुतं वृद्धेभ्यः इति। "सन्तु वा मा वा, नास्माकं तैः प्रयोजनम्। अधीयतेऽस्माभिर्व्याकरणं प्रायशः, क्वचित् कदाचित् न्यायशास्त्रम्। तत्रैव रात्रिंदिवं परिश्रम्यते। परीक्षापि तत्रैव दीयते। परीक्षोत्तीर्णैश्च जीविकापि प्राप्यते पाठशालासु। इतः किमधिकं प्रयोजनमस्ति" इति तैस्साभिमानमुक्तोऽहं मनस्येवमचिन्तयम्-मया कृतप्रतिज्ञेनापि अद्ययावदनुल्लङ्घितपितृशासनेनापि देशकालावनुसर्तव्यावेव भवतः। यद्यहमत्र स्थितः व्याकरणं परित्यज्य शास्त्रान्तराध्ययने दर्शितादरो भवेयं, तर्हि न केवलमेभिः परित्यज्येय, परिहास्येवाप्यनिशमिति।

वंशीधरः—मन्ये परिहासभीतेनैव त्वया गुरोराज्ञापि परित्यक्तेति। अस्तु कथय किमनुष्ठितमग्र इति।

शशिकान्तः—एवं बहुविचिन्त्यान्ते निरचिनवं व्याकरण एवेतोऽप्यधिकं परिश्राम्येयमिति।

वंशीधरः—भवान् कृतभूरिपरिश्रम एव तच्छास्त्रे। पुनः किमत्र चिकीर्ष्यते त्वया?

शशिकान्तः—मया पूर्वमेव श्रुतमासीत् काश्यां नवीना परिपाटी पाठ्यते काचित् याऽन्यतः प्रायशो नोपलभ्यत इति। अतश्शास्त्रान्तरजिज्ञासां दूरीकृत्य तत्रैव परिश्रमः कर्तुमारब्धः क्रियते चाद्य यावत्।

वंशीधरः—अरे समधीतव्याकरणो यथोचितसमधिगततर्कशास्त्रमर्मा भवान् यदि मीमांसामपि स्वाधीनां करोति, तर्हि कियत् बुद्धेर्वैशद्यं भवेत्? कियती वा न्यायातिदेशशक्तिर्वर्धेत? कियान् पङ्क्तिलापने विभवो विराजेत इत्यादि? न किञ्चिदपि विचारितम्, अपि पृष्टाः तच्छास्त्रपरिश्रमिणः केऽपि सुधियः काशीस्थाः? सन्त्वन्ये पण्डितप्रवराः, अस्मद्देशीया एवास्माकं शिरोवाह्यशासनाः आचान्तमीमांसारहस्या अवश्यं प्रष्टव्या आसंस्त्वस्मिन् विषये।

अपि सूचितास्तातपादाः विषयमिमम्?

शशिकान्तः—भीतेन मया न लिखितं तान् प्रति।

वंशीधरः—ते मन्येऽद्यावधि मीमांसायामेवाधीतिनं त्वामवगच्छन्ति। अरे! बह्वपराद्धं त्वया। प्रथमतः केवलं परिहासभीतेन गुरूणामाज्ञोल्लङ्घिता। स्वप्रतिज्ञापि पृष्ठीकृता। महान्तो न पर्यालोचिताः।

अद्य यावत् विषयमिमं गुरुभ्योऽनिवेद्यैव स्थितम् । स्वकुलक्रमागता कीर्तिरवज्ञाता । स्वोदर्को न चिन्तितः ।

शशिकान्तः—सखे ! श्रुत्वा भवदुक्तमिदानीं बहु शोचामि, मया बहुलमनुचितमनुष्ठितमिति । बिभेमि च, तातपादाः श्रुत्वैतत् किं वदिष्यन्तीति । आकुलं मनो मदीयमिदानीम् । उपदिश किमतः कर्तव्यमिति ।

वंशीधरः—वयस्य ! माऽऽकुलीभव । यत्कृतं तदुचितमेव कृतम् । दृढा व्युत्पत्तिस्संजाता पाणिनीये तन्त्रे । संभृतसंभारस्य भवतः नातिचिरादेव हृदयमवगाहेरन् पूर्वतन्त्रीयाः पदार्थाः इति विश्वसिमि । अतोऽद्यप्रभृति यतस्व तदर्थम् । लभस्व ज्ञानमनुत्तमम् । उत्थापय कीर्तिमात्मकुलस्य । संतोषय जनकं भवदेकसूनुम् ।

शशिकान्तः—मित्रमणे ! अध्ययननिरतेन मया किं शास्त्रान्तरं कुत्राध्याप्यते इत्यपि नावगतम् । अतः कुत्र गन्तव्यम् ? किं कर्तव्यमित्यत्रापि भवतैवाज्ञापितमात्मानमिच्छामि ।

वंशीधरः—अद्यैव सायमवाप्य गुरूणामाज्ञां, दृष्ट्वा चास्मद्देशललामभूतान् कांश्चन परिडतप्रवरान् विज्ञापय वृत्तं सर्वमपि । ते दृष्ट्वैव भवन्तं दर्शितप्रेमभराः कथयिष्यन्ति- कीदृशी प्राचीने काल अस्मद्देशे मीमांसाशास्त्रस्य समुन्नतिरासीत् ? कियन्तः तच्छास्त्रवेत्तारोऽस्माकं देशमलमकार्षुः ? कथं बहुमंसत शास्त्रमिदमस्मद्देशीयाः ? इदानीं तु कीदृशी दुरवस्था ? किं तदध्ययनफलम् ? किंवा महत्वं शास्त्रान्तरेभ्यस्तस्य शास्त्रस्य ? कियानुपकारस्तेन शास्त्रान्तरस्य सम्पाद्यते ! के वा ऽध्यापयितार इदानीं तस्य शास्त्रस्य ? कुत्र वाऽध्येयम् ? इत्यादिकं सवमपि । एवं समधिगत-तदुपदेशो निवृत्तसर्वसंशयः काशीं प्राप्य तन्निदेशमशून्यं कुरु ।

शशिकान्तः—अप्यस्ति कश्चित समीचीनः प्रबन्धः काश्यां तदध्ययनस्य ?

वंशीधरः—चित्रीयते मे चेतः श्रुत्वैवं भवतो वचः । का वा विद्या दुर्लभा काश्यामत्र विश्वासां विद्यानामालये ? गच्छ त्वरितम् । प्राप्नुहि मनोरथम् शिवास्ते सन्तु पन्थान ः॥

( उभौ निष्क्रान्तौ )

## कालीदह-प्रासादः ( उज्जयिनी )

( लेखकः—गोपीकृष्णशर्मा वैद्यः व्याकरणाचार्यः काव्यतीर्थश्च ।

अस्ति भूमण्डलमण्डनायमाने परमाद्भुतसौन्दर्यशालिनि श्रीमति भरतखण्डेऽधिमालवं साम्राज्यसौभाग्यभाजनभ ता अवन्तिका-उज्जयिनी-विशाला-इत्यादिव्यपदेशविषया परमपूता काचन नगरी । इदं किल परमप्राचीनं तीर्थस्थानम् । याऽधुना लोके "उज्जैन" इत्यभिधया प्रसिद्धा वर्तते ।

समुपलभ्यते वैदिके पौराणिके च काले अस्या वर्णनम् । किं बहुना भगवद्भक्तिरसामृत-निष्यन्दरसभूतं श्रीमद्भागवतं तथा श्रीमन्मह-र्षिवर्यश्रीकृष्णद्वैपायनप्रणीतप्रबन्धमालामध्यमणिभूतं महाभारतमपि नास्ति रहितमेतस्या वर्णनेन । मान्येभ्यः पाठकेभ्यो वयमद्य यस्य स्थानस्य परिचयं दातुं समुद्यताः । एतत्किलाऽत्रत्यमेव "कालेदह महल" इतिख्यातमलौकिकशोभाशालि पुरातनमैति-



'कालियादेह'-प्रासादः, उज्जयिनी

हासिकं स्थानम् । पुराऽत्र भगवतश्चराचरगुरोः सूर्यनारायणस्य मनोहरं मन्दिरं तथा बहवः सुदृढ-कृष्णपाषाणनिर्मिता घट्टा विशाला धर्मशालाश्चासन्। अद्यापि केषाञ्चन घट्टानां चिन्हानि दरीदृश्यन्ते । धर्मशालानान्तु किमपि स्मारकं लक्ष्म कालमहिम्ना न भवति लोकलोचनगोचरम् । तत्तत्सर्वं स्कन्द-महापुराणान्तर्गतावन्तिखण्डनिष्कर्षभूतेऽवन्तिमा-हात्म्यनामनि ग्रन्थे सुविस्तरेण निरूपितम् । किं च चतुश्शताब्द्याः प्राक्तनमिदं वृत्तं श्रूयते। यत्किल-नसीरुद्दीन-खिलजीत्युपाव्हो मांडोनगराधिपतिः

नामा मोहम्मदीयो मूलस्थानं भङ्क्त्वा "कालेदह-महल" नामकं स्वावासभवनं निरमापयत्। तद-नन्तरं परमप्रसिद्धयशसः सम्राजः श्रीमदकबरस्य शासनकाले यदा जहांगीरनामा मालवमण्डल-शासकः सम्राजा विहितः। तदानीन्तेन कुण्डानि तेषामभितो दृश्यमानाः शालाश्च कारिताः। यदा दक्षिणदेशं विदर्भदेशं च विजेतुं जिगमिषुः सम्राड-कबरमहोदय उज्जयिनीमाययौ। तदा स उज्जयिनी-मिदं स्थानं च विलोक्याऽसीमानन्दं लेभे। निनाय चातिप्रीत्या कानि चिदिहाऽहानि। तन्निवासकाले



प्रासादस्यैकं दृश्यम्।

चैतस्य भवनस्य सौन्दर्यमतितरां वृद्धिं भेजे। एतदखिलं वृत्तं "तवारीख़ फ़रिश्ता" नाम्नि मोह-दीयशासनकालिकैतिहासग्रन्थे सुविस्तरेण निरूपित-मिति तत एवावगन्तव्यं प्रेक्षावद्भिः। पिण्डारीणां शासनकाले पुनरिदं नष्टभ्रष्टमभूत्। ततः १००७ संख्यके मोहम्मदसंवत्सरे कुण्डानि शालाश्च जीर्णो-द्धारेण पुनर्नव्यतां प्रापिताः। तत्पश्चात् ग्वालियर-राज्यान्तर्गतमालवप्रान्ताधिकारी ( सरसूबा ) सर माइकेल फ़िलोज महोदयः अस्य पुनर्जीर्णोद्धारं विधाय परमप्रीत्याऽत्रैव निवासं विदधे। ततः१६२०

परिमितेशवीयवर्षे ग्वालियरनरेशः स्वर्गीयश्रीमाधवरावसेंधियामहोदयः यदा इदं स्थानं दृष्टिदानेनानुजग्राह। तदात्वस्य भवनस्य परमोन्नत एव कालः समाययौ। स्थलमिदं महाराजेन स्वनिवासार्थमेव बहु मन्यतेस्म। ततः किमु वक्तव्यम्।

अल्पीयसैवानेहसा प्राचीनराजनिवासभवने न्यायालयः सञ्जातः। तत्रत्यं राजभोग्यपर्यङ्कादिकं सकलं वस्तुजातं कालेदहभवने आनीतं कर्मचारिभिः। इयदेव न, किन्तु लक्षावधिद्रव्यव्ययेन सर्वत्र सौन्दर्योत्कृष्टतापि परां काष्ठां नीयते स्म। शनैः शनैरत्र पण्यवीथिका अप्यभूवन्। महान्त आरामा अपि विरेजिरे। प्रमदभवनं प्रमदवनमित्यादीनि बहूनि नव्यानि स्थलानि निर्मितानि। अग्रेऽपि निर्माणकार्यं प्रचलत्येव। निवसन्त्यत्र सततं द्वित्रिशतं मनुष्याः। स्वर्गीयाः श्रीमहाराजा अपि बहुवारमत्रावासं विदधिरे। अस्य भवनस्येदमेव वैशिष्ट्यम्। यद्यपि नावश्यकतैतज्जीर्णोद्धारस्य। केवलं बहिर्दृश्यनिर्माणार्थमेव व्ययः सञ्जायते। स्नानागारं भोजनागारं शयनागारं विश्रामागारं प्राघुणिकागारं सर्वमेतद्यथापूर्वमेव वर्तते। अस्तु। एष प्रासाद औन्नत्येऽपि पर्याप्तः। अधस्तादस्य पातालगृहं वर्तते। अत्र किल पाको निष्पाद्यतेस्म। अस्मिंस्थले पर्याप्तः प्रकाशः। राजभवनादेतस्मादधस्तादुद्यानभूमौ सलिलपूर्णानि द्विपञ्चाशत्कुण्डानि सन्ति। एतेषां सलिलमेकस्मादपरस्मिन्नपरस्मादन्यस्मिन् तस्मादपीतरस्मिन्निति प्रवहति नैरन्तर्येण। चातुर्यमेतदेव शिल्पिनामेतन्निर्माणजन्यकीर्तिशालिनाम् यत्किलैतेषु सलिलस्य कुतः प्रवेशः कुतश्च निर्गम इति ज्ञातुं न शक्यते। एवमेवैकं चक्रव्यूहं वर्तते। यत्र जलं कदाचिद्दक्षिणतः कदाचिद्वामतो बम्भ्रम्यमाणं प्रविशति निर्गच्छति च। अत्र सलिलस्य प्रवेशो निर्गमश्चैतावान् रमणीयः। यं निर्निमेषं पश्यतो जनस्य न तृप्यति पूर्णेन वासरेणापि चक्षुः। कुण्डान्यभितो दरीदृश्यमानाः शाला दृढतरकृष्णपाषाणाच्छादिताः सन्ति। तासामुपरि राजमार्गाः विद्यन्ते। अन्तश्शालं दशसहस्रमनुष्याः कार्याणि कुर्वाणा न कथमपि विदिता भवेयुः। महिलामन्दिरस्यैकं वैचित्र्यमतीव श्राव्यम्। यदस्य तलगृहे गुप्ततया गन्तुं निर्मितो यो राजमार्गस्तेन मृत्तर (मोटर) संज्ञकयन्त्रशकटेनापि गमागमौ कर्तुं शक्येते राजगृहिणीभिः। अधुनात्वत्र भवने विद्युद्दीपका अपि संलग्नाः। टेलीफोन-संज्ञकं वार्ताहरं यन्त्रमपि वर्तते। जलस्य प्रबन्धोऽपि समीचीनः। निकटवर्तिन्येवागाधसलिला महानदी सिप्रा। जलयन्त्रमपि वर्तते। सायमत्रस्नानपानभोजनविहारादिसुखमनुभवन्ति सुहृद्भिः समेता नागरिकाः।

अस्य स्थानस्य सार्धक्रोशत्रयं नगराद्दूरतया यानमन्तरा गमनं नातिसुकरम्। इदं स्थलमेतावन्मनोहरमुज्ज्वलमलौकिकसौन्दर्यशालि स्वर्गीयं दृश्यं वर्णनातीतगुणम्। कुण्डानां निकटे गत्वा जलविहारं कर्तुं कस्य नाम नोत्सहते मानसम्। सायंकालिकशीतलो मन्दमन्दः सुरभिः समीरणस्तु "शिमिला"ऽख्यं शीतलं स्थानमपि न्यक्करोति। भारतभूमिसौन्दर्यविलोकनकौतुकोल्लसन्मानसैरुज्जयिनीमागतैर्यात्राकृद्भिरिदं परमरमणीयं स्थलमवश्यं प्रेक्षणीयम्। भवनाधिकारिणः (पैलेस आफ़िसर) संज्ञकादमनुमतिर्ग्राह्या। दर्शनादेव लेखस्य सत्यता सुदृढा स्यात्।

# अभ्यर्थना ।

माधवज्येष्ठमासयोर्वैदिकाङ्के प्रभूततमार्य्यपादानां वेदप्रौढिवादे सप्रमाणा हृदयाह्लादकाः पूर्वजयशोस्तम्भभूता लेखा नयनायनमागता आनन्दोत्तरमानन्दमलभतासकौ वेदादिविज्ञानह्रासोत्थशोकाग्निदग्धोऽप्याशाङ्कुरोऽतिपल्लवितोऽभूदयमेव हर्षावसरः ।

पूज्याः ! यथा यौष्माकोऽतुलप्रयासो लेखने, भाषणे, न्यायव्याकरणादिप्रवलग्रन्थाभ्यसने च; एवं वेदगतामूल्यज्ञानविज्ञानान्वेषणेऽपि बोभूयात्, अहो सुवर्णे सुगन्धिरिति लौकिकाभाणकोऽपि साफल्यभाग्भवेत् । विज्ञानवादे पण्डितंमन्यमानानां पाश्चात्यानामखर्वगर्वोऽपि गतमदेभ इव हतंप्रभो भवेद्द्रागिति चेतो नः कथयति, भारतजनन्यपि निजप्रियसुतकौशलं दर्शं दर्शं पूर्ववद् गुरुगौरवं निधास्यते, द्वात्रिंशत्कोटिपरिमिता भारतीया अपि सानन्दं क्लेशरहिताः सहिताश्च भविष्यन्ति न चात्राणुरपि, शङ्कालेशः ।

अपि च, मान्याः ! यथा न्यायव्याकरणसाहित्यकाव्यकोषादिग्रन्थेषु दत्तावधानाः सन्त्यन्तेवासिन उत पण्डिता वा, तथा न च वेदकर्मकाण्डश्रुतिस्मृत्यादिशास्त्रेषु मतिमतां मतिरत एव नो ह्रासः । यद्यपि नियमावल्यादावपि परीक्षासु सन्ति वेदादिविषयकग्रन्थाः; परन्तु हन्त ! ते भित्तिगतचित्रमाला इव केवलदर्शनफलाः, न च कार्यपरा भवन्ति । इतः परं किं दुःखम् ।

ब्राह्मणैः कारणमन्तरा वेदोऽध्येयः ज्ञेयश्चेति धिया साम्प्रतं न च केऽपि विद्योपार्जने यतन्ते । हा हन्त ! किन्तु चत्वारिंशद्रूप्यकेभ्य आरभ्य शतपरिमितवेतनेऽध्यापको लेखको व्याख्यानदाता वा भविष्यामि इति बुद्ध्या सर्वे पठन्ति । हा धिक् ! प्रबलवित्तैषणयैव नः पतनम् ।

पुस्तकग्रहणात् प्रागेव भृत्यभूता नृत्यति मनःप्रवृत्तिरिति । सेवाश्ववृत्तिराख्यातेति जानन्तोऽपि तामेव सेवामहे । ये खलु ब्राह्मणा जगद्वन्दनीया आसन् त एव धनिकगृहेष्वद्य पात्रादिमार्जनक्रियां विदधति—

"विप्रोवृक्षस्तस्यमूलञ्च संध्येति वचः श्रुतिविवरं स्थापयन्तोऽपि नोपासते संध्याम् एककालिकीमपि; किमुत त्रैकालिकीम् !

अतो व्याकरणादिवद् वेदादिधर्मग्रन्थेषु परीक्षानियमो धर्मबुध्या वा तद्वाचारणनियमो नो भविष्यति सर्वत्र विद्यालयेषु तावत् केवलं जल्पवादो वर्धेत, नच कार्य्यवादः । अतो मिलित्वा नियमोऽवश्यमेव कार्य्यो महानुभावैः । वित्तैषणां पुत्रैषणां लोकैषणां परित्यज्य केचिद् वीरवर-परशुरामवत्, अन्येच चराचरज्ञनारदमुनिवत्, केऽप्याहोस्वित् वशिष्ठप्रभृतिमहर्षिवत् इतरेच दत्तात्रेयादिवत्— त्यागवृत्तिमादाय दिशि दिशि प्रतिपत्तनम् प्रति ग्रामं वा वेदप्रचाराय विचरन्तु, पूज्यास्तदैव पुनरुद्धारो मातृभूमेः । तद्गतकलाकौशलादि निर्माणाविष्कारेऽपि प्रज्ञां दर्शयन्तु तदैव जनुःसाफल्यम् । पाश्चात्यैर्विज्ञानान्वेषणे सादरं प्राणाहुतयो दत्ताः भारतीयैः साम्प्रतिकैः कैरपि न तथा कृतम् ।

मनोडा–ग्राम निवासी,

श्रीमाधवानन्दपर्वतीयः—

# वृजीनां गणराज्यम्।

ले०—श्रीरामोदारः साङ्कृत्यायनः

[ प्रोफेसर—विद्यासागर कालेज, सीलोन ]



ये न केनाऽपि कारणेन भवतु, आर्याणां पुरातनेतिवृत्तस्य सामग्र्येव कृच्छ्रेण स्तोकमेव लभ्या। तस्याः संचये च भारतीयविदुषां विशेषतः संस्कृतपण्डितानां सर्वथोपेक्षा दृश्यते—इदमतीव खेदकरम्। अन्येषु जनपदेषु (द्वीपेषु) पुराणभाषापण्डिता एव पुरातन्याः सभ्यताया इतिहासस्य च संरक्षका अभवन्। अत्र ततः सर्वथा विप्रतीपम्। संस्कृतपण्डितास्तेषु विषयेषूपेक्षमाणाः, अन्ये नव्यशिक्षिताः पाश्चात्यसरणिशरणाः तत्र प्रयतमानाः सन्ति। केषांचिदधुनाऽपि भ्रमः, यद्भारतीयाः सर्वदा तन्त्रैकवर्तिनो लोक (प्रजा)—तंत्रशासनापरिचिताः। तेषां प्रकृतिविरुद्धं लोकतंत्रशासनम्। तत्र कियत्तथ्यमिति पालिग्रन्थेभ्यः संगृह्य समूलं वृजीनां गण (लोक) राज्यविषये लिखामः। समये यथावकाशं मद्र-शाक्यादिगणराज्येऽपि वक्तास्मः। तत्रेदमवधेयम्, यस्मिन् काले यवन (Greece) गणराज्यस्य तारुण्यं तस्मिन्नेवात्रैषां जराजीर्णकलेवरपातः। उदाहरणतः-४२३ विक्रमपूर्वाब्दे (480 B. C.) वृजीनां पतनम्।

पाणिनीयानां नास्ति अदृष्टचरं 'मद्रवृज्योः*कन्' मद्रेभ्यो वृजिभ्यश्च जनपदाभ्यामत्र शैषिकः कन् प्रत्ययो विधीयते, तेन मद्रका वृजिका इति प्रयोगाः सिध्यन्ति। ततः पूर्वं 'धूमादिभ्यश्चे'ति सूत्रे, तस्मिन्नेवार्थे वुञ् प्रत्ययं विधाय धौमकाः वैदेहकाः साध्यन्ते, तत्रापि धूमादिगणे वर्ज्यशब्दः पठ्यते द्वावपि वृजिवर्ज्यशब्दावयैव जनपदस्य वाचकौ। पालिपुरातनमागधिभाषायां वज्जीति प्रयोगस्तस्य इत्थं पाणिनिकाले वृजिजनपदस्य प्रसिद्धिरुपलभ्यते गन्धाराभिजनेन महर्षिणा बहुदूरवर्तिनोऽस्य स्मरणं द्योतयति वृजीनां सुख्यातिम्। पाणिनिकालस्तु भगवतो बुद्धस्य परिनिर्वाणाद्बहुशतकपूर्वमेव स्यात्, यदाप्राच्य काशि-कोसलाङ्ग-मगध-विदेहानारभ्य शरावतिप्रत्यग्वर्तिभ्य आमद्र-सिन्धु-कम्बोज-गन्धारवाहीकेभ्यः संस्कृतभाषा लोकभाषाऽभूत्। पाणिनिसूत्रमर्मज्ञानामेतत्प्रतिपादनं सिद्धसाधनमेव। वृजीनां गणो बहु पुरातन इति तत्रोद्धरिष्यमाणैर्वचनैः प्रकटीभविष्यति। कदा वृजीनां गणः समस्थाप्यतेत्यतीतघनतमसि विलीनतया दुःशकं वक्तुम्। तत्र बुद्धनिर्वाणात् ४२६ विक्रम (483 B.C.) पूर्वाब्दात् पूर्वं पञ्चशत वत्सराः सप्तशतवत्सरा अपि भवितुमर्हन्ति। विक्रम पञ्चशताब्द्यारम्भभवेनाऽचार्यबुद्धघोषेण स्वीयाय बुद्धवचनसंग्रहरूपायाः पिटकत्रय्याः भाष्यभूताय स्वीयायामर्थ (अट्ट) कथायां वृजीनामुत्पत्तिविष काचित् कथाऽलेखि, तत्र सर्वपुरातनेतिहासक सुलभा लोकोत्तरा अपि घटना अवर्णिषत, ता

* पाणि० ४-२-१३१।

तत्वार्थाधिजिगांसुभिर्नीर-क्षीर-न्यायेन विश्लेषयितुं न दुष्कराः ।

"वाराणसिराजस्य किल महिषी वन्धुजीवकपुष्पसदृशीं मांसपेशीं प्रासूयत । ततोऽन्या देव्यः सुवर्णविम्बसदृशान्पुत्रान्प्रसूयन्तेऽग्रमहिषी मांसपेशिमितिचिन्तयित्वा तां मांसपेशिमेकस्मिन् भाजने प्रक्षिप्यान्येन पिधाय राजमुद्रिकया लाञ्छयित्वा गङ्गायाः स्रोतसि प्राचिक्षिपत् । ततस्तद्भाजनं गङ्गायाः स्रोतसि प्रायात्, तस्मिंश्च समयेऽन्यतरस्तापसो गोपालकुलमाश्रित्य गङ्गातीरे वसति स्म स प्रातरेव गङ्गामवतीर्णस्तद्भाजनमागच्छन्तं दृष्ट्वा कर्पट इति विज्ञायाग्रहीत्, ततस्तामक्षरपदिकां राजमुद्रिकां च दृष्ट्वा वस्त्रस्य तां मांसपेशीमद्राक्षीत् । तथा हि तस्य दुर्गन्धपूतिभावो नास्तीत्याश्रमे नीत्वा शुद्धऽवकाशेऽस्थापयत् ।

अथ ततः सुवर्णविम्बसदृशौ दारिका दारकश्च संजातौ । तयोस्तापसस्य पुत्रस्नेह उदपादि । ततः प्रभृति सदा क्षीरभक्तं लभते, स भक्तं भुक्त्वा, क्षीरं दारकयोर्मुखे सिञ्चति । तयोर्यद् यद् उदरं प्रविशति, तन्मणिभाजनगतमिव सन्दृश्यते, एवं 'निच्छवी' तावभूताम् । अपरे पुनराहुः—स्यूत्वा स्थापिताविव तयोरन्योऽन्यं लीना छविरभवत् । एवं निच्छविरत्वाद्वा लीनच्छवित्वाद्वा लिच्छवीति प्रसिद्धाः । अथ तं तापसं गोपालका आहुः—भदन्त, अस्मभ्यं दारकौ देहि, वयं पोक्ष्यामः; प्रव्रजितानां दारकपोषणं न अनुरूपम् । तापसः-महापुण्यौ दारकौ अप्रमत्ततया वर्द्धयध्वम्, वर्द्धयित्वा चान्योऽन्यं विवाहसम्बन्धं कारयत । पञ्चगोरसैः राजानं सन्तर्प्य भूमिभागं गृहीत्वा नगरं निर्मापयत, तत्र कुमारमभिषिञ्चतेत्युक्त्वा दारकौ प्रादात् । ते दारकौ नीत्वाऽपुष्यन्, वर्द्धमानौ दारकौ क्रीडन्तौ अन्यान्दारकान् विजघ्नतुः, तेऽरोदिषुः, कथं रुदथेति पृष्टा इमौ निर्मातृकौ निष्पितृकावस्मानतीव प्रहरतइत्यवदन् । ततस्तेषां पितरः—इमावन्यान् दारकान् विहिंस्तः पीडयतः, नेमौ संग्रहीतव्यौ, वर्जयितव्यौ वर्जयितव्याविमावित्याहुः । ततः स प्रदेशः 'वज्जी' (वर्ज्या वृजयो वा) इति योजनत्रिंशत्परिमाणः उच्यते । अथ तं प्रदेशं गोपालका राजानं सन्तोष्याग्रहीषुः, तत्र च नगरं कृत्वा षोडशवर्षदेशिकं कुमारमभिषिच्य राजानं चक्रुः । तयैव दारिकया तं परिणय्य नियमं विदधुः, न बहिर्दारिकाऽऽनेया, न चेतो दातव्येति । तयोः प्रथमसंवासेन द्वौ दारकौ जातौ, दुहिता च पुत्रश्च; एवं षोडशकृत्वो यमला दारका जाताः । ततस्तेषां दारकाणां वर्द्धमानानामारामोद्याननिवासस्थानार्थं नगरे त्रिः कृत्वः गव्यूत्यन्तरेण प्राकारं प्राचिक्षिपन् । तस्य पुनः पुनः विशालीकरणात वैशालीत्येव नाम जातम् ।"

इत्थं वृजिशब्दः कथं जातः कथं च तस्यैवापरलिच्छविरिति विज्ञानम् । साम्प्रतं वृजिजनपदसीमादिविषये किमप्युच्यते । अग्र आगामिष्यता प्रबन्धेन दक्षिणस्यां गङ्गा वृजि-मगधजनपदयोः सीमेति निश्चितम् । पश्चिमस्यां मही (गण्डक्याः पुराणप्रवाह इदानीमपि 'मही' एव प्रसिद्धः) सीमेति प्रतिभाति । पूर्वस्यामेषां विदेहानां च सीमा,—वग्गुमुदा (इदानीं 'वाग्मती') नद्युत्तरतः,

वर्त्तमान 'ढांग' ग्राम (मुजफ्फरपुरमंडले) समीपे वल्गुमुदां विहाय किञ्चित्पूर्वेण आधुनिक लखनदेयिशाखया सह (आषाढ्ष्टयो ततोऽपि पूर्वं) लखनदेयिनद्या मार्गेण पुनर्वल्गुमुदानदी, यावद्बूढीगण्डकसम्भेदं, ततो दक्षिणाभिमुखमाधुनिक-नरहनदुलारपुरग्रामाभ्यां यावद्गङ्गाम् । उत्तरस्यां यावद्धिमवतः । चित्रदर्शनेनेदं स्पष्टम् । उद्धतकथायां योजनत्रिशतं वृजीजनपदस्य परिमाणम् । वर्तमानसीमामापनेन १६२ क्रोश * (४०½ योजन) तोऽधिकं न भवति । अत्र वर्तमानासु नदीषु महीगङ्गा-वल्गुमुदाः पिटकत्रय्यामुपलभ्यन्ते, हिमवतः प्रभवन्तीनां मध्यदेशवर्तमानानां यमुना-गङ्गा-सरय्व-चिरावति-महीनां महानदीनामन्यतमैषा मही । वल्गुमुदाविषये सूत्रपिटकान्तर्गतखुद्दकनिकायस्थोदानग्रन्थे ते भिक्षव श्रावस्थीत (बलरामपुरतो) नातिदूरं र्त्तमानं 'सहेटमहेट'नामक[1] स्थानो, यत्र पुरा कोसलानां राजधानी आसीत्, विचरन्तो यत्र वृजयस्तत्रोपागमन्, उपगम्य च वल्गुमुदानद्यास्तीरे पर्णकुटीराणि कारयित्त्वावर्षामूषुः ।

वृजीनां राजधानी वैशाली । (बिहारप्रदेशे मुजफ्फरपुरमण्डल इदानीं 'बनिया बसाढ' ग्रामः) तद्विषयेऽग्रे सविस्तरं लिखिष्यते—इतीदानीं तेषां केचन ग्रामा लिख्यन्ते । राजगृहतो गङ्गा पञ्चयोजनदूरं, ततो योजनमतिक्रम्य पारेगङ्गं वृजीनां विषयः । राजगृहतो वैशालीं, ततः मल्लेषु कुशीनगरं प्रति गमनावसरे मार्गे वर्तमाना केचन ग्रामा वर्णिताः। तत्र गङ्गातो वैशालीगमने पूर्वं 'कोटिग्रामः' अयं वैशाली-नगर समीप एव आसीत, नादिका कोटिग्रामतोऽग्रे, सहोदरयोः पुत्रा एकस्य तडागस्य पार्श्वयोः वसतिं चक्रुः, तस्यैव ग्रामयुग्मस्य नाम *नादिकेति।४२६ विक्रमाब्दे ग्रीष्मकाले नादिकांगतेन बुद्धेन सहानन्दस्य समालापाज्ज्ञायते, नादिकानासीत्साधारणो ग्रामः । तत्र 'गिंजकावसथ' नाम्ना कश्चिदावसथः (अतिथिशाला) आसीत् । अनेकवारं नादिकायां तस्मिन्नावसथे सपरिषत्को बुद्धो वासमकल्पयत् । आनन्दः कथयति ।

'साल्हो (आषाढ़ः?) नाम भिक्षुः नादिकायां कालं कृतवान्, तस्य कागतिः कोऽभिसम्परायः? नन्दा नाम भिक्षुणी ...? सुदत्तो नामोपासक ...? सुजाता नामोपासिका ...? ककुत्सः (ककुधो) ...? कालिङ्गः .... ? निकटः ...? तुष्टः ...? सन्तुष्टः ....? भद्रः ...? सुभद्रः ....?' ।

इतः पूर्वस्मिन्नपि वर्षे बुद्धोऽत्रागतः, वर्षमध्ये उपासकेष्वेवैतावतां पुरुषाणां मरणपि नादिकाग्रामो महाग्राम आसीदिति सूचयति ।

नादिकाकोटिग्रामौ द्वावपि वैशालीतो नातिदूरमास्ताम् । वैशालिवासिनी आढ्यगणिका अम्बापाली कोटिग्रामं गत्वा द्वितीय भोजनार्थं *निमंत्रयाञ्च कार । कोटिग्रामाच्च बुद्धो नादिकां गतः। अम्बापाली स्वोद्याने भोज्यानि सज्जीकृत्य भगवन्तं व्यज्ञापयत् । ततः तस्या उद्याने सपारिषत्को गत्वाऽभ्यवाहरत् । इत्थं कोटिग्रामो नादिका वा वैशालीनगरासन्नावेव भवितुमर्हतः ।

महापरिनिर्वाणसूत्रे वैशालीतः कुशीनगरगमने भण्डग्रामहस्तिग्रामा-(ऽम्र)-ग्राम-जम्बूग्राम-भोगन

* महापरिनिर्वाणसुत्त-अट्ठकथा । दीघनिकाये महापरिनिब्बाणसुत्तम् ।

* विनयपिटके महावग्गे ६ स्कन्धे ।

गर-पावेति षड्ग्रामा आगताः। तत्र पावा, मल्लानां गणराष्ट्रे कुशीनगरात् गव्यूतित्रयं (12 Mils) ककुत्थाऽपथतरकुनद्योरन्तरे या विद्यमाना आद्यत्विक पडरौना-'पपउर'योरेकतरः, विशेषेणोत्तर एवापावं भूत्वा कुशीनगरगमनात्, वैशालिसमीपे मही नोद तरदित्यपि स्पष्टम्। परिनिर्वाणात् (विक्रमपूर्व ४२६ वैशाख पूर्णिमातः) मासत्रयं पूर्वं (वि०-पू०-४२५ माघपूर्णिमा-द्वितीयदिने) वैशालीतः प्रस्थानम्। इत्थमियं यात्रा मासत्रयेण समाप्ता। इदानीं वैशालीतः 'केसरिया' ग्रामः सार्द्धपञ्चदशक्रोशं (31 Mils), ततः उत्तरोत्तरं 'अरेराज' सार्द्धनवक्रोशं (19Mils), लौरियानन्दनगढः, सप्तदशक्रोशं (34 Mils), पावा (पपउरः) षोडशक्रोशं (32 Mils), इत्थं चतुःषष्टि क्रोशं (128 Mils) यात्रा मासत्रयेण जातेति बुद्ध स्यान्यचारिकानुरूपमेव। अरेराज-लौरियानन्दन-गढयोरशोकशिलास्तम्भौ, केसरियायां च स्तूपः, सूचयन्ति तेषां स्थानानां विशेषताम्। सा च विशेषताऽन्तिमयात्रारूपेण भवितुमर्हति। भण्डग्रामादीनां पञ्चानां कतमः इति स्पष्टतया वक्तुं दुष्करं तथाऽपि नगराभिधेयत्त्वेन पावाद्वितीयत्त्वेन प्रचुरवसतिवंशावशेषपरिवृतो 'लैरियानन्दनगढ' एव भोगनगरम्।

वैशाली लिच्छव्यपरनाम्नी वृजीनां राजधानीयं वाल्मीकीय-रामायणे विश्वामित्राश्रमात् मिथिलागमनसमये, मिथिलातः पूर्वं विशालेति नाम्ना वर्ण्यते, सैंहलभाषायामपि 'विशाला' प्रोच्यते। तस्याः स्थापनावृत्तमागतपूर्वम्। पुनः पुनर्विशालीकरणाद्वैशालीति प्रसिद्धिरपि तत्र सूचिता। तदात्वतननगरानुरूपेणेयमपि प्राकारवेष्टिता, पूर्वादि-प्रधानचतुर्द्वारविशिष्टाऽसीत्। तत्र सप्तम्युत्तर सप्तशताधिक-सप्तसहस्राणां (७७७७) राजपदलाञ्छित-गणसभासदानां सोद्यानवापिकानि वेश्मानि, अनेकानि चैत्यानि (देवालयाः), मध्ये नगरं संस्थागारं (Cauncil Hause), भिक्षुविहाराः, विपण्यः, (यत्र काशिकवस्त्राणां बहुसमादरः) रथ्याः, राज्ञामभिषेकपुष्करिणी। अत्रैव विद्यालये प्रधानाचार्य, काशिकोसलराजस्य श्रावस्तिपतेः प्रसेनजितः सतीर्थ्यः, तक्षशिलास्नातकः महालिरन्धीभूतः पञ्चशतलिच्छविकुमारानपाठयत ‡ "तस्मिन् खलु समये वैशाली सुभिक्षा भवति, सुसस्या, सुलभपिण्डा, *'रमणीया आनन्द वैशाली, रमणीयं उदयनचैत्यम्, रमणीयं गोतमकचैत्यम्, रमणीयं सप्ताम्रचैत्यम्, रमणीयं वहुपुत्रचैत्यम्, रमणीयं सारन्ददचैत्यम् रमणीयं चापालचैत्यम्।

एषां चैत्यानां स्थानसन्निवेशोऽन्यत्र :—

† पूर्वस्यां वैशाल्यां उदयनं नाम चैत्यम्, दक्षिणस्यां गोतमकं चैत्यम्, पश्चिमस्यां सप्ताम्रं उत्तरस्यां वहुपुत्रम्। चैत्यानि देवस्थानानि। परं तेषु देव प्रतिमा न श्रूयन्ते, देवप्रतिमावर्णनं वस्तुतः त्रिपिटके क्वापि नोपलभ्यते, तच्च तदात्वे प्रतिमा-विरहित-देवपूजामेव द्रढयति। प्रायेण वैशाल्यां वुद्धो महावने कूटागारशालायां निवसति। इदं महावनं नगराद्बहिः स्वयं जातवनमासीत्। अन्तिमयात्रायामम्वपाल्या प्रधानगणिकया नगरे वर्तमानं स्वीयं अम्वपालिवनं *"इयमहं भदन्त, आरामं वुद्धप्रमुखाय भिक्षुसंघाय

‡ महावग. ६। * उदान ६-१. महापरिनिर्वाणसूत्रम्।
† दीघनिकाय १४-१-११। * महापरिनिर्वाणसूत्रम्।

ददामीत्यदायि।" ‡ नगरात् पश्चिमस्यां गव्यूतिमात्रदूरं कोऽपि वनखण्ड आसीत्। अत्रापि बुद्धस्य कादाचित्को वासः 'तिन्दुस्थाणु' नामकोऽन्योऽप्येकः परिव्राजकारामोऽभूत्।

'उपनगरं वेणुग्रामे †बुद्धस्यान्तिमो वर्षावासः (वि० पू० ४२५ वत्सरे आषाढ पूर्णिमात आश्विनपूर्णिमां यावत्)। प्रायेण परिव्राजकारामाश्चैत्यानि च तस्मिन् काले नगराद्बहिरेव भवन्तिस्म। नगराभ्यन्तरे गणराजकुलानामभिषेकमङ्गलपुष्करिण्यासीत् यत्र गणसभ्यत्वप्राप्तिपदाभिषेको भवति। अट्ठकथायामस्ति:—मल्लकुमारो बन्धुलः प्रसेनजितः सहाध्यायी तक्षशिलास्नातकः, स्वगणे प्रतिष्ठामलभमानः कोसलेश्वरेण सत्क्रियमाणः सेनापतिपदे प्रतिष्ठापितः। तस्य भार्या मल्लिका 'गर्भं लब्ध्वोत्पन्नदोहदा 'दोहदो म उत्पन्न' इत्यवोचत्। को दोहद इति वैशालिनगरे गणराजकुलानामभिषेकमङ्गलपुष्करिण्यामवतीर्य स्नात्वा पानीयं पातुकामोऽस्मि स्वामिन्निति। बन्धुलः साध्वित्युक्त्वा रथमारुह्य श्रावस्थीतो निष्क्रम्य, रथं वाहयन् महालिलिच्छविपरिग्रहीतद्वारेणैव वैशालीं प्रविशत्। महालिलिच्छवेर्निवेशनं द्वारसमीप एवासीत्। सोऽद्य लिच्छवीनां भयमुत्पत्स्यत इत्याह। पुष्करिण्या अन्तर्बहिश्चारक्षा बलवती, उपरि लौहजालं, शकुनानामप्यवकाशो नास्ति। बन्धुलसेनापतिः पुना रथादवतीर्यारक्षकान् वेत्रेण प्रहरन्..., लौहजालं छित्वाऽन्तः पुष्करिणीं भार्यां स्नपयित्त्वा, स्वयं च स्नात्वा, नगरान्निष्क्रम्यागतमार्गेणैव प्रायात्। आरक्षका लिच्छवीन् व्यज्ञापयन्। लिच्छवयो राजानः क्रुद्धा पञ्चशतरथानारुह्य 'बन्धुलमल्लं ग्रहीष्याम' इति निष्क्रान्ताः। तां प्रवृत्तिं महालिः श्रुत्वा "मा गच्छत, स हि वः सर्वान् हनिष्यती" त्याह तेऽपि 'वयं गमिष्याम एवे' त्यवदन्। तेन हि चक्रस्य यावत् नाभितः प्रविष्टप्रविष्टस्थानं दृष्ट्वा निवर्तध्वं, ततोऽनिवर्तन्तः पुरतोऽशनिशब्दमिव श्रोष्यथ, तस्मात्स्थानात् निवर्तध्वम्, ततोऽनिवर्तन्तो भवन्त रथधुरेषु छिद्रं द्रक्ष्यथ, तस्मात्स्थानान्निवर्तध्वं पुरतो मा गमत'। ते तस्य वचनेन न निवृत्तास्तं अन्वबध्नन्नेव। मल्लिका दृष्ट्वा, रथाः प्रज्ञायन्त इत्याह, तेन हि एकस्यैव रथस्य प्रज्ञानकाले वदेरिति। स यदा सर्वं एकीभूय प्राज्ञायन्त तदा 'एकमेव रथशीर्षं प्रज्ञायत' इत्याह। बन्धुलस्तेन हीमा रश्मीर्गृहाणेति तस्यै रश्मीर्दत्त्वा रथे स्थितो धनुरारोपयत, रथचक्रं यावन्नाभिपृथ्वीं प्राविशत्। लिच्छवयस्तत्स्थानं दृष्ट्वाऽपि न न्यवर्तिषत। इतरः स्तोकं गत्वा ज्यामस्फोटयत्; अशनिशब्द इवाभवत्, ते ततोऽपि न न्यवर्तन्त। बन्धुलो रथे स्थित एव एकं शरमक्षिपत्। स पञ्चशतेषु रथशीर्षेषु छिद्रं कृत्वा पञ्चशतान् राज्ञः परिकरबन्धस्थाने विनिविध्य पृथिव्यां प्राविशत्। ते आत्मनो विद्धभावमज्ञात्वा तिष्ठ रे तिष्ठ रे, इत्यवदन्नेव। बन्धुलो रथं स्थापयित्त्वा; यूयं मृतकाः मृतकैस्सार्द्धं मम युद्धं न भवितुमर्हतीत्याह। मृतका नामास्मादृशा भवन्तीति। तेन हि सर्वं पूर्वस्य परिकरं मुञ्चतेति। तेऽमुञ्चन्, स तत्क्षणमेव मृत्त्वा न्यपतत्। अथ सर्वेऽपि यूयं एतादृशा आत्मनो गृहाणि गत्वा स्वविधेयं विधाय पुत्रदारान् अनुशास्य कवचानि मुञ्चत।"

अनेकासम्भवातिशयोक्तिपूर्णेऽस्मिन् वृत्ते कोसलसेनापतिना वृजीनां युद्धम्, तन्निमित्तम्, तदुपकरणानि च न तिरोहितानि प्रेक्षावताम्।

(क्रमशः)

‡ मज्झिमनिकाय मूलपण्णासक-सीहनादसुत्त अट्ठकथा।

* महापरिनिर्वाण सूत्रम्। † धम्मपद-अट्ठकथा ४-३।

# वेदार्थ-प्रक्रिया ।

लेखकः—श्रीराधाप्रसाद शास्त्री, हिन्दू विश्वविद्यालय-धर्मशास्त्राचार्यः ।



अथ को नाम वेदः ? कश्चार्थः ? का प्रक्रिया ? वेद्यन्ते ज्ञाप्यन्ते धर्मार्थकाममोक्षा अनेनेति व्युत्पत्या चतुर्वर्गज्ञानसाधनभूतो ग्रन्थविशेषः । तल्लक्षणञ्च मन्त्रब्राह्मणयोर्वेदनामधेयमिति आगमोक्तं वेदितव्यम् । यो ह्यव्यभिचरितस्वरवर्णादि–पठनपाठनक्रमागतः सन्सर्वकालं सर्वदेशेषु प्रतिशाखमविभागेन वर्त्तमानः स एको मन्त्रराशिः । अपरस्तु विधिनिन्दा-प्रशंसा-सम्प्रश्नाख्यानादिभिस्तस्यैव प्रायो विनियोगप्रख्यापक उपव्याख्यानभूतो वाक्यनिचयो ब्राह्मणराशिः । अनयोरेकः संग्रहो वेद इत्यभिधीयते वेदनिबन्धेषु मन्त्रब्राह्मणभागौ परस्परमसम्मिश्रावेव प्रायः पठ्येते । क्वचित्तु ब्राह्मणसंमिश्रितोऽपि मन्त्रभागः पठितोऽस्ति । एवमुभयात्मकोऽपि विध्यर्थवादमन्त्ररूपेण त्रिधा व्यवस्थितोऽयं वेदराशिरेकमूल एकमेलक्षणफलो महाकल्पवृक्षो वरीवर्ति । अस्य च पत्रभूतं कर्म विधिना विहितम्, अर्थवादेन प्ररोचितं, मन्त्रेण च स्मृतं सदभ्युदयकारकं भवति । ननु प्रतिशाखं यज्ञकर्माणि भिद्यन्ते तत्कथमेककर्मफलोऽयं वेदककल्पवृक्ष इत्युच्यते । नैषदोषः । अवान्तराकृतिभेदेऽपि कर्मजातिव्यञ्जकप्रधानाकृतिभेदाभावात् । न ह्येकस्यां शाखायां विहितस्याग्निहोत्रादिकर्मणः स्थाने विजातीयस्य ग्रहयज्ञादेरपरस्यां शाखायां विधानमस्ति । तस्माच्च प्रतिशाखं कर्मभेद इति मन्तव्यम् । यदि प्रतिशाखं बदरामलकादिवज्जात्यैव कर्मभेदःस्यात् तदा एकमूलाभावादादित एवारभ्य भिद्यमानत्वाद् वृक्षान्तरवद् वेदांतराण्येवोच्येरन्; न शाखान्तराणि, तस्मादेकमूलः समानफलोऽयं वेदकल्पशाखीत्याहुः । "सर्वार्थवेदको वेदश्चतुर्द्धा भिद्यते क्रमात् । ऋग्वेदोऽथ यजुर्वेदः सामवेदो ह्यथर्वणः ।" यद्यपि बहुषु श्रुतिस्मृत्यादिवाक्येषु वेदत्रयी संकीर्त्यते, न तु चतुर्थोऽथर्ववेदः, तथापि ब्रह्मवित् शब्देन चतुर्थस्याथर्वणवेदस्याऽपि मुण्डकोपनिषदि श्रवणात् ।

तद् यथा । "द्वे विद्ये दिव्ये इतिहस्म यद् ब्रह्मविदो वदन्ति परा चैवापरा च । तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं ज्योतिषमिति । अथापरा यथातदक्षरमधिगम्यते ।" इति स्मृतिपुराणादिष्वपि बहुशः संकीर्त्त्यते । तथा चरणव्यूहेऽपि "अथानाद्य चतुर्द्धा इत्युक्तम् । तथा चरणव्यूहेऽपि "अथा-

तच्चरणव्यूहं व्याख्यास्यामस्तत्र निरुक्तम्-चातुर्विध्यम्, चत्वारो वेदा विज्ञाता भवन्ति, इतिस्थितम् । तथा व्याकरणमहाभाष्ये पतञ्जलिनाप्युक्तम् ।"महान् शब्दस्य प्रयोगविषयः सप्तद्वीपा वसुमती, चत्वारोऽङ्गाः सरहस्या बहुधा भिन्ना एकशतमध्वर्युशाखाः सहस्रवर्त्मा सामवेद एकविंशतिधा बह्वृचा नवधाऽथर्वणो वेद इति । एवं वेदस्य चातुर्विध्यं तृतीयाष्टकेऽष्टमाध्याये दशमवर्गे श्रूयमाणया ऋचाप्यभिधीयते, "चत्वारि शृङ्गात्रयोऽस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य । त्रिधा बद्धो वृषभो रोरवीति महोदेवो मर्त्यां आविवेश" इति । अत्रनिरुक्ते 'चत्वारि शृङ्गेति वेदा वा एते उक्ता, इति यास्केनोक्तम् । वेदभाष्ये सायनाचार्य्येणाऽपि तथैव भाषितमिति सविभागो वेद उक्तः । अर्थशब्दोऽभिधेयापरपर्य्यायो वस्तुपर्य्यायो वा " अर्थोऽभिधेय वस्तुप्रयोजननिवृत्तिषु " इत्याप्तोक्तेः । अर्थशब्दस्य वस्तुपरत्वे वेदानां येऽर्थाः सूक्ताध्यायर्षिमण्डलाष्टकतन्मानादयः तेषां प्रक्रिया प्रकरणम् । अथवा अभिधेयपरत्वे कर्मोपासनाज्ञानानि साध्यसिद्धरूपेण व्यवस्थितानि । यद्बोधकानि पूर्वोत्तरमीमांसाशास्त्राणि । किञ्च क्वचित्स्तुतिरेव नाशीर्वादः । आशीरेव न स्तुतिः । क्वचित् शपथाभिशापौ अथापि कस्यचिद्भावस्याचिख्यास । अथापि परिदेवना । अथापि निन्दाप्रशंसे । सर्गोपसंहारौ चेत्यादि एतेषामभिधेयार्थानाम् प्रक्रिया प्रकरणम् । यथार्थशब्दस्य प्रयोजनपरत्वे तेषां वेदानाम् अर्थाः—कर्मणा प्राप्तस्वर्गादिलोकभोगः, उपासनया वा क्रममुक्तिर्हिरण्यगर्भलोकमवाप्याप्रलयं तत्र स्थित्वा परब्रह्मणि लयः, प्रकृतिलयो वा कर्मोपासनासमुच्चयजः, कैवल्यमुक्तिश्च स्वस्वरूपावस्थानलक्षणा इत्यादि । एतेषां वेदार्थानां वेदप्रयोजनानाम् प्रक्रिया प्रकरणम् । एते वेदार्थप्रक्रियाशब्दार्थाः स्वमत्या वितर्किताः । अग्रे ते क्रमशो वर्णनपद्धतिमेत्य प्रकाशमेष्यन्ति ।

तद् यथा अर्थशब्दस्य वस्तुपरतायाम् वेदार्थप्रकरणम् । ऋग्वेदस्य तावन्मानं चरणव्यूहोक्तमिहोच्यते "ऋचां दशसहस्राणि ऋचां पञ्चशतानि च । ऋचामशीतिः पादश्च तत्पारायणमुच्यते" इति । अस्य च वेदस्य पञ्चशाखाः सन्ति । शाकलाः, वाष्कलाः, आश्वलायनाः शाङ्खायनाः माण्डूकाश्चेति ।" ऋचां समूहो ऋग्वेदमभ्यस्य प्रयत्नतः पठितः शाकलेनादौ चतुर्भिस्तदनन्तरम् । "शाङ्खाश्वलायना चैव माण्डूको वाष्कलस्तथा । बह्वृचा ऋषयस्सर्वे पञ्चैते एकवेदिनः" । एवमैतरेयी कौषितकी, शैशिरी, पैङ्गीत्यादयोऽन्येपि ऋग्वेदस्य शाखाभेदाः क्वचिदुपलभ्यन्ते । तथा विष्णुपुराणेप्युक्तम् । " मुद्गलो गोकुलो वात्स्यः शैशिरः शिशिरस्तथा । पञ्चैते शाकलाः शिष्याः शाखाभेदप्रवर्त्तकाः " इति । तथा व्याकरणमहाभाष्ये, एकविंशतिधा-बह्वृचा च इति स्थितम् । एवञ्चाध्ययनसम्प्रदाय प्रवर्त्तकानामेषां शाकलादीनामाचार्य्याणां प्रवचनभेदः शाखाभेद व्यवहारे कारणम् । ऋग्वेदस्य सप्तदशाधिकमेकसहस्रं सूक्तानि । षडधिके द्वे सहस्रे वर्गाः । चतुःषष्टिरध्यायाः । दशमण्डलानि अष्टौ अष्टकानि इत्येवं विभागः परिकल्पितः । तत्र सूक्तलक्षणं यथा बृहद्देवतायाम् " सम्पूर्णमृषिवाक्यन्तु सूक्तमित्यभिधीयते " इति सम्पूर्ण-निराकाङ्क्षं यदृषेर्वेदस्य वाक्यम्, तत्सूक्तमिति तदर्थः, वैदिकस्महावाक्यं सूक्तमिति यावत् । तच्च त्रिविधम् ।

ऋषिसूक्तम्, देवतासूक्तम्, छन्दःसूक्तमिति भेदात् । त्रयाणामेषां लक्षणानि बृहद्देवतायां यथा :—

"ऋषिसूक्तानि यावन्ति सूक्तान्येकस्य सा कृतिः । स्तूयेतैकन्तु यावत्सु तत्सूक्तं दैवतं विदुः । समासच्छन्दसो मन्त्राश्छन्दःसूक्तं तदुच्यते" इति । तत् ऋषिसूक्तं यथा, अग्निमीळे इत्यारभ्य इन्द्रं विश्वा अवीवृधन्नित्यतः प्राग्विंशतिवर्गसमाप्त्यन्तमेकमृषिसूक्तम् । तावतीनामृचामेकेनर्षिणा मधुच्छन्दस दृष्टत्वात् । यथावा—इन्द्रं विश्वा अवीवृधन्नित्येकं द्वितीयमृषिसूक्तम् । तासामृचां मधुच्छन्दसः पुत्रेण जेत्रा दृष्टत्वात् । देवतासूक्तं यथा :—अग्निमीळे पुरोहितमित्यादिनवर्चमग्निदेवताकमाद्यं देवतासूक्तम् । यथावा "वाय वायाहि दर्शतेनेति नवर्चं वायव्यम्" द्वितीयं देवतासूक्तम् । छन्दः सूक्तं यथा—"अग्निमीळे" इत्यारभ्य अष्टादशवर्गपर्य्यन्तम् । "गायन्ति त्वा गायत्रिण" इत्यतः प्राग् गायत्रीछन्दोवद्धमाद्यं छन्दःसूक्तम् । एवमन्यान्यपि ज्ञेयान्युदाहरणानि । त्रिविधानामप्येषां सूक्तानां कर्मसु विनियोगः श्रुत्या प्रतिपाद्यते । तथाहि "उद्दु ब्रह्मा एवैतस्य सवनस्येति ब्राह्मणाच्छंसी ब्रह्म एवैतत्समृद्धं सूक्तमहरहः शंसतीति" प्रकृत्य "तदु वासिष्ठमेतेनैव वसिष्ठ इन्द्रस्य प्रियं धामो यागच्छत्" इति ऐतरेय ब्राह्मणस्य पञ्चमपञ्चिकायामुक्तम् । तथा देवतासूक्तस्य विनियोगोऽप्यैतरेयब्राह्मणस्य षष्ठ पञ्चिकायामुपदिश्यते । "तस्मान्मैत्रावरुणं मैत्रावरुणः प्रातःसवने शंसति" इति । मैत्रावरुण नामक ऋत्विक् मैत्रावरुणं मित्रावरुणदेवताकं सूक्तं प्रातःसवनकर्मणि शंसति इतितदर्थः । एवमैतरेयब्राह्मणस्य पञ्चमपञ्चिकायाम् "तदु त्रैष्टुभं तेन प्रतिष्ठितपदेन" इति वाक्येन त्रिष्टुप्छन्दोग्रथितम् छन्दःसूक्तमुपदिश्यते । वर्गविभागोऽध्यायविभागश्चाध्यापकसम्प्रदायक्रमागत एवेति भाति । यतोऽनुगतं तयोः किञ्चिल्लक्षणं न पश्यामः । मण्डललक्षणन्तु शक्यत उन्नेतुम् । तत्तदृषिदृष्टानां बहूनां सूक्तानामेकर्षिकर्तृकः संग्रहो मण्डलमिति । अत एव सर्वानुक्रमणिकायामुक्तम् शौनकेन "य आङ्गिरसः शौनहोत्रो भूत्वा भार्गवः शौनकोऽभवत् स गृत्समदो द्वितीयं मण्डलमपश्यत्" इति । नहि द्वितीयमण्डलगतानि सर्वाणि सूक्तानि गृत्समद एव दृष्टवान्; किन्तु संग्रहीतवान्, अन्यथा कतुकूर्मादीनां तत्तत्सूक्तर्षित्वेन तत्रचानुक्रमणिका ग्रन्थेऽभिधानस्यासङ्गतेः । मण्डलर्षय आश्वलायनगृह्यसूत्रे उक्ताः "शतर्चिनो माध्यमा गृत्समदो विश्वामित्रोऽत्रिः भरद्वाजो वसिष्ठः प्रगाथाः पावमान्याः क्षुद्रसूक्ता महासूक्ता" इति "मधुच्छन्दः प्रभृतयोऽगस्त्यन्ता आद्यमण्डले । ये सन्ति ऋषयस्ते वै सर्वे प्रोक्ताः शतर्चिनः । शतर्चिपदस्य निर्वचनं कृतं पूर्वाचार्य्यैः । "ददर्शादौ मधुच्छन्दाद्यधिकं यदृचां शतम् । तत्साहचर्य्यादन्येऽपि विज्ञेयास्तु शतर्चिनः । अच्छत्राश्छत्रिणैकेन यथा ते छत्रिणोऽभवन्" इति द्व्यधिकेऽपि शतोक्तिर्बाहुल्यात् । अन्त्ये मण्डले क्षुद्रसूक्तानां महासूक्तानाञ्च द्रष्टार ऋषयोऽपि लक्षणया क्षुद्रे सूक्ता महासूक्ता इति व्यपदिश्यन्ते । महासूक्तलक्षणं बृहद्देवतायामुक्तम् । "दशर्चतायाः अधिकं महासूक्तं विदुर्बुधा इति" एतेनैकर्चप्रभृतिदशर्चपर्य्यन्तं क्षुद्रसूक्तमिति क्षुद्रसूक्तलक्षणमपि सूचितम्भवति । मध्येषु द्वितीयादि नवमान्तेषु मण्डलेषु ये ऋषयस्ते माध्यमा व्यपदिश्यन्ते । तथाच प्रथम-

स्य मण्डलस्य शतर्चिनः, द्वितीयस्य गृत्समदः, तृतीयस्य विश्वामित्रश्चतुर्थस्य वामदेवः, पञ्चमस्यात्रिः, षष्ठस्य भरद्वाजः, सप्तमस्य वसिष्ठोऽष्टमस्य प्रगाथाः, नवमस्य पावमान्याः, दशमस्य क्षुद्रसूक्ता महासूक्ताश्चेति गृह्यसूत्रार्थः ॥ (क्रमशः)

## करुण-क्रन्दनम् ।

करुणावरुणालय ! त्वया
 दयनीयाशु दशा विलोक्यताम् ।
तव सीदति साम्प्रतं प्रिया
 विबुधानां सरसा सरस्वती ॥ १ ॥
कलिकालकरालकालतो
 नयहीनैः पुरुषैस्तिरस्कृता
विकला सकलाऽश्रुतोषदा
 कुलजा ने सहते निरादरम् ॥ २ ॥
नितरां प्रविकम्पते वपुः
 हतसत्वा व्यथते पदे पदे
विधुनोति शिरः शुचान्विता
 विदधात्युच्छ्वसितं क्षणे क्षणे ॥ ३ ॥
अनया सह धर्मपुङ्गवाः
 क्षयमेष्यन्ति सनातनाः ध्रुवम्
अयि सत्यविधानतत्पर !
 वितथा ते भविता प्रतिश्रुतिः ॥ ४ ॥
नहि यावदियं जहात्यसून्
 कुरु तावद्धि निराश्रयाश्रय !
त्वरितं प्रतिकारमुत्तमम्
 गतजीवस्य पुनः किमौषधैः ॥ ५ ॥

—रमापति शास्त्रिणः ।

## भारतसम्बन्धे कृष्णविनयः ।

—:****:—

ले०—वीर भीमसेन शर्म्मा शास्त्री (सुजाबाद, मुलतान)

अयि भारतीयाः ! नेदं निन्हुतं केनापि, कुहापि लब्धजन्मनां मानवानां सुखकरः उन्नतिपथप्रदर्शकोऽयं भारतदेशो निखिलदेशरत्नभूतो विद्यते, इत्येवं सर्व एव पूर्णमनसोरीकुर्वन्ति, यदा कदाऽपि समयपरिवर्तनेनैधतेऽत्राधर्मः । एकदा अस्मिन्नेव भारतवर्षे विश्वविश्वाधीशस्य आनन्दकन्दसच्चिदानन्द-नन्दनन्दनदेवकीसुतगोविन्दस्याविर्भावोऽपि बोभूयते इत्यपि निश्चितमिति । अन्यच्च कृष्णावतरणे भगवतोदीरितं स्वेनैव गीतायां गीतायां यत्—

"यदा यदा हि धर्मस्य ग्लानिर्भवति भारत
 अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥१॥
परित्राणाय साधूनां विनाशाय च दुष्कृताम्
 धर्मसंस्थापनार्थाय संभवामि युगे युगे ॥"

अन्येऽपि शतशो दृष्टान्ता नयनप्राघुणिकतामायान्ति, येषु कृष्णावतार एव पुष्टो भवति । यथा च यदा—

कंसः कृतेनात्याचारेण सनातनधर्मं प्रत्नभारतगौरवञ्चालुलुपत्, तदा भगवता श्रीकृष्णेनागत्य यमसदनातिथीकृतोऽसौ धर्मध्वजश्च सुदृढीकृतः । एवञ्च यदा जगद्विद्रावणो रावणः वृद्धानतूतुदत् तदाऽपि कृष्णेनैव रामरूपमाधाय कीनाशपाश-

वद्धोऽसुकः । तथैव महाभारताहवेऽपि परिपक्वपाप-पुञ्जविनाशाय सारथिरूपेण स्वीयाननिर्गतसुधा-धारया सन्तोषितोऽर्जुनः । एवं सदसि कुररीमिव क्रन्दन्तीं द्रौपदीं वस्त्रसाहाय्यप्रदानेन रक्षितुं भगवान्-कृष्ण एव हेतुरभूत् । अहो ! किमुत स्वल्पवयस्कानां ध्रुवप्रह्लादादीनां कृते क्षीराब्धिमपि परित्यज्योपढुढौके श्रीकृष्णः ।

एवं यः कोपि भारते भगवन्तं कृष्णमाजुहाव तदा परित्यक्ताखिलानन्देन-नन्दनन्दनेनागतमिहे-ति विदितमेव पुराणविदाम् । परञ्चाधुना-स एव भारतदेशः, सैव धरा, तावेवोभौ चन्द्रदिवाकरौ,ता-न्येव व्रज-गोकुल-मथुराप्रभृतीनि नगराणि, त एव-वयं भारतीयाः, कथं तदा भगवन् ! सकृदपि नागम्यते ? किम् वयमेतादृशा अधमाः सञ्जाताः यत् भवद्दर्शनाधिकारिणोऽपि न । हे यादव ! उत्तिष्ठ क्षीराब्धितः पश्य भारतदुर्दशां, त्वदीये देशे निशा-चरैरेव स्वीया विजयपताका सुदृढीक्रियते । कथमुक्तव्याघ्रातदोष एव चरितार्थो विधीयते । यदि कंसप्रभृतीनां दुष्कृतां कृते तवागमनं, तदा तु एकः कंस आसीत्, अद्यापरिमिताः कंसाः प्रति-वीथिकं समुत्पन्नाः । तदपि न जागर्ति भवान् । तदा तु एको रावणः जानकीं जहार, अद्य तु अनेकै रावणै-रनेका अबला अपह्रियन्ते । तदा भारते कौरव-पाण्डवयोर्युद्धमासीत् । अद्य तु सम्पूर्णे भारते प्रतिगृहं प्रतिवीथि किमुत सर्वत्र संग्रामाः श्रूयन्ते । सर्व एव भारतीयाः पारस्परिक-रक्ततृषिताः सन्ति, तदपि न द्रवीभवति त्वदीयं मनः ? कथं वयं ध्रुव-प्रह्लादेभ्यो वालकेभ्योऽपि तुच्छाः ? कथं गजप्रभृतयः पशवो मानवीयजन्मनः श्रेयांसः ? कथं भारतीयविधवानां करुणाक्रन्दनं भवच्छ्रोत्रयोर्न विशति । त्वदीयाः पुत्राः अद्य ईदृक्षाः सन्ति केचन; यैरेकवारमेव भुज्यते, तेषां दरिद्रद्वारी कोप्यन्यः ईश्वरो भविष्यति,? इदानीं पापबहुलेऽस्मिन् जगति भारतीयाः तवागमनमेव प्रतिपालयन्ति ।

आगच्छ, भक्तवत्सल ! आगच्छ, त्वदीयेन देशेन स्वीयाभिनवविज्ञानेनापरे देशाः मनुष्यगणनासु विहिताः, परञ्च तैः कालचक्रक्रमेण दीपशलाका-सूत्रिकादयः पदार्था अपि विदेशेभ्यः आनीयन्ते, भारतीयैरपि भारतप्रादुर्भूतानां व्यास-कपिल-गोतम कणाद-विश्वामित्र-वशिष्ठादीनां विचित्राणि-चरि-त्राणि नाधीयन्त एव । किमुत भारतीय-वस्त्रेषु, भोजनेषु, वाक्षु, नास्त्यस्माकमवहितिः । अस्माभिरेव प्रत्यहं भारतदेशः कथा-शेषतां नीयते, त्वामन्तरा न कोऽपि भारततरणितारकोऽवतरति नेत्रयोरिति । किमधिकेन विरमत्येष विपश्चितामनुचरो भीमः ।

## कान्तापृष्ठवर्णनम् ।

काहुक बरणी नासिका, काहुक बरण्यो कान;
कदलीपत्रसमानसी, पीठ न बरणी आन ॥

( अस्य संस्कृतभाषायां विपरिणमनम् )

( १ )

मृद्वीकामदहारि हारि रसवद्रम्भे ! त्वदीयं फलं,
ख्यातो व्यालविषापनोदनविधौ तद्द्रसस्तावकः ।
कान्तापृष्ठसमानतां दधदिदं पत्रं न ते वर्णितं,
तन्मन्येऽत्र गुणेषु सत्सु परमैः पुण्यैर्यशो लभ्यते ॥

( २ )

आस्यं हास्यं च लास्यं विधुकुड्मलतासन्निभं केचिदूचु-
स्तेषु प्राशंसि केनाऽप्यतिनिपुणधिया नैव पृष्ठं प्रियायाः ।
रम्भापत्रोपमाने सति जगति मतिः कुण्ठिताऽभूत्ततोऽहं
मन्ये वाग्देवतायाः परमकरुणया प्राप्यते कल्पकत्वम् ॥

( ३ )

चन्द्राननोत्पलदलायतलोचनेति,
प्राशंसि यैः कविवरैः प्रमदोत्तमा तैः ।
मोचादलोपमनोरमपृष्ठदेश-
स्तस्याः कथं न कथितोऽत्र कुतूहलं मे ॥

( ४ )

शङ्के विद्वत्पुङ्गवानां कवीनां
दंभारंभो रंभयोज्जृम्भितोऽसौ ।
तस्याः पत्रे जागरूके जगत्यां,
कान्तापृष्ठं तत्समं तैर्नचोक्तम् ॥

कवी रविशंकरसूनुर्दयाशंकरः
साहित्यवाचस्पतिः

## भृङ्गान्योक्तयः ।

( १ )

ललामकमलावली किमु मतङ्गजैर्भक्षिता ?
न्यदाहिषत मालती प्रभृतयः किमौर्वैरहो ?
निरर्थक-पदावलीं प्रणिनदन् रुदन्नाक्षिपन्
प्रमत्त इव पर्य्यटन्स्त्वमसि भृङ्ग ! येनाऽधुना ॥

( २ )

दृढोल्लसितमञ्जरी-समुदये यदीयेऽनिशं
सुमञ्जु परिगुञ्जितं प्रणिनदन्नभूर्मोदभाक् ।
अमुत्र विटपेऽधुना विधिवशाद्विनष्टे गते
विहाय तव नोचितस्तमितरत्र भृङ्गायनम् ॥

( ३ )

द्विरेफ ! करिकेसरिप्रचुरदानधारामितो
दधत्प्रमदमावहन्नसि परं मदं संहसन् ।
अवव्रजसि नैव तन्मम मनः परं खिद्यते
यदि श्रवणमास्फुरेत्तव तदा दशा कीदृशी ॥

( ४ )

भृशं मधुप ! सौरभं सकलजीविहर्षास्पदं
कपूरशुचिवर्णिकां विदधतीं परां यूथिकाम् ।
विहाय हयमा[1]रकं समवलोक्य रक्तं यदि-
व्रजेरसि समन्ततः परम-धन्यधन्यो भुवि ॥

—श्रीजीवनाथझा शर्म्मा ।

१—'कनेर' इतिभाषायाम्—सम्पादकौ

## प्राचीन-भारतवर्षे पारदेशिकव्यापारः ।

लेखकः—श्री शिवशङ्करप्रसादः बी० ए०, डी० इडी.



इदानीन्तने काले तु भारतवर्षस्य व्यापारोऽवनतिगर्ते भृशं पतितोऽस्ति । अन्यदेशैः सह किं स्वदेशेऽपि व्यापारगताऽवस्था शोच्यैव। इमां शोचनीयामवस्थामवलोक्य प्राचीनकालेऽयमेव देशः सर्व्वव्यापारसूत्रधार आसीदिति विचारः स्वप्नेऽपि नोत्तिष्ठते। परन्तु एतच्छ्रुत्वा महदाश्चर्यं भविष्यति, यदस्मिन्नेव देशे एकदा व्यापारः समुन्नतेश्चरमशिखरे समासीन आसीत्।

वेदादिग्रन्थेभ्यो नाटकादिग्रन्थेभ्यश्चैतत् सम्यग्ज्ञायते। बहुषु स्थलेषु व्यापारपिशुनानि वर्णनानि सन्ति, यानि निश्चयपुरस्सरं गर्वस्थलभूतां व्यापारसमुन्नतिं दर्शयन्ति। ऋग्वेदे एकस्मिन् स्थले (१-२५-७) वरुणो ज्ञातसमुद्रमार्गत्वेन वर्णितः, अथ यदि चेत् समुद्रस्य मार्गोऽनवगतोऽभवत् तर्हि कुतस्त्यं वर्णनं स्यात्? अतो निष्पक्षमतावलम्बिनां संशयाय स्थानमदत्त्वैव अदर्शितदोलायमानचित्तवृत्तिना स्वीकार्य्यमासीत् पुराऽपि जलधिपथावगतिरिति। भूयोऽप्यन्यत्र तस्मिन्नेव वेदे (१-५६-२)मन्त्रे जलधिव्यापारकृतां महाव्यवहारिणां वर्णनमस्ति द्वीपदेशान्तरं व्रजताम्। ते च व्यवहारिणः समाजेऽपि बहुतिथे काले समादृतास्पदं धारयन्तिस्म, यथा सौन्दरनन्दगतेन "महापणेभ्यो व्यवहारिणश्च महामुनौ भक्तिवशात् प्रणेमुः" इति वाक्येन ज्ञायते।

अतः परम् यदि वेदानतिरिच्य अन्यान् ग्रन्थान् समाश्रयिष्यामहे; तर्ह्यपि एतमेव अवगमं प्राप्स्यामः। उदाहरणतो धर्म्मसूत्रेऽपि यत्र-तत्र वर्णनानि समुपलभ्यन्ते, यैर्व्यापारस्य पुरातनी स्थितिः सम्यगवगम्यते। अत्र प्रातःस्मरणीयावस्थस्य प्रोफेसरबूलरस्य ( Professor buhler ) ( संस्कृताध्ययने पुरातनवृत्तानुसन्धाने च व्ययितजीवितस्य ) वचनं विशिष्टमस्माकं ध्यानमर्हति। तेन कथितम्—References to sea voyages are also found in the two most ancient Dharmsutras; अर्थात् पुरातनतमयोर्द्वयोर्धर्म्मसूत्रयोरपि सामुद्रिकयात्रायाः सूचकानि वर्णनानि प्राप्यन्ते। डाक्तर-कार्डवेल-नामधेयोऽपि पाश्चात्यविद्वान् एतदेव शब्दान्तरैः कथयति। तस्योक्तिः—It Appears certain from the notices contained in the Vedas that the Aryans of the age of Solomon practiced foreign trade in ocean going vessels: अर्थात् वेदगतेभ्यः संकेतान्वितेभ्यो वचनेभ्य एतदेव गम्यते यत् इसराइल-अधिपस्य सौलोमेन-नाम्नो नृपस्य राज्यकाले आहरणापहरणात्मकं ( Import and export ) पारदेशिकं व्यापारं समुद्रगमनक्षमाभिर्नौभिरार्य्या अकार्षुरिति।

एवं पाश्चात्याः पौरस्त्याश्च बहवो विद्वांसः संस्कृतपुस्तकानामन्वेषणात्मकाध्ययनात् वसुन्धरोदराडुत्खातानामनल्पसंख्यकानां वस्तूनामवेक्षणात् अस्मिन् निर्णये समागताः सन्ति।

अथायं इसराइलसंस्थः सैालोमोनो भारतवर्षेण सह खाइष्टजन्मनो दशशतकानि प्राक् व्यवहारसम्पर्कं व्यधात् । अतएव ऐतिहासिकदृष्टिकोणादपि सम्यक् ज्ञायते, यदासीदतीव पुरातनकालेऽन्यदेशसम्पर्की व्यापारोऽत्रेति एतत्-पुरातनेतिहासे वर्णितमस्ति, यत् तत्समये ओफिरजनेभ्यो मयूरहस्तिदन्त-चन्दन-चामीकर-अनर्घमणिमाणिक्यप्रभृतयः पणा आक्रीतास्तेन राज्ञा । अत्र ओफिरशब्दनिर्णये मतभेदोऽस्ति । कतिपयइतिहासविदः कथयन्ति यत् ओफिरम आसीत् एकं नैानिग्रहस्थानम्, गुजरातप्रतिवेशे स्थितम् । अन्ये पुनर्मन्यन्ते, आसीत् अभीरनामधेया पश्चिमसमुद्रतटवर्त्तिनी काचिज्जातिः, ओफिरशब्दश्चाभीरशब्दस्य अन्यदेशगतत्वादुच्चारणभेद इति । अधुनापि एतन्नाम्नाप्रख्याता जातिरेका कठियावाड़जनपदे निवसति । एतच्चान्यत् द्रढिष्ठं प्रमाणम् । अतो भवतु नाम ओफिरशब्दो जातेः स्थानस्य वा बोधकः; परन्तु आसीत्तस्य देशस्य भारतवर्षेण सह व्यवहारः इति न कश्चिदस्वीकर्तुं शक्नोति ।

मयूरहस्तिदन्तौ समुद्दिष्टसमयात् प्राक् ग्रीस-रोम-इजिप्टादिषु अनुपलब्धावास्ताम्, यतः खाइष्टजन्मनः प्राक् चतुर्थशतके युयुत्सुयात्रागतस्यालक्षेन्द्रस्या ( Alexendor ) नुगा एतदवलोक्य महदाश्चर्य्यमन्वभवन् अतिभूमिगतमानन्दञ्च अलभिषत । ( Pleiny the older ) रोमनिवासी प्लीनी ( ज्यायान् ) यः खाइष्टजन्मनः षष्ठि-सप्तति वर्षाण पश्चादभूत्, रोमस्यैतद्देशीयव्यापारेणापहृतमर्थजातं ग्रन्थनिबन्धमकरोत्, महतीश्चिन्ताश्चाप्रकटयत् द्रव्यप्रवाहोन्मुखं स्वदेशमवलोकयन् । तत्समये एतद्देशप्रसूतप्रेषितानां वस्तूनां व्यवहारेऽभिमानं व्यधू रोमनिवासिनः ।

मद्रासप्रान्ते कमबैटोर-मदुरान्तर्गतस्थानेषु पुरातन्यो बह्यो रोमनमुद्राः समुपलब्धाः सन्ति; उत्खननज्ञानविशेषवताम्प्रयत्नात् । ताश्च निःसन्देहं द्वयोर्देशयोः सम्पर्कं सूचयन्ति ।

अथ पुस्तकैश्चिन्हैश्च प्रमाणीकृते भारतीयव्यापारस्य पुरातनत्वे, समयनिश्चितिसम्बन्धी प्रश्नः समुत्तिष्ठते । अत्र मतानि भेदवन्ति सन्ति । केचित् (Pro. max Dunckker) प्रो० मैक्स डङ्कारे प्रमुखा विद्वांसो ब्रुवन्ति यत् खाइष्टजन्मनो वर्षसहस्रद्वयं प्राक् अस्य भारतस्यान्यदेशैर्व्यापारसम्बन्ध आसीत्, केचित्पुनरन्ये व्यापाराय अष्टषष्ठशतकयोर्मध्ये स्थितिमर्पयन्ति । डाक्तरसईसस्य मतेन तु भारतवर्षोऽयं खाइष्टजन्मनः संवत्सराणां त्रिंशत्शतानि पूर्वं बव्हेरुणा सह(max Babylon)व्यवहारमकार्षीत् ।

अथैतेषाम्मतानाम्मूल्यं यद्भवतु तद्भवतु । परन्तु एतत्त्वविवादास्पदमेव यदयं देशोऽतिप्राचीनकाले व्यापारद्वारा अपरिमेयं द्रविणमहार्षीदन्यदेशेभ्यः । आसीदत्रैकः समयो यदा वर्तमानसभ्यताभिमानिन्यो जातयो मूर्खतातमसि आसन् आशिरोरुहं निमग्ना, यदा च-

"एतद्देशप्रसूतस्य सकाशादग्रजन्मनः ।
स्वं स्वं चरित्रं शिरक्षन् पृथिव्यां सर्वमानवाः ॥" इति

# उपदेशलहरी ।

ले०--शास्त्री अमृतलालशर्म्मा, वेदान्त-व्याकरणतीर्थः,
श्रीनारायण विद्याशाला, पेटलाद

बन्धो ! संसृतिवन्धनाशनमिदं तथ्यं सुपथ्यं शुभं
चेतश्चञ्चलतां विहाय वचनं स्वास्थ्येन संश्रूयताम् ।
प्राप्ता पुण्यचयेन संसृति महासिन्धौ त्वया मज्जता
श्रेयः श्रेणिसुसाधिका नृतनुनौर्ध्यायञ्शिवं सन्तर ॥१॥

नित्यानन्दसुधाम्बुधौ स्वहृदये तत्त्वे परे सत्यपि
स्वल्पानित्यसुखाप्तयेऽतिशयितं यत्नं किमालम्बसे ?
प्रत्यक्तत्त्वपरायणां कुरु धियं संरुध्य वाह्यार्थतः
को धावेन्मृगतृड्जलाय निकटे भागीरथी-स्रोतसः ॥२॥

लब्ध्वा जन्मगतानि दुःखवहुले के वा भवे न त्वया
सम्भुक्ता विषयाश्चिरं पुनरहो तानेव किं ध्यायसि ।
कल्पान्तेऽपि हि भोगतो न मनसः शान्तिर्भवित्री तव
तृष्णां दुर्मतिदुस्त्यजां परिहरन् स्वानन्दमग्नो भव ॥३॥

किं त्वच्चिन्तितमत्र सिध्यति विना दैवं मृषाशावशो
भूत्वा ताम्यसि किं महेश्वरपदाम्भोजं भजेष्टार्थदम् ।
क्षुद्रानाश्रयितुं कथं व्रजसि रे लक्ष्मीमदान्धाञ्जडान्
कल्पद्रुं प्रविहाय वाञ्छसि कथं शाखोटकं सेवितुम् ॥४

भूयिष्ठं खलु शायितोऽन्धतमसे मोहाभिधे मायया
स्वप्नान् दुःखसुखावहान्वहुविधान्सन्दर्शयन्त्या मुहुः
बन्धो ! सम्प्रति जागृहि स्वहृदये प्राज्यप्रकाशं शिवं
द्रष्टुं हृन्नयनान्ध्यदोषशमनं ज्ञानाञ्जनं संश्रय ॥ ५ ॥

## प्रश्नाः

उत्पत्तिस्सरवारदेश-सरयूपाराग्रजानां कुतो ?
गोत्राणां प्रभवश्च रामविपुलानां च त्रयाणां तथा?
गर्गादित्रयगोत्रनायकजनुः कालश्च तेषां कथा ?
रामेन्दुप्रमिताश्च के, प्रवर-नेतॄणां च का कल्पना ?
गोत्रेषु प्रवरा रसेन्दुषु कुतो रामा महत्त्वं गता-
श्शाखापादविनिर्णयेऽर्थ इह को मिथ्राद्युपाधौ च कः?

प्रष्टा—श्रीनिरीक्षणपतिमिश्रः,
ब्रह्मचर्याश्रमः, श्रीसरवार पाठशाला

## श्रीकृष्णाह्वानम् ।

( १ )

आगच्छ कृष्ण ! त्वं क्वासि ? माविलम्बं विधेहि हे !
दुरवस्था ममाद्यापि त्वां दुनोति न किं विभो !

( २ )

गीतां ते नाथ ! हा ! गातुं प्रभवामः कथं वयम् ।
परतन्त्र-वशीभूता द्रुता उपरतास्तथा ॥

( ३ )

दुर्वलोऽपि मृतप्रायः प्राणाँस्त्यक्तुं न पारये ।
तवागमन-प्रत्याशा यतो मां जीवयत्यये !

( ४ )

यत्त्वं मद्भाग्यदोषात्स्मरसि नहि "पुनः
सम्भवामीति" वाक्यं,
तत्राहं प्रार्थयँस्त्वां निजतरण-विधिं
नाथ ! दुःखाकरोमि ।
प्रच्छन्नं कर्तुमिच्छस्यहह ! यदि वपुं
चौरिकाभीतिभीतः,
तद्दुःखाश्रैः ततं हा ! श्रयसि नहि कथं
कृष्ण ! कृष्णं ममान्तः !!"

श्रीचक्रदत्तशर्म्मा वहुगुणः ।

## संस्कृते हिन्दी-समस्या-पूर्तिः ।

( स्वर्गीय–गुमानी कवेः सङ्ग्रहात )

( १ )

युधि वैराटिं प्राह किरीटी गोग्रहसन्नहना,
कौरव्येषा योद्धुमुपेता सेना भट-वहना ।
न तु भेतव्यं शिशुना धार्या भवता धीर्गहना,
"नामर्दी तो दई खुदाने मार मार तो कहना ।"

( २ )

सूतो धनुरपि नाग्रहीत् कर्णोऽस्त्राणि बभाज ।
"बाप न मारी पीदरी, बेटा तीरन्दाज ॥"

( ३ )

पर्वणि दानभिया द्विजं दृष्ट्वान्तर्वव्राज ।
अन्येद्युर्वणिगाह तं "पालागन महराज ॥"

( ४ )

शप्त्वा त्वामनुतप्तश्चेद्यः सन्धिं चिकीर्षतीरयुक्तः ।
कृष्णोऽथ दूतमूचे "अब वृन्द गई विलायत को"

( ५ )

कोऽर्होऽग्रे स्यादित्यापृष्टो राज्ञा सस्नेहम्
भीष्मेणोक्तः कृष्णः पूज्यस्त्यक्त्वा सन्देहम् ।
तत्रापृष्टश्चैद्यः प्रोचे नैवं मन्येऽहम्
"तुम किसने फर्माये आपही फर्मे हम् ॥"

[ पुनः कदाचित् ]

संकलयिता—श्रीतारादत्तपन्तः साहित्याचार्यः

## शोकोद्गारः ।

श्रीमत्पण्डित रामगोपालशर्मा महोदयानाम्

रसवसुनिधिचन्द्रे वैक्रमेब्देमधौ वै
दिवसकरसुतिथ्यां शुक्लपक्षे शुभेऽह्नि ।
परिषदि शतमन्योर्विष्णुगाथां प्रगातुम्
सुदिवमुपगतोऽयं रामगोपालदेवः ॥ १ ॥

विषमे समुपस्थिते परम्
सहसा मां प्रविहाय संस्थितः ।
क्व गता तव धर्मसंकथा
त्वयि लीने विहता वचस्सुधा ॥ २ ॥

विगता तव धीरता परा
सुमतिश्चैव दयालुता तथा ।
परलोकमुपस्थिते त्वयि
सकलः सद्गुण एव किं गतः ॥ ३ ॥

कठिनं विधिसंविधानकं
यदयं दीनजनस्यरक्षकः ।
सहसैव गतः क्षितेर्ननु
सकुलं सीदति त्वद्विना परम् ॥ ४ ॥

हे दैव, निष्करुण ! दीनसुखाऽसहिष्णो
दीनान् त्वदेकशरणानपि हंसि कष्टम् ।
पित्रा त्वयैव रहितान् प्रथमं कृतान्नः
भूयः पितृव्यरहितान् कृतवानसि त्वम् ॥ ४ ॥

विहटा, आरा { शोकाकुलः
श्रीरामसुभग ओझा

## नरेन्द्रान्प्रत्यावेदनम् ।

यवनाहत-हिन्दुवृन्दमेद-
प्लवविस्ना विषमैव मेदिनीयम्
अधिवास्य यदि स्वकैर्यशोभि-
श्चिरमेनामुपभुञ्जते नरेन्द्राः ।

परिवर्त्तयिता :—
जयपुरराजगुरुकथाभट्ट-वंश्य-
श्रीनन्दकिशोरशर्मा साहित्याचार्यः




## सुरेन्द्रनाथ शास्त्रिणां शोकषट्कम् ।

( १ )

यस्मिन्तुङ्गमभूधरोच्चशिखरारूढ़े दुरूढ़व्यथा-
व्याघातादुपजातभाववलिता जाता दशाशाः पुरा
विद्वत्सारससंहतिश्च सविकासा, दशाशाः पुनः
साऽऽशाभङ्गमयंस्तमस्तितताः कुर्वन्निहास्तंगतः ।

( २ )

स्वर्गादायातगङ्गाबहलजलपरिप्लाव्यमानाऽङ्गयष्टिः
किं यातो न त्वमेवाऽति विदितपटनावासतो वासरेषु
किं वा वाग्देवता ते नहि वशगमिता दैवतैरर्थ्यमाना
देवेन्द्रस्यापि नाथः सुरनिकरपुरीं यद् गतो गां विहाय ।

( ३ )

सञ्जातास्तमसातता दशदिशः शोकाश्रुधारामियं
मुञ्चत्यक्षिघनाऽऽवली दृढ़तरोच्छ्वासानिलोत्तालिता
अन्तस्ते विरहः समर्पितहविर्वह्निश्चिरम्वर्द्धते
हन्तास्मिन्समये समस्तजनतामाश्वासयेत्को भुवि ?

( ४ )

शून्या सा पदवी परा वत पुराऽकाले त्वयाध्यासिता
विद्या सा विधवा निकाममधुना तारुण्य-सन्धर्पिता
हन्तेयं नहि शोचिताऽपि भवताऽकाले दिवं गच्छता
सर्वत्रैव निरूढ़िताऽपि सुमतिस्त्यक्ता दिवं गच्छता ।

( ५ )

एका कोर्तिश्चिरस्थातिविहितसुकृता या तता भूतलेऽस्मिन्
आश्वासैः सैव सर्वान्प्रकृतिमुपगतानञ्जसा भूरि कुर्यात्
इत्येवं चिन्तयन्तो गुरुतरसुगुणग्राममात्रं स्मरन्तः
सोच्छ्वासं क्षीणकायाः कथमपि दिवसान् साम्प्रतं यापयामः

( ६ )

हरिगीतिका ।

वादादिवाधाध्वंसकेपुतले निषङ्ग इवापरः
योवांग्लभाषापारगो नभसः पतङ्ग इवापरः
यो दुर्गमागमनिगमनिजतन्त्रो मृगेन्द्र इवापरः
शून्या दिशः कृतवानयं योऽसौ सुरेन्द्र इवापरः ।

साहित्यालङ्कार श्रीकुलानन्द मिश्रः
व्याकरणाचार्य्यः ।

# संस्कृत-समाचाराः

## नम्र निवेदनम्।

*सहृदयाः !*

जानन्त्येव श्रीमन्तो यत्संस्कृतभाषायाः प्रचारावरोधे पत्रादीनामभाव एव प्रधानकारणतामवलम्बते। प्रान्तान्तरेषु ज्वलत्स्वपि द्वित्रेषु पत्रप्रदीपेषु विहारप्रदेशोऽयं नितान्तमन्धंतमसमनुभवति। तदतिखिद्यमानमानसैरस्माभिरागामिकार्तिकमासतः प्रतिपूर्णिममेका जागर्तिनामधेया मासिकी पत्रिका प्रकाशयिष्यते। तत्र ग्राहकाणामनुग्राहकाणां लेखकानाञ्च मनोयोगमन्तरा नाशास्यते साफल्यं स्वीयसाहसस्य।

मुद्रापञ्चकं ततोऽधिकं ददद्भिर्माननीयतया, मुद्रात्रयमुत्सृजद्भिर्विशिष्टतया, सार्द्धैकमुद्रया साधारणतया वा सहाय्यमाचरद्भिः संस्कृतजननीजीवनदानपुण्यभाग्भिर्भवद्भिर्भूयताम्।

| | |
|---|---|
| जागर्ति कार्यालयः<br>मुज़फ्फरपुरम्।<br>अनन्त चतुर्दशी<br>( १९८६ ) | पिनद्धसम्पादकतावर्मणोः<br>साहित्यालङ्कारकाव्यतीर्थपदालङ्कर्मणोः।<br>श्रीरामचन्द्रमिश्र-श्रीसुरेन्द्र झा शर्मणोः |

## गढ़वाल-विद्वत्सम्मेलनम्।

गढ़वाल-मण्डलस्थ-विद्वत्समाजस्य द्वितीयवर्षाधिवेशनं श्रीनगरनाम्नि पत्तने फाल्गुनकृष्णनवम्यां सोमवासरे (४-३-२९) सानन्दं ससमारोहं समपद्यत। तत्र च्छात्राणां वार्षिकपरीक्षार्थं समायातानां प्रतिष्ठितानां पौराणाञ्च महती समृद्धिः समजनि। प्रथमं छात्रैः शान्तिपाठादीशस्तवनञ्च विहितम्। सर्वसम्मत्यनुसारं तत्रत्यराजकीयपाठशालाध्यापकाः पं० भैरवदत्तशर्माणः शास्त्रिमहोदयाः सभापतित्वे निर्वाचिताः। वार्षिककार्यविवरणात्प्राक् सभोद्देश्यविषयः प्रकटितो मन्त्रिणा। तत्रडिम्मरसंस्कृतपाठशालाध्यापकानामाचार्यवर्याणां श्रीमतां श्रीवासवानन्दशास्त्रिमहोदयानम्, ऊखीमठविद्यालयाध्यापकानां धर्मभूषण-श्रीमहिमानन्दशर्मणाम्, मैकोटिस्थपाठशालाध्यापकानां श्रीवीरवरानन्दशर्मणाम्, तथा ऊखीमठविद्यालयस्थटिहरीराज्यान्तर्गत-शाखापाठशालाध्यापकानां श्रीबालकृष्णशास्त्रिमहोदयानाम्, देवप्रयागकीर्तिपाठशाला-प्रधानाध्यापकमहोदयानाम्, शिष्टाचाराद्यनेकोपयुक्तसामयिकविषयेषु समभूवन्सदोजनहृदयाह्लादकानि महत्वपूर्णानि भाषणानि। ततश्च ससाधुवादं सभापतिमहोदयैरुक्तभाषणानां निष्कर्षं समुपदिशद्भिः संस्कृतसाहित्यस्य सकलभाषाविभाषाभ्यः प्रकटीकृतम् गौरवं सुरीत्या। ततोह्यधस्तनानां प्रस्तावनां स्वीकृतिसमादरोऽभवत्।

(१) प्रस्तावः—गतवर्षे कतिपयानां छात्राणां परीक्षोत्तीर्णच्छात्रनामावलीपत्रेषु नामोल्लेखाऽभावात् परीक्षोत्तीर्णताप्रमाणपत्रप्राप्त्यनन्तरं तेषां सफलतां ज्ञात्वाऽपि संवत्सरोऽयं व्यर्थतामगात्। तत्र विषादं समुद्वहन्तीयं सभा निश्चिनोति—यदन्यदाप्येवंविधघटनायां छात्राणां महती हानिर्भाविनी। अत एतद्विषये प्रार्थनीया डि० बो० चेयरमैन महोदयाः

यत्ते तत्र लिखन्तु येन वाराणसीय-संस्कृत-महाविद्यालयाध्यक्षवरा अग्रे सावधानतया परीक्षोत्तीर्णच्छात्रनामानि प्रकाशयन्तु । येन भविष्यत्येवंविधा हानि र्माभवेत् ।

(२) प्रस्ताव :—संस्कृतपाठशालासु सर्वासु पाठशालाध्यक्षाश्छात्राणां स्वास्थ्यरक्षार्थै यथावसरं यथोपलब्धप्राणायामादिकन्दुकक्रीड़नादिमप्यन्यतमं कारयेयुः ।

(३) प्रस्तावः—पाठशालाध्यक्षाणामुचितं भवेत् यत्ते स्वकीयासु पाठशालासु सदाचारपद्धतेरपि सत्कर्मकाण्डमुपक्रमं विदध्युः ।

## सनातन-धर्म-सभा ।

### वार्षिकोत्सवः

चूरूस्थ श्रीसनातनधर्म-परिषद् एकोनविंशतिवार्षिक-महोत्सवो महता समारोहेण भाद्रपद मासस्य १०-११-१२ तिथिषु सुसम्पन्नम् । प्रथमदिवसे श्रीवेदभगवतः शिविका ( नगर कीर्त्तनानुसारं ) चतुर्वादनकाले सुमहता प्रबन्धेन सह निःसारिता । तथा त्रिषु दिवसेषु रात्रौ श्री अखिलानन्द कविरत्न, श्री-भीमसेन शास्त्रि, महोपदेशक, श्री-श्रीराम शर्मप्रभृति विदुषां सनातन-धर्म-प्रतिपादन-विषये सुमधुराणि प्रभावोत्पादकानि भाषणानि समभूवन् । श्रीसनातनधर्मस्य दिनत्रयं चारमधिकं सञ्जातमिति चूरूनगरनिवासिनां सौभाग्यं खलु ।

वासुदेव शास्त्री जोशी काव्य-विशारदः
सहकारी मन्त्री ।

(४) प्रस्ताव :—समितिरियं निर्धारयति प्रार्थयते च गढ़वालीपत्रमुद्राधिकारिणो, यत्ते स्वपत्रे संस्कृतपरीक्षोत्तीर्णानां नामानि कृपया शीघ्रं प्रकाशयेयुः । यतो गजटपत्रं गढ़देशे सार्वत्रिकं न । अन्ते धन्यवादेशस्तुतिपुरस्सरं सभाविसर्जनम् ।

निवेदक :—
गढ़वाल विद्वत्समाजमन्त्री—
श्रीबालमुकुन्द शर्मा

## रावणेश्वर संस्कृतविद्यालयोद्घाटनम् ।

महदेतत्सौभाग्यमन्तेवासिनामनेकविषयाध्ययनमिच्छतां यच्छ्रावणशुक्लैकादशीगुरुतो रावणेश्वर संस्कृतविद्यालयो विद्योतते । अयञ्च श्रीमद्वैद्यनाथ चरणारविन्दमरन्दस्वच्छन्दपानानन्दमानसानां स्वर्गीयमहाराजबहादुराणां सनातनधर्मैकधुरन्धराणां श्रुतिस्मृत्याद्यनेक विषयस्वतन्त्राणां वृटिशशासकप्राप्त के. सी. आई. ई. इत्युपाधिविभूषितानां तथा काशीस्थभारतधर्ममहामण्डलाल्लब्ध—"धर्मसुधाकरो" पाधिविलसितानां ऑनरेबूल श्रीमद्रावणेश्वरप्रसाद सिंहवर्म्मणां महीन्द्राणां स्मारकत्वेन तन्नाम्नैव तत्तनुजनुषा श्रुतिस्मृतिपुराणेतिहाससङ्गीतसाहित्य विविधविषयविदुषा शब्दन्यायाद्यनेकतन्त्रस्वतन्त्र पण्डितमण्डलीजुषा चिरञ्जीविना शुभंयुना स्वकुलकमलदिवाकरेण श्रीमच्चन्द्रमौलीश्वरप्रसादसिंहवर्मदेवमहोदयेन प्रास्थापि ।

अस्मिंश्च शब्दन्यायादिनिखिलशास्त्राध्यापकत्वेन सर्वतन्त्रस्वतन्त्र पण्डित श्रीगोकुलानन्दशर्म मिश्रोपनामकश्रीमदुमानाथशर्म काव्यतीर्थ ज्यौतिषाचार्यश्रीषडाननशर्म--झोपनामक-श्रीमदुमानाथशर्म्माणो-मैथिलास्तथा शाकद्वीपि श्रीहरगौरीशर्म्मा च इत्येते पञ्चाध्यापका नियुक्ताः, स्वां स्वामध्यापनकलां तन्वानाः समप्रकाशन्ते।

सोऽयं सार्वजनीनो रावणेश्वर संस्कृतविद्यालयः प्रतिदिनमुपचीयमानश्चिरस्थायितामनुभूयादिति।

श्रीउमानाथमिश्रः काव्यतीर्थः।



## समालोचनम्।

कल्याणस्य गीताङ्कः।

मोहमयीस्थ-सत्सङ्ग-भवनतो वर्षचतुष्टयात् प्रकाश्यते कल्याणं नाम कल्याणं हिन्दीभाषामयं मासिकं पत्रम्। हिन्दीभाषायां ज्ञान-धर्म-भक्ति-विषयकमिदमेकमेवाद्वितीयं प्रकृष्टतरं मासिकं पत्रम्। एतस्य सम्पादकः श्रीमान् हनुमानप्रसाद् पोद्दारमहाशयो विद्यते। गोरक्षपुरस्थ-गीता-यन्त्रालयतोऽस्य मुद्रणं भवति। एतस्य सञ्चालिका, भारतीयश्रेष्ठिनां धनवती संस्था सत्सङ्गभवननाम्नी विद्यते। धनबाहुल्यादेव विज्ञापन-समालोचनादि-विविध-प्रपञ्चरहितस्य कल्याणस्य सम्पादनम्, प्रकाशनमः, मुद्रणम्, पत्रादिकं सर्वमप्युन्नततरं रमणीयञ्च भवति। पत्रस्यास्य नीतिर्हिन्दीसंसारस्य महत्त्वं गौरवञ्च सम्पादयति। नैतादृशं समुन्नतविषयकं पत्रमेकमप्यासीदिति।

भाद्रमासे पत्रस्यास्य गीताङ्कः प्रकाशितो-विद्यते। तं दृष्ट्वा हर्षोत्फुल्लमानसा वयं पत्र-सञ्चालकानामधिकारिणाञ्च प्रशंसां कर्तुं नैव पारयामः। हन्त! हिन्दीभाषायां प्रतिवर्षं न जाने कियन्ति पत्राणि विशिष्टाङ्कं प्रकाशयन्ति, परमेतस्य विशिष्टाङ्को वस्तुतो विशिष्ट एवाङ्कः। एतस्मिन्नाङ्के पञ्चशतपृष्ठानि, ऊनद्विशतचित्राणि च सन्ति। प्रायः सर्वेषां भारतीयानां पाश्चात्यानाञ्च प्रधान-विदुषां गीता-सम्बन्धिनो लेखाः सन्ति। गीताविषये समस्त-भूमण्डलवासिनां विद्वद्धुरीणानामेकत्र विचार-संग्रहः सुदुर्लभोऽतिप्रयत्नसाध्यश्च। गीताङ्कसम्पादकौ बाबाराघवदास-हनुमानप्रसाद-पोद्दार-महोदयौ हिन्दीजगतः संस्कृत-संसारस्य च परमधन्यवादार्हौ स्तः। हिन्दीभाषा-पत्रसम्पादकाः केवलं हिन्दी-पण्डितानामनूदितैश्चौरितैश्च व्यर्थ-लेखैः, कविताभासैः, रमणीनां रमणीयैश्चित्रैरथवा तेषामेव हिन्दी-पण्डितानां शतशः प्रकाशितैश्चित्रैर्विशिष्टाङ्कं विशेषयन्ति, समालोचनञ्च कारयन्ति प्रयत्नेन। गीताङ्कस्तु स्वयमेव मदयति मानसम्। लेखाश्चात्र तथा गम्भीराः, मननीयाः, गवेषणापूर्णाः सन्ति; येन विदुषां भवति महादानन्दसन्दोहतुन्दिलं चेतः। किम्बहुना, अयं द्रष्टव्य एवाङ्कः। सर्वैरपि हिन्दुभिरेष स्वसविधे संस्थापनीयोऽयमिति साग्रहं निवेदयामः। अस्य मूल्यमपि विचार्यमाणं नितरां स्वल्पं सार्द्धमुद्राद्वयमेव विद्यते। 'गीताप्रेस, गोरखपुर' इति सङ्केतेन लभ्यते।

वयमस्य कल्याणस्य कल्याणं कामयमानाः सञ्चालकेभ्यः सम्पादकेभ्यः साधुवादान्, धन्यवादान्, आशीर्वादाँश्च दद्मः ।

किसान—

सम्पादकः—श्रीसुखसम्पत्तिराय भण्डारी। किसान-कार्यालय-इन्दौरतः प्रकाश्यते। वार्षिकमूल्यम्-३॥), कर्षकेभ्यो ३)।

पत्रमिदं कृषिशास्त्रप्रधानम्। कर्षकाणां भूमिपतीनाञ्च कृते नितरामुपकारजनकम्। कृषि सम्बन्धिनो वपन-रोपण-दोहद-वर्धन प्रभृतयः सर्वेऽपि विषयाः सङ्ग्राह्याः नितरामुपकारकाश्च सन्ति। कर्षकाणां हिताय नैतादृशमन्यत्पत्रं कुत्रापि हिन्दी भाषायां प्रकाश्यत इति दीर्घजीवनमस्य कामयामहे। अत्र महतां कृषिशास्त्रमर्मज्ञानां प्राच्य-पाश्चात्यविदुषां लेखाः प्रकाश्यन्ते। अस्यसम्पादका अपि हिन्दी भाषा-साहित्ये लब्धप्रतिष्ठा विद्वांसो लेखकाः सन्ति। आशास्महे दैनन्दिनमस्य समुन्नतिम्।

भूगोल—

सम्पादकः—श्रीरामनारायणमिश्रः, बी० ए० इविङ्गक्रिश्चियन-कालेज-प्रयागतोऽस्य प्रकाशनं भवति। वार्षिक मूल्यम्—३) मुद्रात्रयम्

हिन्दी भाषायांभूगोलविषयकमिदं पत्रम्। इदमपि पत्रं स्वविषये प्रधानतममेकमेव। अस्य विषयाः, पत्राणि, सम्पादनम्, प्रकाशनम्, मुद्रणम्, सर्वमपि सन्तोषप्रदम्। एतादृशस्य पत्रस्य विद्यते महत्यावश्यकता। मध्ये पत्रस्यास्य मुद्रणमवरुद्धमासात्, यतो न सन्त्येतस्य गम्भीर-विषयस्य पत्रस्य प्रियाः] पाठकाः। तथापि सम्पादकस्य प्रबलेनाध्यवसायेन प्रचलितमिदमिति पठित्वा भृशं दूयते चेतः। अस्तु कार्याण्यारभमाणं हि पुरुषं श्रीर्निषेवते। पत्रस्यास्य समुन्नतिं जगदीश्वरात् प्रार्थयामहे।

बालसुधा—

अमृतसरतः प्रकाश्यते।

बालोपयोगिपत्रमिदं पञ्जाबप्रान्तात् हिन्दीभाषायां प्रकाश्यते। मध्ये मध्ये पञ्जाबीभाषाऽपि भवति पञ्चाम्बु प्रदेशतो हिन्दीपत्रं प्रकाश्यत इति तु महत्सन्तोषास्पदमस्माकं प्रचार दृष्ट्या परमस्य पत्रस्य स्वरूपं सम्पादनञ्चालोक्य विषीदति; चेतः। बालकानां कृते शिशु-बालसखा-खिलौना-बालक-प्रभृतीनि पत्राणि हिन्दीभाषायां प्रकाशमायान्ति; परं तेषामग्रे बालसुधामालोक्य वयं चिन्तिता भवामः। बालसाहित्य-सम्पादने प्रकाशने च यावान् सामग्री-सम्भवः, अनुभवः विभवश्चापेक्ष्यते न तावानस्याः बालसुधायाः, सविध इति। न वयमस्याः सञ्चालकानामुत्साहह्रासं कुर्मः; प्रत्युत स्वीयां सम्मतिं प्रकटयामः। मन्ये सञ्चालकाः सम्पादकाश्चास्योत्थाने बद्धपरिकराः भविष्यन्ति, वयमस्याः पञ्चाम्बुप्रान्ते बालकेषु हिन्दी प्रचारिण्याः पत्रिकायाः सर्वदैव-समुन्नतिं कामयामहे।

*सम्पादकौ,*

## आत्म-विनिवेदना।

अयि प्रेयांसः सुप्रभात-पाठकाः!

एतज्ज्ञात्वा परं विषादमुपगमिष्यन्ति भवन्तो यत् सुप्रभातमिदं विगतेषु दिवसेषु विगतजीवित-

मिवासीत्, आसीदित्यस्य नायमर्थो यदिदानीं नास्ति; अस्त्येव कष्टमयमेवास्य जीवनम्; परन्तु परिश्रमधनानामस्माकं सामाजिकानामयाचकत्व-मेवास्य प्रधानं कारणम्। अपरं कारणं पत्रस्य यथासमय-प्रकाशनाभावः । पत्रस्य यथासमय प्रकाशनाभावेन बहवो ग्राहका अस्य ग्राहकत्वं त्यक्तवन्तः। एतस्यापि कारणं धनाभाव एव। यथा समयं यन्त्रालये धनं दातुं न वयं प्रभवामः, यन्त्रा-लयश्चोपेक्षां करोति। धनाभावेनैवास्माकं सविधे सहायकस्य, भृत्यस्य चाभावः,येन यथा समयं कार्याणि स्युरिति। तथापि यथा कथमपि प्रचलतोऽ-स्य मध्येमार्गं महानन्तरायः सम्वृत्तः। अस्य प्राण भूतानां प्रधान-सञ्चालकानां प्रियसुहृदां श्रीगिरीश शुक्ल महोदयानां कैलाशवासेन कार्यकर्तृरभावस्तु सञ्जात एव; परं सुप्रभातस्य धनाभावोऽपि सञ्जातः शतात्त्रयाधिकं धनं सुप्रभातस्य तेषामाकस्मिकनिध-नेन गतमिति सुप्रभातस्यैतावती हानिः कथं वोढुं शक्येति स्वयमेव विचारयिष्यन्ति भवन्तः तेषां द्विसहस्रमितं ऋणन्तु काशीस्थैस्तेषां मित्रैः संगृह्य प्रदत्तम् परं सुप्रभाते तदानीं न केनापि दृष्टिपातः कृत इति साम्प्रतं तदेवान्तरायरूपेण सुप्रभातस्या-वतिष्ठते। एतस्यामप्यवस्थायां यथाकथमपि यतस्त-तो धनानि संगृह्यास्य प्रकाशनाय प्रयतमानैरस्मा-भिः सुप्रभातस्य ग्राहक-समृद्धिरेव सर्वोत्तम उपाय-इत्यस्य सम्पादने नवीना व्यवस्था व्यधायि। एवं व्यवस्थासम्पादने महान् विलम्बः सञ्जातः, येन भवन्तो मनसि विचारयिष्यन्त्यन्यदेव। अत एवा-स्माभिः सुस्पष्टं प्राख्यापितेयमवस्था श्रीमतां पुरस्तात्।

एतस्मिन् विपत्प्रतीकारकाले संस्कृत-साहित्य-समाज-प्रधानसदस्या अपि किंकर्तव्य-विमूढास्तूष्णीं स्थिताः। यैः सहायक-सदस्यत्वं स्वीक्रियते विद्व-द्भिस्तैरपि स्वीयं शुल्कं यथासमयं न प्रदीयते हन्त! "कृशे कस्यास्ति सौहृदम्"

चिरकालात्पुनरस्माकं ज्येष्ठभ्रातृकल्पैः सुप्रभात स्य जीवनदातृभिः, भूतपूर्व-सुप्रभात-सूर्योदय-सम्पा दकैर्विद्वद्वरैः श्रीविन्ध्येश्वरीप्रसादशास्त्रिभिरस्य सम्पादने भूयान् भारो गृहीतः। तेऽस्य सम्पादने यावच्छक्यं सन्ति बद्धपरिकराः। एवमस्माकमभि-न्नतमहृदयेन, ज्येष्ठेन, शारदा-संस्कृत-ग्रन्थमाला-सम्पादकेन, भूतपूर्व-"सहस्रांशु" सम्पादकेन सुप्रभात-प्रकाशकेन विद्वद्वरेण्येन श्रीगौरीनाथ पाठकसाहित्याचार्यमहोदयेनास्य सुव्यवस्था स-म्पादने प्रदर्शितो महानुत्साहः, इत्येवं पुनरिदं नवीनया रचनया प्रकाशितं सुप्रभातं पाठकानां पुरस्तादुपतिष्ठते। विविधेऽस्मिन् कार्य व्यतिकरे यथाकथमप्यङ्कद्वयमिदं प्रकाश्य वयं पाठक-प्रवरान् प्रार्थयामहे, यत्तेऽप्यस्य जीवने यथायोग्यं साहाय्य-मवश्यं वितरन्तु। एतदप्यवधेयं यन्न वयं कमपि धनिकं राजानं वा याचाम ऋते संस्कृत भाषाप्रणयिभ्यः।

अग्रिम आश्विनाङ्कोऽपि द्विसप्ताहाभ्यन्तर एव पाठकानां सेवायां समुपस्थास्यते, यथासमयं प्रकाशनायापेक्ष्यते कियानपि कालः। तत्कांचि-काङ्क्ष्यावदे-तत्विलम्बक्षतिपूरणे समर्थःस्यामित्या-शास्महे। तावच्च सुप्रभात-पाठका अस्य प्रचाराय प्रयतन्ताम्। यद्यस्य ग्राहक-सङ्ख्या द्विसहस्रमिता भवेत्तदा तु न कदाप्यस्य हानिः सम्भाव्येत। तदर्थं

सर्वथा सर्वदा च ग्राहकैरनुग्राहकैर्यतेलिममिति सानुरोधं निवेदयामः ।

* * * *

## लेखका अवदधतु ।

सुप्रभातस्य महत्त्वं गौरवं प्रचारः-सर्वमिदं सुसम्पादनाधीनमेव । न केवलं सुप्रभातस्यैव;सर्वेषामेव पत्राणाम् । तदिदानीं यावदर्थकष्टदुःखिता वयं सम्पादनमस्य कर्तुं न शक्नुमः । परं साम्प्रतमत्रैव विशेषतोऽस्माकं दृष्टिर्विद्यते सुप्रभाताधिकारिणाम्। तत्केचनावश्यका नियमा लेखकानां पुरस्तादुपस्थाप्यन्ते । लेखकाश्च सुदृढमवलोकयन्तु ।

१—लेखकैर्लेखाः सुस्पष्टाक्षरैर्लेख्याः, सुस्पष्टाक्षराणामभावेन लेखानां संशोधने महतीहानिर्भवति। कदाचित् सम्पादकानामभावेऽपि छात्राः संशोधनं कुर्वन्ति, तदा तु महाननर्थः संजायते, लेखकाश्च कुप्यन्ति । अस्पष्टाक्षराणां लेखानां परावर्तनेऽपि लेखकानामस्माकञ्च सङ्कोचमश्नुते चित्तम्,विलम्बश्च सञ्जायते । लेखकैः पत्रस्य मध्ये पार्श्वयोर्वा स्थानं रिक्तमेव त्यक्तव्यम् । अन्यथा परावर्तने, संशोधने परिवर्द्धने वा कष्टं भवति। यद्येवं नियमिता लेखा नागमिष्यन्तिचेद्वयं तेषां प्रकाशने सर्वथाऽसमर्था भविष्यामः ।

२—लेखकैर्लेखाः सरल-सरलाः प्रेषणीयाः । क्लिष्टसन्धयो दूरान्वयिनः क्लिष्टभाषानिबद्धा लेखा नैव प्रेषणीयाः । सरलतैवास्माकमादर्शभूता स्त्रियो बालकाश्छात्राश्चामुं पठन्ति, यदि तेनावगन्तुं प्रभविष्यन्ति चेत् व्यर्थ एव लेखकप्रयासः स्यात् । बहवो लेखकाः सरल-सरसां मधुरां स्वाभाविकीं भाषां विहाय कृत्रिमभाषालेखनेन पण्डित्यं प्रदर्शयन्ति। अस्माकं मतेतु भाव-गाम्भीर्यं एव पाण्डित्यप्रकर्षः। भाषा तु सैवोन्नततमा, यया साधारणा अपि भावमवगच्छेयुः ।

३—लेखकैर्लेखा, संक्षिप्ततया लेख्याः । केचन विशेषणैर्लेखस्यभावं कदर्थयन्ति । व्यर्थ-विशेषणैः कवित्त्व-प्रख्यापनं भवति केवलम् । विशेषणप्रियैर्लेखकैर्गद्यकाव्यं लेखनीयम् । इतरविषयाणां लेखकैः संक्षिप्ता एव प्रबन्धा लेख्याः । कृशताभिमता लोके पीनता न तु शोभना । विशेषण—गवेषणे भाव-दौर्बल्यं भवतीति सर्वदा संक्षिप्ताः, सरलाः, भावप्रचुरा एव लेखाः प्रेषणीयाः । क्रमशः प्रकाशनीयाः दीर्घकाया लेखाः, सम्पूर्णा एव प्रेष्या; नान्यथा कथमपि प्रकाशनं स्यात् । पुस्तकान्यपि प्राचीनानि समस्तान्येव लिखित्वा प्रेषणीयानि ।

४—संस्कृत–पाठशाला-विद्यालय-च्छात्रावास-सनातनधर्मसभा-पण्डित-च्छात्रादिसम्बन्धिनः समाचाराः विना मूल्यं प्रकाशयिष्यन्ते । तत्तेषां प्रेषणमपि लेखकैर्विधेयम् । ते चापि संक्षिप्ताः स्युः । संक्षिप्तसमाचाराः सत्वरं प्रकाशिता भविष्यन्ति । तेषां कृते स्वतन्त्रतया स्थानं रिक्तं स्थास्यति ।

५—सामयिक-प्रवाहसम्बन्धिनः, खण्डनमण्डनात्मकाः, व्यक्तिगताक्षेप-परिपूर्णाः, साम्प्रदायिकता दूषिता वा लेखा न प्रकाशमेष्यन्ति । यतः सुप्रभाते साहित्य–विज्ञान–दर्शन–इतिहास–पुरातत्त्व – शिक्षा समाज--जीवनचरित्र--परिचय--समालोचनप्रभृति विषयाणामेव लेखाः प्रकाशिता भविष्यन्ति । सुप्रभातं संस्कृत-समाजे केवलं ज्ञान-विज्ञान-समृद्धिमपेक्षते ।

६—संस्कृतस्य विविध-विदुषां जीवितानां नाम शेषाणां वा जीवनचरित्राणि, तेषां रचनाः, संस्कृत विद्यालय-महाविद्यालयादीनां विशिष्टः परिचयः प्राचीन-नवीन-वाङ्मय-ग्रन्थरत्नानामालोचनादिकम्, तेषां परिचयश्च प्रत्यङ्कमेकेकशः प्रकाश्येत। तदर्थं लेखकैः सर्वथा यतनीयम्। सचित्रलेखानां प्रकाशने चित्रादिप्रबन्धो लेखकैरेव विधेयः।

७—सम्पादकीय-पत्राणामुत्तराणि सप्ताहाभ्यन्तरे मेलिष्यन्ति। सम्पादकाः सप्ताहाभ्यन्तर एकस्मिन्नेव दिवसे पत्रोत्तराणि दास्यन्ति। आवश्यक पत्राणामुत्तराणि तु सदैव मेलिष्यन्ति। पत्रोत्तरालाभेन केचन क्षुब्धाः सन्ति लेखकास्तैरिदानीं क्षन्तव्यम्। अप्रकाश्यानां सत्वरं प्रकाश्यमाणानां च लेखानामुत्तराणि न प्रेषितानि भविष्यन्ति। मार्गव्यये प्राप्ते सति सप्ताह द्वयाभ्यन्तर एव अस्वीकृता लेखाः परावृत्ताः स्युः।



**वृद्ध-बाला-विवाहः, कतिपयशास्त्रिणां समर्थनञ्च।**

*चित्रकारः—श्रीकेदारनाथ शर्म्मा त्रिपाठी*

---

## आवश्यक-सूचना ।

साम्प्रतं सुप्रभात-कार्यालयः गोदौलियास्थ-काशीनरेश-मन्दिरे, ( यत्र प्रथमं "सनातनधर्मोदय"-कार्यालय आसीत् ) सायं सार्द्धपञ्चादनं यावत् समुद्घाटितस्तिष्ठति। प्राचीन स्थानेऽपि ( सुँघनी साहूका शिवालय, टेढीनीम ) तस्मिन्नेव समये कार्यालयः सन्तिष्ठते। उभयत्र कार्यार्थिभिः समागन्तुं शक्यते।

संस्कृत-साहित्य-समाजः काशी। | **श्रीमदनगोपाल शर्म्मा।** कार्यालय-सहायकः,

---

Published by Gaurinath Pathak and printed by Rameshwar Pathak at the Tara Printing Works, Benares.

षष्ठ-वर्षे
षष्ठोऽङ्कः

आश्विनः
१९८६

# सुप्रभातम्

संस्कृत-साहित्य-समाजस्य सचित्रं मासिकं मुखपत्रम् ।

तिमिर-ततिमुदस्यद्भेदताराविलुम्पन्, नयदधि-सुरभाषाभापि जागर्तिमुच्चैः ।
विबुध-विहग-वादैराह्वयज्ज्ञानभानुम्, विलसतु भुवनेऽस्मिन् सर्व्वतः 'सुप्रभातम्'॥

सम्पादकौ—श्रीकेदारनाथशर्म्मा सारस्वतः

श्रीविन्ध्येश्वरीप्रसादशास्त्री च,

व्यवस्थापकः—

कविराजः श्रीसत्यनारायणशास्त्री भिषक्शिरोमणिः

( टेढ़ीनीम, बनारस-सिटी )

वार्षिकं मूल्यम्—३)
माननीयेभ्यः—१२)

छात्रेभ्यः—१॥)
वैदेशिकेभ्यः—५)

## लेख-सूची ।


१—मारुति शतकम् ।
स्वर्गीयमहर्षि रामावतारशर्म्मा ... ९७

२—अकच् प्रत्ययार्थ निर्णयः ।
श्रीनन्दकिशोरशर्म्मा साहित्याचार्यः ... ९८

३—सुभाषितानि ।
श्रीदामोदरशास्त्री भिषगाचार्यः ... १०१

४—नवयुवकेभ्यो वेदसन्देशः ।
विद्यावाचस्पति श्रीवेदव्रतशास्त्री ... १०१

५—शुभाभिनन्दनम् ।
संस्कृत-साहित्य-समाज-सदस्याः ... १०३

६—वरवै विलासः ।
श्रीमथुरानाथशर्म्मा भट्टः, साहित्याचार्यः

७—शोक-प्रकाशः ।
श्रीजयनन्दन झा, व्याकरणाचार्यः

८—प्रणयी ।
श्रीश्यामानन्द झा, शर्म्मा

९—सम्पादकीयम् ।

१०—आयव्यय-विवरणम् ।
मदनगोपालशर्म्मा


## चित्र-सूची ।


१—दानवीरः राजावलदेवदास बिरला ।




विविध-विषय-विभूषितम्, अद्वितीयम्, सचित्रम्, संस्कृत-मासिक-पत्रम् ।

| षष्ठ-वर्षे | सौर-आश्विन १९८९ विक्रमाब्दीये | षष्ठोऽङ्कः । |
|---|---|---|

## मारुति-शतकम् ।

प्रणेता-स्वर्गीय-महर्षि-श्रीरामावतारशर्म्मा
महोदयः

…श्वद्विश्वस्य मुष्णन्त्वतशियिविसरं शेमुपीकल्मषं द्रा-
…गर्जा हर्यादिदेवैरतिरभसनुता गन्धवाहात्मजस्य ।
…पातु प्राप्तास्वपास्तप्रलयघनरवास्वन्तरं भूतलस्य
स्तौति प्रोद्यन्निमीलो भुजगपरिवृढः श्रोत्रनेत्राद्वयत्वम् ॥ १ ॥
…यासामाशान्तगानां न भवति जलधिर्मानसीम्नेऽस्तपारो
…यासां वासाय पूर्णं ध्रुवमतुलमिदं ब्राह्ममण्डं न भाण्डम् ।
युष्माकं निर्विकल्पं प्रददतु सततं भावुकं स्थायुकं ता
…गर्जाः पर्याप्तमर्यादुदितभयधुताद्भुदूधुराः पावमानेः ॥ २ ॥
…भानोः सप्तापि सप्तीन्सपदि तरलयत् कन्दरामन्दिराणि
…व्याप्तं सप्ताचलानां जलमवदलयत्सप्तपाथोनिधीनाम् ।
सप्तद्वीपस्थजन्तुश्रवणतटमटत्सप्तवर्गात्ममूर्तेः
…सूनोर्दिश्याद्जस्रं बहुलतरविपद्वर्जनं गर्जनं वः ॥ ३ ॥
…लोकस्य क्षेममेकं द्वितयमपि जगत्खण्डयोर्व्यश्नुवा…
…नेत्राणि त्रीणि शम्भोर्व्यथयदथ नुतं किञ्च वेदैश्चतुर्भिः ।
पञ्चास्यांस्त्रासयद्द्राक् षडपि शरजनेराननान्युत्क्रयत्स्ता-
न्मूर्त्यै संख्यादरिद्रान्विकलयदहितान्मारुतेर्गर्जितं वः ॥ ४ ॥
यस्मिन्ब्रह्माण्डमाक्रामति भयरभसत्रस्तगात्रः स्खलन्द्रा-
क्छक्रः सिंहासनाग्रात्प्रियमतनुचरैः श्रावितः स्तब्धगात्रः।
आनन्दान्न न्यपप्तद्दलयतु भवतां दग्धलङ्कस्य पङ्का-
न्च्छङ्काशून्यान्तरस्यानिलतनुजनुषोऽभ्यूर्जितं गर्जितं तत् ॥५॥
खर्जूदुर्जातबाहूज्जगदुदितबहुस्फूर्जथून्निर्जरारी-
न्संतर्ज्य प्राज्य राजद्विजरुतविलसत्सर्जखर्जूरभूर्जम् ।
पर्जन्यस्याश्रितानां दशवदनवनं भृद्गतः पार्श्वदस्थे-
र्गर्जाऽभ्यूर्जस्वलं वो ग्लपयतु सुमनोवर्जितं दुर्जनत्वम् ॥ ६ ॥
यस्मिन्नुद्याति तारापथमतनुभयो ध्यानमध्यास्त वेधाः
स्थाणुः स्थाणुत्वमागाच्चलितफणितनोरच्युतो न च्युतोऽभूत् ।
सर्वान्धर्मान्तरायांस्त्वरितमधरयद् गन्धवाहेः समिद्धां-
श्रद्धां धर्माध्वनीनां प्रदिशतु भवतामूर्जितं गर्जितं तत् ॥७॥
धाराधारानुदारान्सपदि तरलयत्स्फारबाणारवाणा-
मच्छामच्छातभूम्नां रुचिमवदलयद्दानवानां नवानाम् ।
सत्रासत्राणसत्त्वं रसितमनलजस्यास्त्वमानावमाना-
नागानागासुकार्तीन्निदधदशिवदं वक्रमायक्रमाय ॥ ८ ॥
हारं हारं गणानां विबुधपरिषदां किञ्च गाङ्गं तरङ्गं
तुङ्गं शीताद्रिश्रृङ्गं तुरगमुखवधूसंसदां दर्शयतस्तात् ।

साहेन्द्रादुत्पतिष्णोः सितमणिशिखरान्मारुतेश्चारुतेजो
लाङ्गूलं क्लेशकूलङ्कषमतनु सदा साधुलोकस्य सिद्ध्यै ॥ ९ ॥

माहेन्द्रे सानुभागे हरितमणिरुचीपत्रजालावृतान्तं
पार्श्वव्यावर्त्तमाने द्युमणिशशिफले विभ्रदभ्रान्तवृत्तेः ।
आरात्तारासहस्रप्रचुरकुसुमकिरं मारुतेर्वृक्षतुल्यं
पुच्छं गुच्छं ग्रहाणां क्षिपदखिलसुखं धुक्षयत्वक्षयं वः ॥१०॥

मूले मेरोर्मयूखैर्दिवसकरकराघ्रातपातैश्च मध्ये
कोटौ वैरिञ्चिपङ्केरुहरुचिनिचयैः पाटलापिङ्गलाभम् ।
कुर्वत्संवर्त्तकालज्वलदनलशिखाविभ्रमं वायुसूनो-
र्व्योम्नि द्रोणाचलार्थं द्रुतगमनभृतः पुच्छमास्तां विभूत्यै ॥११॥

विद्योतैः स्फाटिकाद्रेः क्वचिदतिधवले क्वापि सूक्ष्मस्य भाभिः
पिङ्गे श्यामे क्वचिच्छ्रीरमणरुचिचयैश्चञ्चरीकप्रकाशैः ।
यस्मिन्नाकाशमाक्रामति सुरझरिणीब्रह्मजासूर्यजानां
सङ्क्रान्तिः सुराणां भवति तदवतादाञ्जनेयस्या पुच्छम् ॥१२॥

भ्राजिष्णु भ्रामयद्भ्रभ्रमरभरभृताद्भ्रमद्भ्रभं द्राक्
स्वः सुभ्रूप्रभातं भणदिव बहुलैर्विभ्रमैर्भ्रमस्रुभ्रम् ।
भूयो भूयो भ्रमीभिर्भ्रमयदुडुगणं बभ्रुरोमोद्धताभं
भ्राट्के भ्रातृव्यलोकान्क्षितु हनुमतः पुष्पपुच्छं त्वदीयान् ॥१३॥

धूम्याभूमच्छलोद्यद्बहलतरशितिच्छायशैवालजास-
च्छन्नाग्निच्छद्मपद्मप्रकटपरिबलन्नाललीलां दधानः ।
लङ्कातङ्काय तारापथमभिपततो मारुतेर्वालहस्त-
स्ताद्धस्तापाऽऽयताऽपायविनिहतिकृते वत्सराणां सहस्रम् ॥१४

"वेधा धैर्यन्दधातु प्रथयतु पटुतां निर्जरारिप्रमाथी
पृथ्वीं दध्याद्धृतिं च प्रमथपतिरसौ मारुतिर्लङ्घतेऽब्धिम् ।"
इत्युच्चैरन्तरीक्षे भणितुमिव जवादुत्थितः स्तात् श्रिये वः ॥१५॥

भूयाद्भूयानभूयांस्त्रिदिवमवतरन्पारदृश्वाम्बुधीनां
लोकालोकावलोकाकलितगुरुमदः संमदायाश्रितानाम् ।
लाङ्गूलास्फोटशब्दो ज्वरमुपजनयन्यातुधानाग्रियाणां
देवानां कर्णकूपेष्वमृतमवकिरन्नञ्जनानन्दनस्य ॥ १६ ॥

सानन्दं देववृन्दैः समुदथ मुनिभिः किन्नरैरुत्ककर्णं
साक्रन्दं क्रव्यभुग्भिः सरभसमसुरेशाङ्गनाभिः श्रुतास्ते ।
भूयासुर्भूयसीनां द्रुतमुपनतये श्रेयसां सन्ततीनां
वायोर्बालस्य वालस्यदविधुतघना बालधिस्फोटशब्दाः ॥१७॥

लङ्कातङ्काय शङ्काकुलदनुजवधूभ्रूणविभ्रंशनार्थं
दम्भारम्भाय जम्भार्यनुसरणकृतां पुच्छविस्फोटशब्दः ।
हन्तानन्ताधिसन्तापितसकलजनानन्दनायोज्जिहानो
दद्यादद्यानवद्यान्युदयविलसितान्याञ्जनेयस्य तूर्णम् ॥ १८ ॥

दर्पप्राग्भारधूर्या सुरपतिवनिताभ्रूणविभ्रंशदक्षो
रक्षोधीशाब्धिधक्षोः कपिनिकरपतेर्बृंहितादित्यपक्षः ।
दत्तब्रह्मर्पितोषः सकलकलिमलध्वंसनिर्व्यूढरोषो
लाङ्गूलास्फोटघोषः श्रथयतु विततां कल्मषोत्थां व्यथां वः ॥१९॥

## अकच्प्रत्ययार्थनिर्णयः ।

निर्णायकः—जयपुरराजगुरु-कथाभट्टवंश्यः
श्रीनन्दकिशोरशर्मा साहित्याचार्यः ।

प्रायोऽनेकेषां गैर्वाणवाणीवीणावादन-वित्तानां व्याकरणधूर्धराणां महतामपि वैयाकरणानां अकजर्थविवेके संशयो वरीवृत्यत इति मदीयोऽनुभवः । एकदा प्रसक्तानुप्रसक्त्या "उन्मूलयामासक, अधिजगातके, पचतकि" इत्येषां कोऽर्थ इति प्रक्रान्ते विवेके "अव्ययसर्वनाम्नामकच् प्राक् टेः" इत्यनेन विहितोऽकच्प्रत्ययः कस्मिन्नर्थे भवतीति शास्त्रार्थः प्रादुरभवत् ।

तत्र पूर्वपक्षः—

"अव्ययसर्वनाम्नामकच् प्राक्टेः" इत्यत्र सूत्रे नहि कोऽप्यर्थो निर्दिष्टः, न च भट्टोजिदीक्षितेन सिद्धान्तकौमुदीतत्त्वबोधिन्यां प्रौढमनोरमायां च, भट्टोजिदीक्षितपौत्र-हरिदीक्षितेन लघुशब्दरत्ने च, अस्यार्थविवेको विहितः, इति च कृत्वा, "अनिर्दिष्टार्थाः स्वार्थे भवन्तीति" न्यायात् केवलस्वार्थे पचतिरेव पचतकिरकजर्थः । "अज्ञाते" इत्यत्र तु अज्ञातविशेषत्वार्थनिर्देशात्, अज्ञातत्वोपाधिकेऽर्थे वर्त्तमानात् प्रातिपदिकात् तिङन्ताच्च स्वार्थे यथाविहितं प्रत्ययो जायते । अतोऽज्ञातं यथा तथा

पचतकिरकजर्थकः । इत्थं चाकच्प्रत्ययस्य प्रत्ययस्य द्वावर्थौ निरुपाधिकस्वार्थत्वं, अज्ञातत्वादिसोपाधिकस्वार्थत्वं चेति फलितम् ।

उत्तरपक्षविवरणम्—

"अव्ययसर्वनाम्नामकच् प्राक् टेः" इत्यत्र यद्यप्यर्थनिर्देशो न विहितः, तथापि "प्रागिवात्कः" इत्यधिकारस्यानुवृत्तिरत्रापि वर्तत एव । अन्यथा कप्रत्ययस्यापवादस्यानर्थक्यं प्रसज्येत । यतो विरोधे सत्येव बाध्यबाधकभावः संगच्छते । काकचो भिन्नदेशत्वान्नास्ति विरोधः । तत्कथं तस्यापवादकता । अकच् प्रत्ययष्टेः प्राक् भवति, कप्रत्ययस्तु टेः परत जायत इति भिन्नदेशत्वम् । नैष दोषः नावश्यं देशकृत एव विरोधः, किं तर्ह्यर्थकृतोऽपि । काकचोश्च प्रयोजनमेकमज्ञाताद्यर्थद्योतनं नाम । तेन तस्मिन्नकचाकृते प्रयोजनाभावात्को न भविष्यति । इत्थं च "अव्ययसर्वनाम्नामकच् प्राक् टेः" इतीदमपि अधिकारिसूत्रम् । ततः 'प्रागिवीयेष्वर्थेष्वकच् प्रत्ययो भवतीति निश्चयम् । प्रागिवीयार्थाश्च 'प्रागिवात्कः" इत्यधिकृत्य "इवे प्रतिकृतौ" इत्यवसानं यावत्पाणिनिना निर्दिष्टाः । ते यथा—"प्रागिवात्कः ५। ३। ७०। अव्ययसर्वनाम्नामकच् प्राक् टेः, कस्य च दः, अज्ञाते, कुत्सिते, संज्ञायां कन्, अनुकम्पायाम् नीतौ च तद्युक्तात्, बह्वचो मनुस्तनाम्नाष्ठज्वा, घनिलचौ च, प्राचामुपादेरड्वुचौ च, जातिनाम्नः कन्, अजितान्तस्योत्तरपदलोपश्च, ठाजादावूर्ध्वं द्वितीयादचः, शेवलसुपरिविशालवरुणार्यमादीनां तृतीयात्, अल्पे, ह्रस्वे, संज्ञायां कन्, कुटीशमीशुण्डाभ्यो रः, कुत्वा डुपच्, कासूगोणीभ्यां ष्टरच्, वत्सोक्षाश्वर्षभेभ्यश्च तनुत्वे, किंयत्तदोर्निर्धारणे द्वयोरेकस्य डतरच्, बहूनां जातिपरिप्रश्ने डतमच्, एकाच्च प्राचाम्, अवक्षेपणे कन्, इवे प्रतिकृतौ ५। ३। ९६ ।

नन्वत्रायमुपतिष्ठते पर्यनुयोगः, यदत्र विषये किं प्रमापकमिति ? उत्तरे च—प्रमाणभूतग्रन्थप्रतीकाः सुधीभिरवधेयाः । तथाहि—

१—वामनकृत काशिकायां—"अव्ययसर्वनाम्नामकच् प्राक् टेः । ५। ३। ७१। तिङश्चेत्येव । अव्ययानां सर्वनाम्नां च प्रागिवीयेष्वर्थेष्वकच् प्रत्ययो भवति । स च प्राक् टेर्न परतः । कस्यापवादः ।"

म० म० हरदत्तमिश्रकृत-पदमञ्जर्यां (काशिकाटीकायां) "अव्यय०" कस्यापवाद इति । ननु च विरोधे सति बाध्यबाधकभावो भवति, काकचोश्च भिन्नदेशत्वात् नास्ति विरोधस्तत्कथं तस्यापवाद इति । नावश्यं देशकृत एव विरोधः, किं तर्ह्यर्थकृतोऽपि । काकचोश्च प्रयोजनमेकं अज्ञाताद्यर्थद्योतनं नाम । तस्मिन्नकचा कृते प्रयोजनाभावात् को न भविष्यति ।"

३—आचार्यजिनेन्द्रबुद्धिपादविरचितन्यासे (काशिकाविवरणपञ्जिकायाम्) "ननु च भिन्नदेशत्वात् काकचोर्विरोधो नास्ति । न चासति विरोधे बाध्यबाधकभावः । तत्कथं तस्यापवादः । नैष दोषः । नैवावश्यं देशकृत एव विरोधो भवति । अपि त्वर्थकृतोऽपीत्युक्तम् । अकच् प्रत्ययेन समानोऽर्थ इति अकचा द्योतितत्वात् तस्यार्थस्य कप्रत्ययो न भविष्यति ।"

४—श्रीशचन्द्रवसु बी. ए. महोदयेनापि काशिकायां इङ्गलिशानुवादे इदमेवोक्तं निर्णीतं च ।

५—नागोजीभट्टैरपि—"अधिकारिसूत्रमिदमित्येवोक्तम् । यथा—लघुशब्देन्दुशेखरे "अव्यय०"५।३।७१।

अयमप्यधिकारः । "अज्ञाते" इत्यादौ तु वाक्यभेदेनाकचोऽपि विधानं बोध्यम् ।"

६—भैरवमिश्रकृतभैरव्यां (लघुशब्देन्दुशेखरटीकायां) "अव्ययसर्वना०" अत्र प्रागिवादित्यनुवर्त्तते । एवं चाव्ययादिभ्यः प्रागिवाद्यर्थास्तेषु–टेः प्रागकच् "कस्यायमपवादः ।" इति ।

७—अन्नम्भट्टकृतव्याकरणमिताक्षरायाम्–"अव्यय०" अव्ययानां सर्वनाम्नां च टेः प्रागकच् स्यात् प्रागिवार्थे कापवादः ।"

८—वासुदेवदीक्षितकृत-बालमनोरमायाम् ( सिद्धान्तकौमुदीटीकायाम् ) "'अव्यय०' अनुवर्त्तत इति मण्डूकप्लुत्येति शेषः । अव्ययसर्वनाम्नां तिङन्तानां च टेः प्रागकच्-प्रत्ययः स्यादित्यर्थः । अकचि ककारादकार उच्चारणार्थः । चकार इत् । ककारान्तः प्रत्ययः । अयमपि प्रागिवादधिकारः ।"

९—रामचन्द्राचार्य-कृत-प्रक्रियाकौमुद्याम् ( अष्टाध्यायीवृत्तौ ) "'अव्ययसर्वनाम्ना' अव्ययानां सर्वनाम्नां च टेः प्रागकच् स्यात् अज्ञाताद्यर्थे ।"

१०—विठलाचार्यकृतप्रसादाख्यायाम् ( प्रक्रियाकौमुदीटीकायाम् ) "'अव्यय' इति काकचोर्विभिन्नदेशत्वाद् विरोधो नास्ति यद्यपि अस्ति त्वर्थकृतः, तेन वाध्यवाधकतानयोः इतीममर्थमभिप्रेत्याह-कापवाद इति ।

११—धरणीधर-काशीनाथकृत-वैयाकरणसर्वस्वाख्यायां ( पाणिनीयसूत्रवृत्तौ ) "'अव्यय' अव्ययानां सर्वनाम्नां तिङन्तानां च प्रागिवीयेष्वर्थेषु टेः प्रागकच् स्यात् ।"

१२—म० म० पुरुषोत्तमदेवकृत-भाषावृत्त्याख्यायाम्–(पाणिनीयसूत्रवृत्तौ) "'अव्यय' अव्ययसर्वनाम्नां टेः प्रागकच् वाच्यः प्रागिवार्थे ।"

एतेषु सर्वेषु प्रमाणग्रन्थेषु सुस्पष्टमुद्घोष्यते यदकच् प्रत्ययः प्रागिवाद्यर्थे भवतीति । तेनाकच्प्रत्ययस्य निरुपाधिकस्वार्थत्वं चेति द्वावर्थाविति वदन्तो निराकृताः। यत्र च निरुपाधिकः स्वार्थः स्वीक्रियते, तत्र किंचिद्ज्ञापकं, वार्तिकं वा प्रमापकं भवति । यथा—

१–पतञ्जलिकृते महाभाष्ये–"सामिवचने प्रतिषेधोऽनर्थकः । किं कारणम् प्रकृत्यभिहितत्वात् । प्रकृत्यभिहितः सोऽर्थ इति कृत्वा न भविष्यति ।"

२–कैय्यटप्रदीपे च–"एवं तर्हि न सामिवचन इति प्रतिषेधेन स्वार्थिकः कन्नस्तीति ज्ञाप्यते । नहि सामिकृतादिभ्योऽनत्यन्तगतौ कादित्यस्य कनः प्रसङ्गोऽसमासे सामिवचने नैवनत्यन्तगतेर्द्योतनात् । समासेभ्यस्तु क्तान्तत्वभावाच्च कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणमिति वचनात् सामिशब्दस्य गतिकारकत्वाभावात् । तस्मात्स्वार्थिकस्यैवासौ कनो निषेधः स्वार्थिकं कनं ज्ञापयति ।"

३–व्याकरणमिताक्षरायां च–"सामिवचने ५।४।५ । सामिवचने उपपदे क्तान्तात् कन् न स्यात् । सामिकृतम् । अर्धकृतम् । नेमकृतम् । अनत्यन्तगतेः साम्यादिशब्दैरेव ( व्दैर ) प्रतिपादनेन कनोऽप्रसङ्गान्निषेधानुपपत्तेः स्वार्थेऽपि प्रतिषेधेन ज्ञाप्यते । तेनाभिन्नतरकं बहुतरकमित्याद्युपपन्नम् ।"

यथा वा ( तीयादीकक् स्वार्थे वाच्यः ) (तमवाद्यन्तात् स्वार्थे कन् वक्तव्यः ) इत्यादिवार्तिके वा निरुपाधिकस्वार्थज्ञापिके ।

इत्थं च प्रकृतसंगतेः–अज्ञातत्वकुत्सितत्वोपाधिक एव स्वार्थोऽकच्प्रत्ययस्वार्थो ननु निरुपाधिकः स्वार्थः । यथा—

१—महाभाष्ये—कुत्सिते सिद्धं तु येन कुत्सितादिवचनं तद्युक्तात्स्वार्थे प्रत्ययविधानात् । सिद्धमेतत् । कथम् येन कुत्सादयोऽर्था गम्यन्ते तद्युक्तात्स्वार्थे प्रत्ययो भवतीति वक्तव्यम् ।

कैय्यटप्रदीपेऽपि—"सिद्धंत्विति" येन धर्मेण कुत्सादयस्तद्धर्मयुक्तार्थाभिधायिनः स्वार्थे प्रत्ययविधानमित्यर्थः ।

२—हरदत्तपदमञ्जर्यां च—'अज्ञाते' अज्ञातविशेषोऽज्ञातः । अज्ञातत्त्वोपाधिकेऽर्थे वर्त्तमानात्प्रातिपदिकात् तिङन्ताच्च स्वार्थे यथाविहितं प्रत्ययो भवति । निष्कृष्टार्थस्त्वयमत्र—अत्र निरुपाध्यवच्छिन्न-प्रकृत्यर्थपरिचयकत्वस्वार्थत्वमकजो नार्थः, किन्तु अज्ञातान्यतमार्थविषयकोपाध्यवच्छिन्न-प्रकृत्यर्थपरिचायकत्वस्वार्थत्वमेवाकजोऽर्थ इति निर्णयः ।

---

# सुभाषितानि ।

लेखकः—श्रीदामोदरशास्त्री भिषगाचार्यः,
साङ्ख्य-सर्वदर्शन-तीर्थश्च

सर्वभूतेषु चात्मानं सवभूतानि चात्मनि ।
समं पश्यन्नात्मयाजी स्वाराज्यमधिगच्छति ॥
सुखं कामयमानस्य धर्मो हि सुखसाधनम् ।
तस्माद्धर्मादिविषये विधेयः परमादरः ॥
प्रवृत्तौ संयमः कार्यो निवृत्त्यभ्यासपूर्वकम् ।
सुख-दुःखाऽभावहेतुर्धर्मत्वेन निरूप्यते ॥
आकाङ्क्षाया ह्यसीमत्त्वादुच्छृङ्खलधियां कुतः ।
सुगमं देशनेतृत्वं स्वार्थत्यागफलं हि तत् ॥
विवेकरहितानां हि लोकानां यदि भूतले ।
आचार्यत्वं शासकत्वं तदाऽनर्थस्य का कथा ॥
इतिहासापरिज्ञानात् सदाचार-विवर्जनात् ।
आलस्यादन्नदोषाच्च तमः संविशति नृषु ॥
सत्वं सुखमयं तेन विलुप्यति नृणां यदा ।
अन्धे तमसि मग्नानां विवेकस्योदयः कुतः ॥
कामिनी-काञ्चनत्यागी समदर्शी जितेन्द्रियः ।
मानी त्यागी जितक्रोधो नेतृत्त्वमधिगच्छति ॥
धर्मं व्याजीकृतं येन वैडालव्रतिकः शठः ।
वाङ्मात्रेणार्चनं तस्य न कर्त्तव्यमिति श्रुतिः ॥
वैद्यः पण्डितमानी च ब्राह्मणोऽशीतिवर्षकः ।
गौरी-विवाहवृत्तश्चेत् पश्चाचारो हि कीदृशः ॥
विनायकं प्रकुर्वाणो रचयामास वानरम् ।
यथा तथात्र विहिते धर्मे पापसमागमः ॥
आहारो भीश्च निद्रा च मैथुनं पशुवृत्तितः ।
नातिरिच्येत मनुजां धर्माचारं विना क्वचित् ॥
धार्मिको हि सुखी लोके दीर्घजीवी च धार्मिकः ।
ओजस्वी बलवांश्चैव तस्माद्धर्मपरो भवेत् ॥

# नवयुवकेभ्यो वेद-सन्देशः ।

ले०—विद्यावाचस्पतिः श्रीवेदव्रतशास्त्री ।

अयि, साहित्यसरोविहारिणो राजहंसाः ! पाठक-प्रवराः !! ऋग्वेदे 'उपंमातरंभूमिमिति' मन्त्रः समायाति । यस्यायं भावो यत् ते नवयुवका निजमातृभूमौ स्निह्यन्ति, निज प्रेयस्यै मातृभूम्यै स्वकीयान्प्राणाश्चार्पयन्ति, त एव मातृभूमेः सुपुत्राः सन्तीति ।

अयि भारतरत्नानि, यस्याः किल भारतजनन्या विप्रवराणां चरणारविन्देषूपविश्य, अधीयते स्म यूनानवासिनो विद्वद्वराः, यस्याः सभ्यतागौरवं

सर्वानतिशय्य वर्तते, यस्याः कलाकौशलमवलोक्य लज्जन्ते स्म, अन्ये यस्या अङ्के पितुराज्ञापालको भगवान् मर्यादापुरुषोत्तमः श्रीरामचन्द्र अवातीतरत्, तथा गोपालकः श्रीकृष्णचन्द्रः स्वकीयं शैशवं व्यतियापयामास। यस्याः सुपुत्रेण क्षात्रकुलकमलदिवाकरेण महाराजप्रतापसिंहेन दासतापाशबद्धाया भारतमातुः कृते नानाविधाः क्लेशाः सोढाः। स एव भारतगौरवः प्रतापसिंहो वर्तते, यो राजभवने राज्यसुखानि अनुभवतिस्म। यस्य च शुश्रूषायै विविधाः किङ्करा आसन्। स एव भारतमातुः संकटाकीर्णामवस्थामवलोकमवलोकं तस्या उद्धाराय बद्धपरिकरः स्वकीयां राज्यसम्पदं तृणीकृत्य सकुटुम्बः सिंहादिहिंस्रजीव-प्रचुरेषु अरण्येषु परिभ्रमतिस्म।

एकतो निजवंशप्रदीपानां क्षुधार्त्तानां शिशूनां करुणक्रन्दनं श्रावं श्रावमपरतश्च स्वकीयां धर्मपत्नीमश्रुबिन्दुभिः खिन्नवदनां दृष्ट्वाऽपि निजलक्ष्यत एकमपि पदं न विचचाल परञ्च पुरुषसिंहवत्सर्वविपज्जालमविगणय्य, नैजं लक्ष्यं प्राप्तम्। अन्येऽपि गुरुतेगबहादुर-गुरुगोविन्दवीरवैरागी-बन्दाछत्रपति-शिवाजीप्रभृतयो नरपुङ्गवा भारतभूमिरक्षायै स्वप्राणानाहूय पूर्वोक्तां वेदाज्ञां पर्यपालयन्, वस्तुतः पुराकालेऽस्माकं जन्मभूः भारतमाता "स्वर्गादपि गरीयसी" आसीत्। यस्मिन्काले भारतमाता समस्तदेशशेखरीभूता मुक्तपाशबन्धनाआसीत्तदाहर्निशं यज्ञसुरभैर्दिशिदिशि प्रसरो व्यराजत। क्वचिद् वेद-कीर्तनं विदार्य नभोमण्डलं परितो गुञ्जति स्म। सर्वे वर्णाः स्व-स्वधर्मं सम्यक्तया परिपालयन्ति स्म। ब्राह्मणाः सर्वविद्या पारगा आसन्। तदा स्वर्गस्था देवा अपि भारतवर्षस्य गुणकीर्तनं कुर्वन्तिस्म, कामयन्तेस्म, यदास्माकमपि भारतवर्षेजन्म स्यादिति। अहो! 'दैवी विचित्रा गतिः।'

अधुनाऽपि सर्वस्वत्यागी एककौपीनधारी महात्मा गान्धी, लोकमान्यो मदनमोहनमालवीयः, विज्ञानविद्याविशारदा जगदीशचन्द्रबोस-इत्यादयो भारतमातुः सुपुत्राः सन्ति, ये निजमातुर्मस्तिष्कमुन्नतं धारयन्ति। यद्यपि-उपरिलिखिता भारतमातुः सुपुत्रा इदानीमपि सन्ति परञ्चापर्याप्ताः। ते च निजमातरं सेवमाना वृद्धत्वमापन्नाः। अमृतवीरा इदानीमस्माकं जन्मभूः भारतमाता—या पूर्वं 'स्वर्गादपि गरीयसी' आसीत् साऽधुना दासतापाशैर्निगडिता सती अश्रूणि विमुञ्चति, दासताबन्धनैश्च विमोक्तुं स्वसुपुत्रान्नवयुवकानुत्कण्ठतयावलोकयति। भो भोः संस्कृतपाठकाः! न कथयितुमुत्सहे भारतमातुःकष्टमयीं दशाम्। क्वचिच्छतशोऽन्नवस्त्रविहीना दीना म्रियन्ते, क्वचिद् बाला अबलाः परिबोभूयन्ते, क्वचिदस्माकं पूज्या नेतारो विनापराधं ताड्यन्ते, क्वचिदनुचित-करग्रहेण कृषकाश्चक्लिश्यन्ते। अहो दुःखस्य पराकाष्ठा?

अयि भारतशिरोमणयो युवकाः! कदापर्यन्तमेतानि दुःखानि सहमानाः स्थास्यन्ति। पूर्वोक्तां वेदाज्ञां मनसि कृत्य निजभारतमातरं विमोक्तुं दासतारज्जुभिर्विमोक्तुं यतध्वम्। सर्वे भारतमातरं प्रति स्व-स्वकर्त्तव्यं परिपालयन्तु। 'स्वराज्यप्राप्तिर्नो जन्मसिद्धोऽधिकारः इति मन्त्रञ्च दिवानिशं स्मरन्तो वेद-निर्दिष्टमार्गानुसारं निज-निजकार्ये संलग्नमनस्का भवन्तु नाम। सर्वे स्वदेशीयवस्त्राणि परिधारयन्तु अन्यांश्च तद्धारणे प्रेरयन्तु, बृटिशवस्तूनि बहिष्कुर्वन्तु, मद्यपानादिकं दूरीकुर्वन्तु, अन्यांश्च

स्वभ्रातृनूतद्दूरीकरणे प्रार्थयन्तु आर्यवीराः! अमरीकानिवासिभिः, आर्यलैण्डवास्तव्यैश्च नवयुवकैर्निज-निजमातृभूमिकृते किं किं न कृतमिति नास्ति तिरोहितमितिहासपाठिनाम्।

नवयुवकवृन्दाः! साम्प्रतं समयं चेदनवधानतो विस्मरिष्यथ तदा भाविनि इतिवृत्ते युष्मांकं नाम समीचीनाक्षरेषु लिखितं न भविष्यति, यदधीत्य भारतवर्षस्य भविनो नवयुवका युष्मन्नामतो लज्जिष्यन्ते। स्मरन्तु नाम, श्रीकृष्णवाक्यम्—"अकीर्तिं चापि भूतानि कथमिष्यन्ति तेऽव्ययाम्। सम्भावितस्य चाकीर्तिर्मरणादतिरिच्यते॥"

# महाराजाधिराज-श्रीकामेश्वरशर्म्मसिंह महोदयानाम्
## द्वारवङ्ग (दरभङ्गा)- नरेश्वराणाम्
# शुभाभिनन्दनम्।

येयन्नाम पुरा पुरातनदेवगवी, वैदिकवर्णाश्रमधर्म-मर्य्यादा-परिपालन-समेधननिरतानां समेषामेव भारतीयानां पुरुषार्थचतुष्टयप्रसविनी बभूव, हन्ताद्य सैवास्मदलसतया पाश्चात्यशिक्षादीक्षाविदूषितान्तःकरणैः साम्प्रतिकैर्भारतीयार्य्यसभ्यतानभिज्ञैः स्वच्छन्दाचारैरवहेल्यमाना, नितरां कृशतामुपगता सर्वतोऽपीदानीं दैनंदिनं कार्श्यायैव कल्पत इति न तिरोहितं देशकालात्मविदां श्रीमताम्। एतादृशे घोरतरेऽप्यस्मिन्नवसरे, श्रीमन्तो महामहिमशालिनः स्वादम्योत्साह-प्रशस्यतरप्रयासादिभिरन्तरायततीस्तिरस्कुर्वन्तः सुरभारतीसमुन्नत्यै सततं प्रयतन्त एव। केवलं यतमाना एव न सन्ति, किन्तु तैस्तैरुपायैर्विविधविद्याया अलौकिकाद्भुतमहिमपरिदर्शनेनाधुनिक-नवयुवकान्तःकरणमेव परिवर्तितवन्त इति सर्वेषामेव सुधियां सुविदितमास्ते।

जागर्तियुगेऽप्यस्मिन् वर्तमान-प्रगति-प्रतिस्पर्धा-परिचय-विमुखे संस्कृतसंसारे तामेतां प्रसरन्तीं दुर्बलतामुत्सारयितुम्, कर्मण्यतां प्रबलताञ्च सम्पादयितुमत्र संस्कृतविद्याकेन्द्रे संस्कृत-विदुषां प्रधान-साम्राज्ये वाराणसी-नगरे कतिपयैर्महद्भिर्देशकालात्मविद्भिर्विविध-संकटापन्नैरपि स्वोत्साहमात्रैकधनैः संस्कृत विद्वद्भिः सम्भूयैका प्रबला सङ्घशक्तिः संस्थापिता। या च संस्कृत-साहित्य-समाजनाम्ना श्रीमतां पुरतः सविनयं सोत्साहं सोल्लासञ्च समुपस्थिता विद्यते। यतश्च प्रसृतं, संस्कृत-संसारे नवयुग-प्रवर्त्तकम्, पण्डित-समाजे जागर्तिजनकम्, संस्कृत-नवयुवक-मण्डले जीवनाधायकं वास्तविक-ज्ञान-विज्ञान-प्रचारकं 'सुप्रभातं' नाम समस्तसुधीसमाजसमादृतं मासिकं सचित्रं संस्कृतपत्रं विजयतेतराम्।

"नाब्रह्म क्षात्रमृध्नोति नाक्षात्रं ब्रह्म वर्धते। ब्रह्म क्षात्रं तु सम्पृक्तमिह चामुत्र-वर्द्धते" इति मानवीयम्, "अग्रतश्चतुरो वेदान् पृष्ठतः सशरं धनुः, इदं ब्राह्ममिदं क्षात्रं शापादपि शरादपि" इति भारतीयञ्चानुशासनं स्मार स्मारं महामहिमशालिनि श्रोत्रिय-भूदेवकुले प्रसूता महाराजाधिराजाः सन्तः श्रीमन्त एव ब्राह्मक्षात्रशक्तिसम्पृक्ता हिन्दु-समाजस्य वास्तविकनेतृपदे विराजन्त इति नास्ति संशयलेशोऽपि। एष चान्तर्बहिरेकरूपो मिथ्याडम्बरशून्यः संस्कृत-साहित्य-समाजः स्वसमुन्नत्यै साकं सनातनधर्मेण, भवा-दृशानेव नवनवोन्मेषशालिनः सर्वविधशक्तिसम्पन्नान् नवयुवक-मण्डल-मण्डनायमानान् निर्निमेषमवलोकमानस्तत्रभवतां करावलम्बनमीहते।

श्रीमतां च पुरातनाभिनवप्रगतिपरिचितानां देशकालात्मविदाम्, भाविनि युगपरिवर्तन-सङ्घर्षे सोत्साह-संलग्नमानसानाम्, अभिनवोल्लसित-हृदयानां द्विजकुल-कुमुद-कलाधराणाम्, तत्रभवतां पुरतः स्वीयस्निग्धान्तःकरणभावपुष्पाञ्जलिं समर्पयन्तः श्रीमद्भ्यः सम्भाव्यमानां विश्वजनीनां सुरभारती-समुन्नतिं समभिलषन्तश्च श्रीकाशी-विश्वेश्वरादभ्यर्थयामहे, यत् स सर्वात्मा श्रीमतः प्रजावत्सलान्, वैदिकसनातनधर्म-संरक्षण-परायणान् सुरभारती-समेधन-बद्धपरिकरान्, चिरजीविनो विदध्यादितिशम्।

वाराणसी
मार्गशीर्षः, कृष्ण-तृतीया,
१९८६.

अभिनन्दितारः—
संस्कृत-साहित्य-समाज-सदस्याः।

# 'बरवै' विलासः।

[ ले०—भट्ट श्रीमथुरानाथ शास्त्री साहित्याचार्यः, जयपुरस्थः। ]

'बरवै' नामकं व्रजभाषायां सुप्रसिद्धं छन्दः। को वा हिन्दुसन्तानो महात्मनस्तुलसीदास गोस्वामिनो 'बरवै' रामायणं न श्रुतवान्? नवावखानखानामहोदयस्य बरवैपद्यानि हिन्दीभाषायाः प्रसिद्धं वस्तु। खानखानासमय एवाऽस्य छन्दसो नामकरणसंस्कारोऽभवदिति केचन वदन्ति। बहोः कालात्पूर्वं 'संमेलनपत्रिकायाम्' प्रकटितमप्यासीकेनचन यदेकस्य पद्यस्य मनोहारितया मुग्धः खानखानामहाभागः पद्यस्य विषयानुसारं तदेव नाम कृतवान्। यथाः—

"खानखानासविधे कश्चन युवक-सैनिकोऽपरदेशादागत्य भृतिं स्वीकृतवान्। आसीत्खानखानामहाभागस्तस्य सत्यसेवया सन्तुष्टः। एकदा स ह्यवकाशं प्राप्य स्वगृहं गतवान्। तत्र स्वामिसकाशादधिकमवकाशं प्रार्थ्य विवाहमपि कृतवान्। नवपरिणीतायाः प्रणयिन्या विलासैरवकाशकालो गच्छन्नपि नावाबुध्यत युवकेन। अवकाशावधिं व्यतीतमभिसूच्य युवको गन्तुमप्यासीत्सनद्धः;परं विरहवेदनां सोढुमपारयन्ती नवप्रणयिनी तं पुनः प्रणयपरवशमकार्षीत्। एवमवधेर्भूयान् समयस्तस्यातिक्रान्तोऽभूत्।

अथ यथाकथञ्चिदात्मानमवरुध्य, प्रणयिनीं माश्वास्य, स हि स्वामिनः सविधे गन्तुं सज्जति स्म। परमवधिव्यतिक्रमात्स्वामिनः कोपमाशङ्कमानः स हि मनसि भृशमासीद्भीरुकः। सुशिक्षिता तस्य प्रणयिनी, तदेतदनुमाय, सप्रणयमवादीत्—"प्राणनाथ! अपराधिन्या अस्या दास्याः कृते बहुलं मनःकष्टमनुभूयते भवता। किमहं कुर्याम्, अभूदज्ञानेऽपराधः। इदानीमहं किञ्चिद्विलिख्य श्रीमते समर्पयामि। एतद्धि गुणिगण-जीवातवे स्वामिने समर्पणीयम्। मन्ये न तावान् कोपो भवेदिति।"

पत्र-सम्पुटितं तं लेखमुपादाय स हि स्वामिनः सेवायामुपातिष्ठत। अन्यान्यैर्भृत्यैः स्वामिनः कोपः सूचितोऽभूदस्मै। सभयकम्पः स हि खानखानामहोदयस्य सम्मुखे समुपातिष्ठत। क्रोधेन विरज्यमानः स हि दृष्ट्याप्येनं न किञ्चिदुवाच। अतिभयाकुलः स आत्मनेऽप्रभवन्, तदेतत्पत्रं संकुचन्निव स्वामिनः पदतले स्थापयामास। कुतूहलाविष्टेन दृष्टं तेन तदेतत्पद्यं लिखितम्।

"प्रेम' प्रीतिको 'बिरवा', चलेहु लगाय।
सींचन की सुधि लीजो, मुरझि न जाय॥"

कवितातलस्पर्शी खानखानामहाभागः पद्यस्यास्य भावप्रवणतया, लेखकस्य सत्यतमेन कारुण्यप्रकाशनेन च द्रवीकृत इव सकरुणगौरवया दृष्ट्या तमापादचूडमीक्षितवान्। पृष्टवांश्च सस्नेहं पद्यस्यास्य निर्मातारम्। युवकः सत्यं सत्यमस्य

१ अयमेव पाठो दृष्ट इति स्मरामि।

पद्यस्यागमं निवेदयामास। तत्पत्न्याः कवित्वेन सुप्रीतमनाः खानखानामहाभागः सुबहु पारितोषिकं प्रदाय युवकमेनं स्वगेहं विसर्जितवान्। गेहस्थितायैवास्मै प्रतिमासं नियतं वेतनमाजीवनं प्रेषयितुमादिष्टवान् कोषाध्यक्षायेति। पद्यस्यास्य वर्ण्यानुसारं 'वरवा' इति नाम नियम्य, अनेनैव च्छन्दसा भूयः कवयामास-इति।"

खानखानामहाभागात्पूर्वं 'वरवै' च्छन्दसि कविता आसीन्न वा? छन्दःशास्त्रेष्वस्य क्व उल्लेख? इत्यादिविषयस्तु अन्वेषकमहाभागानां विचार विषयः। परमस्य च्छन्दसो व्रजभाषायामभूद्भूयानादर इति वयं जानीमः। अत एव गोस्वामिमहाभागेन, अस्मिन्नपि च्छन्दसि संक्षिप्तं रामायणमाबद्धम्। अस्तु, संस्कृतभाषायामपि छन्दसोऽस्य निर्वाहः कथमिवाऽभवदिति श्रीमत्सेवायां कानिचित्पद्यानि परीक्षार्थमुपस्थापयामि। 'कविता-निकुञ्ज' नाम्ना मुद्र्यमाणाद्बृहन्निबन्धादुद्धृत्य तानि यथावकाशमधस्तात्प्रकाश्यन्ते।

## "द्वादशमासी[1]।"

मम सखि! चैत्रे चन्दननिचयचरेण।
चित्रं विचलति चेतः पवनभरेण॥ १॥

चन्दनतरुखण्डचारिणापि पवनभरेण मम चेतो खिद्यत इति चित्रमित्यर्थः॥ १॥

वैशाखे स्मरविशिखा विक्लवयन्ति।
विषमविरहविषवह्निं वपुषि वमन्ति॥ २॥

विषमं विरहविषाग्निं कामबाणा मद्वपुषि वमन्ति

ज्येष्ठे ज्वरमिव जनयति जलजसखोऽपि।
जिह्मं जीवति जीवनधनरहितोऽपि॥ ३॥

कमलिनीवन्धुरपि (सूर्यः) तापज्वरमिव जनयति। जीवनधनेन (प्रियतमेन) रहितो मादृशो जनः कुटिलं जीवति। वल्लभरहितस्य जीवनं निष्फलमेवेत्यर्थः॥ ३॥

आषाढ़े मुहुराशा घनैरपूरि।
प्रियसखि! मम पुनराशा भ्रमयति भूरि॥४॥

आशा (दिक्) मेघैः पूरिता। मम आशा (मनोरथः) मां भ्रामयत्येव॥ ४॥

नभसि नभसि नवजलदैर्वृष्टिरकारि।
चित्रं सखि! मम दृग्भ्यां प्रवहति वारि॥५॥

श्रावणे, नभसि (आकाशे) वृष्टिः कृता। मम नेत्रयोस्तु जलप्रवाह इत्यसङ्गतिः॥ ५॥

भाद्रे घनजलभरिताः सरिता भान्ति।
आशाः पश्य! कदा मे हरिता भान्ति॥६॥

मम आशाः कदा पुनर्नवीकृता भवन्ति। पश्य॥ ६॥

आश्विनमासि मृगाङ्को मुदितमुपैति।
सखि! मम मानससदने तिमिरमिवैति॥७॥

चन्द्रो मोदं प्राप्नोति, भृशं दीप्यते इत्यर्थः। परं मम मानसे तथापि अन्धकार इवागच्छति॥ ७॥

कार्तिकिके किल कमलामर्चति को न?
क्लिश्यति मादृक्कृपणः क्रीडति यो न॥ ८॥

यो विरहात्, न क्रीडति स मादृग् दीनः क्लिश्यति॥ ८॥

मार्गे हैमनपवनो जवनो वाति।
न मनो मदनोद्रेकाद् धृतिमिह याति॥ ९॥

---

१ द्वादशमासानां समाहारः। व्रजभाषायां 'बारहमासी' नाम्ना नायिकाया विरहावस्थावर्णनपुरस्सरं द्वादशमासकार्याणि वर्ण्यन्ते। तदिदं संस्कृतेपि संभवतीति दर्शितमत्र।

मार्गशीर्षे मदनवेगवृद्धेर्मम मनः धृतिं न गच्छति ॥ ९ ॥

पौषेऽपरिमितशीतं वपुरुपहन्ति ।
प्रियतमविरहः प्रियसखि ! तदपि निहन्ति ॥१०॥

शीतं मम शरीरं पूर्वमेव क्लेशयति, तदुपरि विरहो निहन्तीत्याशयः ॥ १० ॥

माघे मञ्जुदृशोऽमूर्मुदमुपयान्ति ।
मयि सखि ! मनसिजबाणा मुहुरभियान्ति ॥

फाल्गुन ! फलयसि कामांस्तदिह नमामि ।
प्रियतमसंगमसुखिनी मनसि न मामि ॥ १२ ॥

हे फाल्गुन ! त्वं मनोरथान्फलयसि, अतस्त्वां नमामि । प्रियसंगमात्सुखिनी मानसे न मामि । ममानन्दो हृदये न मातीत्यर्थः ॥ १२ ॥

*विरहः ।*

करधृतपाण्डुकपोला नयनजलेन ।
सिञ्चति हृदयं तप्तं स्मरदहनेन ॥ १३ ॥

स्मरदहनेन तप्तं हृदयं नयनजलेन सिञ्चति॥१३॥

ताम्यति शेते श्राम्यति शुचमुपयाति ।
सा विरहे तव, मुह्यति लुठति जहाति ॥ १४ ॥

भूमौ लोठति, पुनस्तल्लोठनं जहाति ॥ १४ ॥

विरहवह्निरयमद्भुतमिह समुदेति ।
नयनजलैः परिषेकादुपचयमेति ॥ १५ ॥

अग्निर्जलस्य सेकात् शाम्यति । परं विरहवह्निः नयनजलसेकादुपचीयते ॥ १५ ॥

शयने लोठति शोचति विपिनगतेव ।
सा परिताम्यति शफरी स्थलनिहितेव ॥ १६ ॥

स्थले निहिता मत्सीव दूयते ॥ १६ ॥

विधुरोऽनिन्ददगस्त्यं विधुमभिवीक्ष्य ।
अस्तावीत्पितृलोकान् सपदि समीक्ष्य ॥ १७ ॥

विधुरो विरही । चन्द्रोत्पत्तेः पूर्वमेव किमिति न पीतोऽब्धिरिति अनिन्दत् । एते चन्द्रकलानामसृतं निपीय कृष्णपक्षं सम्पादयन्तीति पितॄनस्तावीत्॥१७॥

विकचकदम्बविडम्बकपुलकयुतेन ।
गगनमुदीक्ष्य विहसितं विरहिगणेन ॥ १८ ॥

विकचकदम्बपुष्पवत् रोमाञ्चकंटकयुक्तेन विरहिगणेन गगनं दृष्ट्वा हसितम् । प्रावृट् प्रारब्धा । इदानीमेव रोमाञ्चादेरियं दशा, तर्हि अग्रे न जीविष्यामस्तथा च विरहदुःखान्मुक्ता इत्याशयः ॥ १८ ॥

*रूपवर्णनम् ।*

विलुलितकुन्तलमेतन् मुखमवेहि ।
सरसि सशैवलमम्बुजमिदमवधेहि ॥ १९ ॥

विलुलिताः केशा यस्योपरि, ईदृशं मुखं नास्ति, किन्तु शैवलसहितं कमलं जानीहि ॥ १९ ॥

कनकमालिका कुचयोर्द्युतिमुपयाति ।
कमलकोषयोरुपरि स्रगिव विभाति ॥ २० ॥

कुचयोरुपरि सुवर्णरचिता माला, कमलकुड्मलयोरुपरि परिधापिता पीतयूथीमालिकेव भाति ॥ २० ॥

सुन्दरि ! केयं सरणिस्तव नयनस्य ।
सकृदवलोके हृदयं विशति जनस्य ॥ २१ ॥

महति नितम्बे विलसति रशनादाम ।
स्रगिव मतङ्गजकुम्भे विलुठति नाम ॥ २२ ॥

वातायनगा पश्यसि किं कुतुकेन ।
सुन्दरि ! दीना पथिकान् विध्यसि केन ॥२३॥

नयनशरेण गच्छन्तः पथिका विद्धा भवन्ति । नयनयोः शरोपमत्वं व्यङ्ग्यम् ॥ २३ ॥

हृदयमितः मपलायितमतिरभसेन ।
उचितं रचयसि दमयसि दृढनिगडेन ॥ २४ ॥

मत्सकाशात्पलायितं मम मनस्त्वं दृढनिगडेन दमयसि, तत् उचितं करोषीति नायको नायिकामाह । पलायितो बन्दी यथा दृढेन निगडेन नियम्यते, तथा बलात्पलायितया त्वं हृदयं वशीकृत्य दमयसीति सव्यङ्ग्यमुपालभते ॥ २४ ॥

## शोकप्रकाशः ।

हा हन्त ! सन्ततिगणं विलपन्तमन्तः
शान्त्यै विचिन्तनकृपान्तरमन्तरेण ।
सन्त्यज्य सम्प्रति दिवंप्रति यत्प्रयातम्
व्यर्थं व्यधायि शशिनाथ ! जवादनर्थः ॥ १ ॥
त्वां पुत्रलब्धतिमानसुखेन वक्षो
नीत्वैव याऽनिशमुदारमुदं प्रपन्ना ।
अङ्के कमद्य तनयं सुधियं विधाय
धातर्दधातु मिथिला हृदयेषु शान्तिम् ॥ २ ॥
देशान्तरेऽपि ललिताम्लकीर्तिपूर्ति-
र्नान्ये महामहिमतो महित-प्रभावः ।
सम्राट् समर्पित-पदेन विभूषितात्मा
किं कारणं सुरपुरीं सहसागतोऽसि ॥ ३ ॥
विष्वग्विचक्षण-चयोपचिताऽपि नित्य-
माचारचञ्चुभिरलं परिसेविताऽपि ।
भूदेव-वृन्द-परिवन्दन-नन्दिताऽपि
त्वामन्तरेण मिथिला शिथिला प्रजाता ॥ ४ ॥
नष्टः कवेर्विपणिरत्नचयः समन्ता-
दस्तं गतः सुकविता-कनकाचलोऽपि ।
शुष्कः सुशब्द-सरितामधिपो जवेन
देवान्तिकं गतवति त्वयि वागधीशे ॥ ५ ॥

*श्रीशिवनन्दनमिश्रः मैथिलः ।*

टीकमाणि संस्कृत-कालेजः, काशी ।

## प्रणयी ।

प्रीतिसंहतिरतीव दूतिका
यति कामपि दिशं भवादृशे ।
नीयते रहसिकिन्तयाऽनिश-
माशया मिलसि वासना-वशः ।
अङ्घ्रिरध्वनि दधाति न ध्वनिं
नाधुनाऽधिनयनं विधीयसे
साध्वसं मनसि बाधसे धियं
संधुनाति वत साधु सा वधूः ।
नायनेषु नयनेन नीयते
चिह्नितं चरणयोश्चिरन्तनम् ।
नो मनोरथरथो न सारथिः
साहसं यदसि यातु मातुरः ।
वेद नैव वदनेषु केवलं
शान्तिरत्र हिममन्तमागता
तद्धृत्यैव पथिकायसे कथं
किं व्यथामपि कथापथे कृथाः ।

—श्री श्यामानन्द झा ।

हिन्दू-विश्वविद्यालयीय-रणवीर-संस्कृत-पाठशालायां बालचरसंस्था ( Scouting ) संस्थापिता विद्यते । संस्कृतच्छात्रेषु प्रथमोऽयं प्रयासः । संस्कृत-च्छात्राः सर्वेऽपि सम्मिलिता भवितुमर्हन्ति ।

श्रीनरसिंहशुक्लः
शिक्षकः

# सम्पादकीयम् ।

## सुप्रभातस्य पुनर्जीवनम् ।

विगते संयुक्ताङ्के मया सुप्रभातस्थितिः प्रदर्शिताऽसीत्। प्रबन्धादिकं विधायाऽपि; प्रतिज्ञालवतां



दानवीरः राजा बल्देवदास, बिरला ।

सज्जनानां यथासमयं कारणकलापादसमर्थतया धनसाहाय्याभावात्, यन्त्रालयाधिकारिणाञ्च ऋणबाहुल्यात् सुप्रभातं समय-प्रतीक्षायामेतावन्तं कालमनैषीत्। दैववशाद्धा, ग्राहकानुग्राहकानामाशीर्वचोभिर्वा निःशब्दवर्द्धणमिवास्युधरस्य साहाय्य प्राप्य सुप्रभातमिदं पुनरुज्जीवितमिति परं प्रमुदिता वयं ग्राहकमहोदयेभ्यः सहर्षं साधुवादान् वितरन्तः पुनः सेवायां समुपस्थिताः स्मः।

सार्द्धद्विशतं मुद्राणां सहाय्यं विरला-महाविद्यालय-प्रधानाध्यापकानां पण्डित-प्रवराणां श्रीमतां सभापति शर्म्मोपाध्यायमहोदयानां प्रेरणया सुप्रसिद्धेन भारतीय-दानवीरेण श्रीमता राज्ञा श्रीबलदेवदास विरला महोदयेन स्वकीय पौत्र विवाह-शुभोपलक्ष्ये कृतम्।

एकदा प्रथममप्येवमेव सञ्जातमासीत् सुप्रभातस्यार्थसङ्कटम्। तदाऽपि तत्कालीन-समाजसभापतीनां स्वर्गीयमहामहोपाध्याय-श्रीप्रभुदत्तशास्त्रि महोदयानां प्रेरणया श्रीमता घनश्यामदास-विरला-महोदयेन पञ्चशतमुद्राणां साहाय्यं प्रदत्तमासीत्। द्वितीयवारमिदं साहाय्यं दत्त्वा पुनरप्युज्जीवितमिदमिति तेषां सहायकमहोदयानामुपकृतिविषये न किमपि वक्तुं पारयामहे। किम्बहुना—

विरलाः जानन्ति गुणान्, विरलाः कुर्वन्ति निर्धने स्नेहान्।<br>
विरलाः परकार्यरताः, परदुःखेनाऽपि दुःखिताः विरलाः॥

## संस्कृत-साहित्य-सम्मेलनम् ।

एतत्तु विदितमेव सर्वेषामेव शिक्षितानामशिक्षितानामपि यत् साम्प्रतयुगे भारतवर्षे सर्वमेव विपरीतमालोक्यते। अन्यस्य कार्याण्यन्ये कुर्वन्ति । ब्राह्मणाः खल्वितरजातीनां कार्याणि कुर्वते, इतरे च ब्राह्मणत्वाय प्रयतमाना ब्राह्मणानां कार्याणि कुर्वन्ति । संस्कृतज्ञाः पण्डिताः सेवाभावमापन्नाः स्वीयं सर्वमपि कार्यजातमपहाय दासानामिव स्वीयमात्मानं किमपि न गणयन्ति । अन्ये च तेषां कार्यं कुर्वन्तस्तेषां जीविकां जीवनञ्चापहरन्ति । हन्त ! भारतेवर्षे सहस्रशः सन्ति संस्कृत-पण्डिताः, सहस्रशश्च सन्ति तत्प्रणयिनः; परं तेषां संग्रन्थनाय न कोऽपि दृश्यते प्रयत्नः । 'संघे शक्तिः कलौ युगे' इति पाठं मन्त्रवदेव सर्वे पठन्ति पण्डिताः, परं संघशक्तिं समवाप्तुं न मनागपि संकल्पन्त इति सर्वं विदितमेवास्ति सुप्रभात-पाठकानाम् ।

साम्प्रतं हिन्दी-भाषादिप्रान्तीयभाषाभिज्ञा अपण्डिता अपि संघशक्तिद्वारा न स्वीयमेव गौरवं बर्द्धयन्ति, परं तत्त-द्भाषायाः, तत्तत्साहित्यस्य चापि गौरवं वर्द्धयन्ति । धनम्, यशः, सौख्यञ्च विपुलमासादयन्तीति प्रत्यहं प्रत्यक्षमालोक-यन्तो भृशं दुःखिता भवामो यत्ते संस्कृतानभिज्ञा अपि संस्कृतग्रन्थानां तत्तद्विषयाणाञ्च भाषास्वनुवादं विधाय, समालोचनादिकञ्च कुर्वन्ति । तेन च महान्तं लाभमप्यासादयन्ति । पण्डितास्तु व्यर्थमेव जीवनं यापयन्तो दरीदृश्यन्त इत्यादि विविधमालोच्य संस्कृतभाषाप्रणयिभिः द्वादशवर्षात् पूर्वं संस्कृतसाहित्य-सम्मेलननाम्नी काचन महती संस्था संस्थापिताऽसीत् । यस्याश्च प्रधानकर्णधाराः श्रीमन्तोगिरिधरशर्म्म चतुर्वेदमहोदयाः सन्ति । एकादशवर्षाणि यावत् यथाकथमपि तेषामेव प्रबलया प्रयत्न-परम्परया सम्मेलनस्याधिवेशनानि भिन्नभिन्न-प्रान्तीय-नगरेषु सञ्जातानि । कर्णपुरेऽस्य सम्मेलनस्य नवमाधिवेशनं महता समारम्भेण समभूत् । ततः प्रभृति वङ्गीय-संस्कृत-साहित्य-परिषदा सम्मेलन-प्रधानकार्यालयः कलिकान्तायां नीतः । परिषदः प्रधानकर्मचारिणौ श्रीपशुपति-नाथ-श्रीपतिशास्त्रिणौ सम्मेलनस्य मन्त्रिणावास्ताम् । परं दुर्दैववशात्तयोराकस्मिकस्वर्गवासेन सम्मेलन-कार्यालयः परिषत्कार्यालये साम्प्रतं मञ्जूषापिनद्धः सन्तिष्ठते वर्षद्वयादिति हन्त ! सम्मेलनस्य दुरवस्थामिमामालोच्य भृशं दुःखिता भवामो वयम् । अस्माकं श्रद्धास्पदाः जयपुरीय-संस्कृतमहा-विद्यालयाध्यक्षा महामहोपाध्यायश्रीगिरिधरशर्म्मचतुर्वेदमहोदयाः साम्प्रतं नितरामुदासीनाः सन्ति । सम्मेलनस्य भूतपूर्वसभापतयः महामहोपाध्यायश्रीहाथीभाईशास्त्रिणः, महामहोपाध्यायहरिनारायणशास्त्रिणः, म० म० प्रमथनाथ भट्टाचार्याः, म० म० दुर्गाचरणभट्टाचार्या अन्ये च सर्वे सम्मेलनकार्यकर्तार इदमपि न जानन्ति यत् क्व विद्यते सम्मेलनमिति । एवमेव संस्कृत-संस्थासु प्रथमं कार्यकर्तारः समुत्साहं कुर्वन्ति, पश्चाच्च विघ्न-विहताः पलायन्ते । वयमपीमां दशामनुभवामः समाजे ।

एवं कस्या अपि व्यापकसंस्कृत-संस्थाया अभावादेव बहवो धूर्त्ताः संस्कृतनाम्ना विविधाः सभाः संस्थाप्य जनता-वञ्चनमाचरन्ति । मया 'दिवाधूर्तैर्जगद्वञ्च्यते' इति शीर्षकेलेखे धूर्तस्यैकस्य वृत्तं प्रदर्शितमस्ति । एवमेव शतशः सन्ति संस्थाः, संस्थापकाश्च । यथा मुरादाबादमण्डले कुत्रापि अखिलभारतीयं विद्वत्सम्मेलनम्, संस्कृत-महामण्डलञ्च, मथुरायां ब्रजमण्डलयूनिवर्सिटी, अलीगढनगरेऽपि किमपि निखिलभारतीयं विद्वत्सम्मेलनमस्ति, छपरानगरे अ० भा० देवभाषापरिषत्, सिकन्दराबादनगरे, आगरापुरे अजमेरनगरेप्येवं सन्ति संस्थाः । काश्यामपि ब्राह्मणकालेज नाम्नी संस्था विद्यते । किं कथयामः ? सर्वत्रैवाराजकता संस्कृतविदुषां च गभीरमौदासीन्यमालोच्य वयं सम्मेलनाधिकारिभ्यः, विशेषतश्च तत्सञ्चालकेभ्यः श्रीमद्भ्यः श्रीगिरिधर शास्त्रिमहोदयेभ्यः साग्रहं प्रार्थयामो यत्ते नूनमिममेकमात्रं संस्कृत-विदुषां जीवनभूतं सम्मेलनं पुनरप्युज्जीवयन्तु । अन्यथा दशवर्षाणां परिश्रमोऽपि वृथा भवेत्, अग्रेऽपि कार्यं न प्रचलेत, धूर्तानां वञ्चकानाञ्च दुराचाराः समुन्नताः स्युरिति सर्वथाऽत्रविषये ध्यानमाकर्षयामः समेषामपि संस्कृतज्ञानाम् ।

* * *

## शुद्धिशास्त्रम् ।

जातित्यक्तो हि कुरुते पापं जातिविवर्जितः ।
तत्पापं जातिबन्धूनां जायते मनुरब्रवीत् ॥
आर्त्तानां मार्गमाणानां प्रायश्चित्तानि ये द्विजाः ।
जानन्तोऽपि न यच्छन्ति ते वै यान्ति समन्तु तैः ॥

—स्कन्दपुराण, १३८

साम्प्रतमेवास्माकं मान्यमित्रैः सनातनधर्म-महोपदेशकैर्धर्मगुरुभिर्विद्यावारिधि श्रीमत्पण्डित गोविन्दप्रसाद शास्त्रिभिः प्रकाशितं शुद्धिशास्त्रमालोक्य चिरोषिताऽस्माकमाशा-वल्लरी साफल्यं भजतेतरामिति वयं सबहुमानं सादरञ्च तेभ्यः साधुवादान् धन्यवादाँश्च वितरन्तः परं प्रमोदं प्राप्तुमः । इमे खलु शास्त्रिमहोदयाः सुचिरात् पञ्चापप्रान्ते देहलीप्रान्ते च सनातनधर्मस्य प्रबलं प्रचारं कुर्वन्त आसन् । स्वल्पकालादेव समुपस्थिते शुद्धि-प्रश्ने श्रीमन्तः शास्त्रिवर्याः सनातनधर्मानुकूलां शुद्धि-व्यवस्थां गवेषयन्तः कतिपयवर्षाणि यावत् वेद-धर्मशास्त्र-पुराणादिग्रन्थान् सुधीरं गभीरञ्चालोच्य शुद्धिशास्त्रं प्रणीतवन्तः ।

विगते माघमासे श्रीमन्तः शास्त्रिमहोदयाः काश्यां समागत्य काशीस्थ-पण्डितानां स्वीयां गवेषणां प्रदर्शितवन्तः । तत्रास्माभिस्तेषामत्यावश्यकं समयोपयुक्तं विद्वत्तापूर्णञ्च गवेषणमालोक्य काशीस्थ टाउनहाल् नाम्नि सभामण्डपे दिनत्रयं यावत् शुद्धिशास्त्र-विषये भाषणान्यपि कारितान्यासन् । तत्र पूज्यपादा हिन्दूविश्वविद्यालयीय-संस्कृत विभाग-प्रधानाचार्याः पण्डित-सम्राजः महामहोपाध्यायाः, श्रीप्रमथनाथ भट्टाचार्याः, तथा महा-महोपाध्यायाः कविचक्रवर्तिनः श्रीदेवीप्रसादशुक्ल महोदयाश्च सभापतिपदमलमकुर्वन् । तत्रैव च श्रीकाशीसनातनधर्म-पण्डितसभायाः शुद्धिविषयिणी घोषणा च समभवत् । तदानीमेव पुस्तकस्योपयोगिता विषये सर्वेषां विदुषां महती समालोचनाचलत् ।

साम्प्रतमेव पुस्तकमिममालोक्यास्माकं हृदयं हर्षोत्फुल्लं जायते । चिरादस्माकमासीदियमिच्छा यत् शुद्धिविषये सनातनधर्मानुकूला काचनविशदा व्यवस्था प्रकाशिता भवेत्, येन सनातनधर्मिष्वपि सुचिरप्रवृत्तं तमो व्यपगच्छेदिति । तदाशातीतं शास्त्रिमहोदयानां साफल्यं नितरां सभाजयामः, प्रार्थयामश्च पण्डितान् यत्ते स्वीयमान्ध्यं दूरीकृत्य सन्देहदिग्धं मनो विशदीकुर्वन्तु ।

* * * *

## पुराणालोचनम् ।

साम्प्रतं पुराणानां विषये भारतेवर्षे प्रचलितं महदान्दोलनम् । प्रथमं श्रीमद्दयानन्दस्वामिभिः पुराणेष्वतिशयोक्त्यलङ्कारस्य प्राधान्यमालोच्य पुराणानां निन्दाकृतासीत् । परं यतः प्रभृति शुद्धि-विषयकमान्दोलनं प्रवृत्तं तत आरभ्य पुराणानां विषये महती गवेषणा प्रचलति । पुराणेषु विविध-विषयानामद्भुतं संग्रहमालोक्य पुराणनिन्दका अपि तत्तत्वं विज्ञाय पुराणेषु श्रद्दधाना दृश्यन्ते । वयमपि यत्रतत्र पुराणेषु महत्त्वपूर्णानां विषयाणामालोचन-मवलोक्य तत्र गवेषणस्यावश्यकत्वमनुभवामः । एतस्मिन् विषयेऽस्माकं मित्रवरेण श्रीमता छेदीझा शास्त्रिणा साहाय्यं प्रदातुं न केवलं प्रतिज्ञातमेव; किन्तु गवेषणाऽपि प्रारब्धा । अयं शास्त्रिमहोदयो व्याकरणाचार्य-पुराण-तीर्थसाहित्य-शिरोमणिशास्त्रिप्रभृति परीक्षाः समुत्तीर्य साम्प्रतं पुराणान्वेषणाय प्रबलं प्रयतमान आस्ते । तस्य विषय-प्रवेशात्मको लेखः प्राप्तोऽस्माभिः । अग्रेच तैः संग्रहः क्रियते । सुचाग्रिमांकेषु यथा समयं प्रकाशितो भविष्यति यैरेतस्मिन् विषये गवेषणं कृतं स्यात्ते कृपया लेखान् प्रहिण्वन्तु ।

## शोकः !

मुजफ्फरपुरस्थ धर्मसमाज-संस्कृतकालेजे प्रधान-विद्वत्पदमलङ्कुर्वाणाः व्याकरणाचार्य-शिरोमणयो महामहोपाध्यायाः श्रीशशिनाथझा महोदयाः, कियतः कालात् काश्यामागत्य सुरभारत्या दैव-दुर्विपाकेन कथाशेषं गता इति महच्छोकास्पदम् । इमे भारतवर्षीय-प्रधानपण्डितेषु प्रथमश्रेण्या-भासन् । हन्त !!!

सं० शा० समाजस्य पञ्चमवार्षिकम्

आय-व्यय-विवरणम् ।

आयः

६०।≡)१/२ पूर्ववर्षावशिष्टम्
१००८।-) छात्रशुल्कात्
३०३॥) सहायक-सदस्येभ्यः
३७) माननीय-सदस्येभ्यः
१३) प्रकीर्णं साहाय्यकम्
२५।।।=) विज्ञापनेभ्यः
३।-)।।। पुस्तक विक्रयात्
७।-) वेष्टन-बन्धन-सीवनादीनामायः
३४)॥१/२ कुसीदात्
३९॥) सुप्रभातस्य प्रकीर्ण-विक्रयात्
५१) संस्कृत सेवासङ्घाय दानम्
श्रीकेदारनाथशर्म्मणा स्वपितामहस्मृतौ प्रदत्तम्
१८॥=) प्रकीर्णकात्
२८।=) श्रीकेदारनाथशर्म्मभ्यः प्राप्तात्
पूर्वावशिष्टात्
२॥≡) विशेषाङ्क विक्रयात्

---

१६६९-)।५/६ सर्वयोगः

ऋणं गृहीतम्

१४॥-) ग्राहकाणाम्
१५०) श्रीकोषाध्यक्ष महोदयेभ्यो गृहीतम्
६।-)।।। लेविङ्गवेङ्कतः
२७।।=)॥ संस्कृत ग्रन्थ मालायाः

---

१८६८॥।=)॥५/६ सर्वयोगः

व्ययः

१००९) सुप्रभात-मुद्रापणे
१८६॥)।।। चिटिकासु
१६२।।।)॥ कर्मचारिषु
६२।-)।।।१/२ कार्यालये
१७।)। राजकीय-परीक्षाफल-प्रकाशने
६८।)। सं० स० समाजोत्सवेषु
३।=) प्रचारे
५।।।≡)।।।२/३ प्रकीर्णे
४।=) कमीशन-प्रदाने

---

१५२२।।।-)॥१/६ सर्वयोगः
९९॥=) तारा यन्त्रालय-ऋण प्रदाने
३६॥≡)॥२/३ बनारसबैङ्क कोषे

---

१६५९≡)५/६ सर्वयोगः ( व्ययस्य )
२०९॥≡)॥ अवशिष्टम्

श्रीमदनगोपाल शर्म्मा
कार्यालयाधिकृतः
१९ सौर फाल्गुन, ८५

परीक्षितं शुद्धञ्च
श्रीविक्रमादित्य त्रिपाठी
३।३।२९

## सनातनधर्म-संरक्षकः ।

(उपदेशदर्पणस्य प्रथमसंख्या)

सङ्कलयिता—एकः काशीस्थः सनातनधर्मा विद्वानाचार्यः

पुस्तकमिदं हिन्दीभाषायां श्रुतिस्मृति-पुराणेतिहासशिलालेखादिप्रमाणाधारेण शुद्धिभोजनादिव्यवस्थाविषये लिखितमस्ति । विषयेऽस्मिन् वहुज्ञताभिलाषुकैर्वर्त्तमान-सामाजिक-धार्मिक-प्रगतिप्रतिस्पर्धिभिः खण्डनमण्डनकामैश्चावश्यं गृहेलिममिदम् जिघृक्षुभिःसार्द्धाणकद्वयस्य =)॥ चिटिका प्रेष्या ।

## रतिरहस्यम् (कोकशास्त्रम्)

एष प्राचीनो ग्रन्थः श्रीमहाकवि-कोकोक-विरचितः । अस्मिन् कामशास्त्रसम्बन्धिन्यः सर्वा वार्ताः, पद्मिनी-शङ्खिनी-चित्रिणी-हस्तिनी-प्रभृतीनां स्त्रीणां भेदाः, एवं चत्वारः पुरुषभेदाः, स्त्रीणां वशीकरणस्यौषधयः, मन्त्राः, तत्तद्देशीयानां स्त्रीणां पुरुषाणाश्च लक्षणानि, तेषां संयोगाः, आलिङ्गन-चुम्बनादीनां भेदाः, तेषां विशेषाश्च अन्ये च वहवो ज्ञातव्याः कामशास्त्रीयाः विषयाः सन्ति । एष ग्रन्थो नितरां सुप्रसिद्धः प्राचीनश्च विद्यते । एतस्यैका प्रतिः सर्वैरपि स्वस्वविधे नूनं संस्थापनीया । मूल्यम्—मुद्राद्वयम् ।

## सचित्रम् सामुद्रिकरहस्यम् ।

ले०—श्रीकालिकाप्रसादशर्म्मा, राजज्यौतिषी,

अद्भुतमिदं ग्रन्थरत्नम्, हिन्दीटीकासहितम्, अनेकचित्रविभूषितम्, नरनारीणां शुभाशुभज्ञाने नितरामुपयुक्तम्, संस्कृते सर्वथा नवीनमेव । एतेन हस्तरेखाणां गुरुं विनैव सम्यक् परिचयो भवति । मूल्यम् १।) मुद्रा ।

## गोलविद्या गोलसूत्रञ्च ।

ले०—श्रीतारादत्तपन्तः, साहित्याचार्यः, काव्य-व्याकरण-तीर्थः

संस्कृते भूगोलज्ञानस्य प्रधानं प्रथमञ्च पुस्तकम् । अत्र हिन्दी-भूगोल-पुस्तकवत् भारतवर्षस्य समस्तो भूगोलः सरलतया वालानां ज्ञानाय समुपवर्णितोऽस्ति । संस्कृतकाव्येषु नाटकेषु पुराण-पुस्तकेषु च समागतानां देशानां नदीनां स्थानानां पर्वतानाञ्चाधुनिकी स्थितिस्तेषां नामानि च सन्ति । सर्वथा द्रष्टव्यमिदं पुस्तकम् । मूल्यम् ॥) आणकाः ।

## राष्ट्रभाषाभूषणम् ।

ले०—श्रीगोपाल शास्त्री, दर्शनकेशरी, साहित्याचार्य्यः

एतत् पुस्तकं हिन्दीभाषायां विद्यते । संस्कृतज्ञानां हिन्दीज्ञाने नितरामुपकारजनकम् । सर्वैरपि संस्कृतज्ञैरेतद् व्याकरणम् पठनीयम् । एतेन हिन्दी भाषायां निवन्धलेखनेऽनुवादादिज्ञाने च महत्सौकर्यं स्यात् । मूल्यम्—सार्द्धाणकषट्कम् ।=)॥

## महाकवि बाणभट्टः ।

*लेः—सुप्रभात-सम्पादकः, श्रीकेदारनाथशर्म्मा*

हिन्दीभाषायामयमपूर्वो निवन्धः । अत्र वाणभट्टस्य जीवनविषये महत्वपूर्णा, मननीया च गवेषणा वरीवर्ति । छात्राणां कृते नितरामुपकारकोऽयं निवन्ध-वन्धः । मूल्यम् =)॥

सर्वेषां प्राप्तिस्थानम्—

☞ मैनेजर, सुप्रभात-कार्यालयः, बनारस-सिटी ।

---

## आवश्यक-सूचना ।

साम्प्रतं सुप्रभात-कार्यालयः गोदौलियास्थ-काशीनरेश-मन्दिरे, ( यत्र प्रथमं "सनातनधर्मोदय"-कार्यालय आसीत् ) सायं सार्द्धपञ्चादनं यावत् समुद्घाटितस्तिष्ठति। अगस्त्यकुण्डवीथीस्थ शारदाभवनकार्यालयेऽपि तस्मिन्नेव समये कार्यालयः सन्तिष्ठते। उभयत्र कार्यार्थिभिः समागन्तुं शक्यते।

संस्कृत-साहित्य-समाजः काशी। | श्रीमदनगोपाल शर्म्मा। कार्यालय-सहायकः,

Published by Gaurinath Pathak and printed by Rameshwar Pathak at the Tara Printing Works, Benares.

षष्ठ-वर्षे
सप्तमोऽङ्कः

कार्तिकः
१९८६

# सुप्रभातम्

संस्कृत-साहित्य-समाजस्य सचित्र मासिकं मुखपत्रम् ।

तिमिर-ततिमुदस्यद् भेदताराविलुम्पन्, नयदधि-सुरभाषाभाषि जागर्तिमुच्चैः ।
विबुध-विहग-वादैराह्वयद्भाग्यभानुम्, विलसतु भुवनेऽस्मिन् सर्वतः 'सुप्रभातम्' ॥

सम्पादकः—श्रीकेदारनाथशर्म्मा सारस्वतः

व्यवस्थापकः—

कविराजः श्रीसत्यनारायणशास्त्री भिषक्शिरोमणिः

( अगस्त्यकुण्डम्, बनारस-सिटी )

वार्षिकं मूल्यम्—३)
माननीयेभ्यः—१२)

छात्रेभ्यः—१।।)
वैदेशिकेभ्यः—५)

## लेख-सूची ।


१—मारुति शतकम् ।
महर्षि रामावतार शर्म्मा ... ११३

२—धर्म्मस्याज्ञा ।
श्रीपट्टाभिराम शर्म्मा ... ११४

३—श्रीभगवते धन्वन्तरये निवेदनम् ।
श्रीगिरिजादत्त शर्म्मा वैद्यभूषणम् ... ११६

४—आयुर्वेदस्य महत्त्वम् ।
कविराजः श्रीसत्यनारायण शास्त्री ... ११७

५—प्रहसनम् ।
श्रीचैतन्यपति उपाध्यायः ... ११९

६—शरद्द्युतिः ।
श्रीरमेशचन्द्रशुक्लः "अज्ञातः" ... १२०

७—कृषक-दैन्यम्
श्रीरामसुख मिश्रः ... १२०

८—स्वभावोक्तिः ।
वी० वेङ्कटरमणाचार्यः ... १२१

९—अखिलभारतीय-संस्कृत-साहित्य-सम्मेलनम् ।

१०—सम्पादकीय-विज्ञप्तिः


## चित्र-सूची ।


१—पण्डित रमापतिशर्म्मा व्याकरणाचार्यः ।




विविध-विषय-विभूषितम्, अद्वितीयम्, सचित्रम्, संस्कृत-मासिक-पत्रम् ।

षष्ठ-वर्षे | सौर-कार्तिकः १९८६ विक्रमाब्दीये | सप्तमोऽङ्कः ।

## मारुतिशतकम् ।

[ क्रमागतम् ]

प्रणेता—स्वर्गीय महर्षि रामावतारशर्म्मा ।

अव्यादव्याजभव्याकृतिरतनुरयव्यासनव्यानुभावः
सव्यासव्याद्रिदिव्यावनिरुहकुसुमार्चाभृदव्याकुलाङ्गः ।
कव्यादौघाच्छरव्याण्युपदधदनिशं साधुरव्यात्मजाथं
हव्याहारव्रजव्याहतिविनुतिरसौ सज्जनानाञ्जनेयः ॥ २० ॥
सुग्रीवे क्लीबजीवे विचलति च नलेऽप्यङ्गदे भङ्गमाप्ते
ऋक्षेशे क्लेशशेषे स्खलति भयभरान्नीलवक्त्रे च नीले ।
रोषावेशादशेषं विकलयति वलं मेघनादे सनादं
त्रासः प्राभञ्जनिर्द्राग्विरचयतु विपद्भञ्जनं सज्जनानाम् ॥२१॥
रक्षोवक्षोऽस्थिकक्षक्षपणचणभुजक्षेपिताक्षुद्रवृक्षः
क्षिण्वन्क्षिप्रं समीकक्षितिषु परवलक्षेमसक्षय्यपक्षः ।
क्षुक्षामान्विमथ्नन् क्षणमतनुघृणो यक्षराजानुजाक्षान्
सेडाविक्षोभितक्ष्मः क्षुपमिव हनुमान् क्षीवतां वः क्षुणत्तात् २२
अत्रस्नुर्जत्रुयन्त्रं त्रसरमिव बलत्रातसुत्रामशत्रो-
र्मथ्नंस्त्रेतात्रिनेत्रस्त्रुटति निजभराद्दत्तगात्रस्त्रिकूटे
कुर्वन्पात्रं त्रपायास्त्रिदशरिपुपतिं पवित्रमादृष्टतन्त्रं
पुत्रो दुष्कर्मसूत्रं ह्रसयतु मरुतो वस्त्रयीत्राणसत्रः ॥ २३ ॥
सार्द्धं सार्द्धं परार्द्धं निऋतिकुलभुवां जानकीशोकजालैः
साकं साकम्परक्षः परिवृढकृतुकैरक्षमक्षय्यवीर्यः ।
निष्पिष्योद्यानसालां सह बहलतरैः संज्वरैर्निर्जराणां
लङ्कायां गर्जितं वो विदधदनिलभूरस्तु भव्याय शश्वत् ॥२४॥
स्पर्द्धागर्द्धावदर्द्धावधिविधृतधराधाविधाराधराणा-
मूर्ध्वं वर्धिष्णुगार्धोद्धतगरुदनिलोद्धूतमूर्ध्ना रिपूणाम् ।
अद्धा श्रद्धां समृद्धामधिकमधिमृधं धूनयन् गान्धवाहि-
र्बुद्धेर्धर्म्यां विदग्धां धुतविधुरधुरां धोरणीं वो विधेयात् ॥२५॥
अन्वाकृष्टैस्तटान्तात्सपदि रयवशाद्रोमकूपप्रविष्टैः
क्षुन्दन्वक्षांसि रूक्षक्षितिरुहनिकरै रक्षसां निर्गलद्भिः ।
पिंषन्पाषाणवर्षैर्गिरिभिरदितिजद्वेषिपाशस्य पस्त्यं
लङ्कोत्सङ्गे पतन्द्रागप्रभवतु भवतां भूयते पार्षदश्विः ॥२६॥
द्राग्रम्भास्तम्भदम्भैः सह गलितजवोज्जृम्भितैर्यातुडिम्भैः
स्तम्भन्दम्भोलिकुम्भीनसगरुडभुजं हन्त ! जम्भारिशत्रुम् ।
संरम्भारम्भविष्कम्भितबलजिदवष्टम्भगम्भीरसेना
कुम्भीरं कुम्भकर्णं हरतु तव कृणन् सम्भ्रमं कीशशम्भुः ॥२७॥

तूर्णं यघुणताणौंनि.धानिसपृतनाकर्णधारं विचूर्णौ-
दीर्णाङ्गं कुम्भकर्णं रणरणरणकोद्घूर्णसम्पूर्णकर्णम् ।
निर्णीयाभ्यर्णमाप्तं बलरिपुजयिनं तर्णकं स्वर्णवर्णः
सङ्कीर्णोऽन्तर्घृणासिस्तृणयतु हनुमांस्तेऽवकीर्णित्वदोषम् ॥२८॥
सत्रापूर्वो वनौका गिरिकलनपटुः प्रेष्ठधात्रीफलोऽसौ
केसर्यात्मावलीलावितततरुचिरतो राजकोपक्रियास्थः ।
वातायुस्थानशाली प्रियगुरु उदिताघापहस्तिग्यहारी
भक्त्या रूपाणि विष्णोरनुविदधदिवास्त्वाञ्जनेयो विभूत्यै ॥२९॥
भिल्लीभिस्सिल्लमल्लीपरिमिलिनि दरोत्फुल्लकाम्पिल्लवल्ली-
हल्लीसोल्लासमल्ले मलति सति सरिल्लोलकल्लोलवेल्ले ।
झिल्लीक्षुल्लान्प्रचुल्लांल्लघुरजनिचरांल्लीलयोल्लोठ्य नर्द-
ल्लखानुल्लाघयन्सँल्लवयतु विपदं तल्लजो मर्कटानाम् ॥ ३० ॥
स्थेष्ठस्थूणास्थविष्ठोद्धतपारघभुजान्स्थावरस्थास्नुसंस्था-
न्द्वास्थान्स्थाने विमथ्नन्स्थलमवदलयन्रक्षसां स्थायुकास्थः ।
स्थाणुस्थामासुरद्विट्स्थपतिपतिमसौ स्तम्भयन्स्थूलरक्षस्-
स्थाप्याच्छोकाद्यवस्थास्थिरमनिलभवः सुस्थतास्थासकं वः ३१
पृथ्वी पृथ्वी फणे सर्पपति फणभृतः पुण्डरीकत्यथासौ
पाथोधौ सोपि गण्डूपति करजठरे कुम्भयोनेः स खेऽसौ ।
खद्योतत्यप्यदः स क्षुपति बलिरिपोः षट्पदत्येष देवो
यद्भिम्बाब्जे करस्थामलकति स पुरा यस्य सो व्यात्कपिर्वः ।३२।
प्रत्नैर्वाचां प्रपञ्चैरपचितविभवश्चन्द्रचूडावतार-
श्चञ्चच्चञ्चोपचारां रजनिचरचमूं चञ्चलां चूर्णयन्स्तात् ।
चारुचेलाञ्चलाग्रं चपलमचतुरं चालयंश्चालयस्थं
चिन्तासभ्रान्तचित्तं निर्ऋतिकुलपतिं भूतये कीशचन्द्रः ॥३३॥
सद्यः खद्योतजालं द्युमणिरिव विनिर्मृद्य शत्रून्समद्या-
न्हृद्यामुद्यानमालां रजनिचरपतेर्द्योतवन्द्यो विभिद्य ।
माद्यन्विद्याधराद्यैः सरसपरिलसद्गद्यपद्यैरनिन्द्यै-
स्त्वद्वाद्यैर्नुतस्ते दिशतु पवनभूर्वृद्धिमद्यानवद्याम् ॥ ३४ ॥
यस्मिन्माहेन्द्रशृङ्गादतनुतनुरयेऽभ्युत्प्लुते मेघमार्गं
वेगाकृष्टः पयोधिः क्षुभिततिमिकुलो राजताद्रिप्रकाशे ।
चन्द्रभ्रान्त्याभ्युदञ्चन्निव विबुधवधूसंसदातङ्कर्युदर्का-
न्भद्रान्दिशयादजस्रं स पवनतनुभूर्धार्मिकाणां जनानाम् ॥३५॥
चक्रीवच्चक्रवालं रथमभिदलयन्नाहवाम्भोधिनक्रः
क्रूरक्रव्यादचक्रक्रथनकृतमतिर्विक्रमाक्रान्तशक्रम् ।
क्रन्दत्क्रोष्टुकसन्द्राक्क्रकचनिभनखः क्रीडया क्रोधवक्रं
रक्षःक्रोडं विमथ्नन् क्रशयतु विपदं कीशपङ्क्रन्दनस्ते ॥ ३६ ॥

# धर्मस्समाजश्च ।

ले०—श्रीपट्टाभिरामशर्म्मा ।

अयि पूज्यचरणाः ! नेदं तिरोहितं प्रेक्षावतां यत् सत्स्वपि देशान्तरेषु अधरीकृतधर्मेषु अर्थकामप्रधानेषु बहुषु अस्माकं पवित्रतमो भारतदेशः आसृष्टेरद्ययावत् धर्मोत्तर एवावतिष्ठते । अनेनैव च कारणेन देवा अप्यवासकामा अनुपमेऽस्मद्भारतदेशे हार्देन भावेन जन्म वाञ्छन्ति इति । अमुनैव च हेतुना भगवान् अपरिमेयोऽपि, निर्गुणोऽपि, निरवच्छिन्नोऽपि, गुणातीतोऽपि सगुण इव मायाशबलितः भजते बहूनवतारान् धर्मानुष्ठानलोलुप इव । अमुमेव च धर्मं मनीषिणः सनातनं देशकालपरिच्छेदशून्यं अपुरुषलेशासंस्पृष्टेन अनादिनिधनेन सर्वज्ञकल्पेन शब्दराशिना वेदाख्येन विविधविधिकलापविलसितेन अर्थवादाद्युपबृंहितेन प्रतिपादितमामनन्ति । अयमेव च धर्मः पुरुषैः तत्तदधिकारविशिष्टैः यथावदन्यूनानतिरेकमपरित्यक्ताङ्गकलापं अनुष्ठानविषयीकृतः तस्मै तस्मै फलायावश्यं कल्पत इति ।

अतएव च भगवता महर्षिणा कणभुजापि 'यतोऽभ्युदयनिःश्रेयससिद्धिस्स धर्मः' इति धर्मलक्षणमुक्तम् । 'यः पुरुषं निःश्रेयसेन संयुनक्ति स धर्मपदवाच्य' इति भगवता शबरस्वामिना 'चोदनासूत्रे' धर्ममीमांसाभाष्ये सुस्पष्टमभिहितम् । एतावता प्रमाणजातेनेदमवगम्यते, यद् आत्मनो यथावदनुष्ठानेन अपारे दुःखोदधौ निमग्नान् प्राणिनस्ततस्समुत्तार्य तत्तदभिलषितमैहिकमामुष्मिकमुभयात्मकं वा फलं सपदि कालान्तरे वा प्रदाय यः प्राणिन उन्नयति लौकिके वा व्यवहारे पुरुषाणां

साध्वीं परिस्थितिं संपादयति, तत्तत्सामाजिकव्यवहारप्रवर्तनेन तत्समुदायात्मकं वा जगद्धिधारयति स धर्म इत्यावेदितं भवति । तत्र च पर्यालोच्यमानेषु श्रुतिस्मृतीतिहासपुराणादिषु द्वेधा धर्मस्वरूपनिरूपणमुपलभ्यते आमुष्मिकैकप्रयोजनं, ऐहिकसंवलितामुष्मिकैकप्रयोजनञ्चेति । तत्रामुष्मिकैकप्रयोजनेषु यद्यपि न दरीदृश्यते देशकालविपरिणामेन तस्यापि विपरिणामः, तथापि ऐहिकसंवलितेषु धर्मेषु आसृष्टेरद्ययावदसंख्येया विपरिवृत्तयस्समजनिषत तत्तत्समयानुसारेणेति करवदरसमानम् ।

स्मर्यते हि तत्र तत्र स्मृतिषु पुराणेषु च तत्तत्कालानुरोधेन विपरिणामो धर्मस्य । यथा वदति भगवान्सर्वज्ञकल्पो मनुः 'अन्ये कृतयुगे धर्मास्त्रेतायां द्वापरेऽपरे । अन्ये कलियुगे नृणां युगह्रासानुरूपतः' इति ॥ अमुमेव चार्थं मनसि निधाय भगवान्पराशरोऽपि तत्तद्युगभेदेन धर्मभेदावश्यं भावात् तादृशभिन्नधर्मप्रतिपादिकानां स्मृतीनामपि तत्तत्कालानुरोधेन प्रामाण्यव्यवस्थामप्याह—'कृते तु मानवा धर्मास्त्रेतायां गौतमाः स्मृताः । द्वापरे शङ्खलिखिताः कलौ पाराशराः स्मृताः' इति । यदि सर्वास्ववस्थासु कूटस्थाद्वैतब्रह्मवत् अविकार्यनित्यस्वरूपताधर्मस्य तत्प्रतिपादकस्य मानवस्य पराशरस्य वा ग्रन्थस्य एकरूपत्वावश्यंभावेन प्रतिपाद्यविषये लेशतोऽपि भेदाभावात् किमर्थं युगभेदेन प्रामाण्यविशेषमध्यवस्यति भगवान् पराशरो मानवे गौतमे वा ग्रन्थे । भगवता मनुनापि 'तपः परं कृतयुगे त्रेतायां ज्ञानमुच्यते । द्वापरे यज्ञमेवाहुर्दानमेव कलौ युगे' इति तत्तद्युगभेदेन तपः प्रभृतीनां धर्माणां व्यवस्था समपादि । यदि च सर्वदा धर्मस्यैकरूपता कथमियं व्यवस्था संगच्छेतेति विभावयन्तु सुधिय एव । अतो वयं मन्यामहे वेदे स्मृत्यादिषु च विहितेषु क्लेशसुलभसाध्येषु धर्मेषु सर्वेषामेतेषां समष्टिरूपस्य जगतोऽभ्युदयाय व्यष्टिरूपस्यैकैकरूपस्य जनिमतः श्रेयसे वा प्रवृत्तत्वाद्धर्माणां यदा यस्य यथानुष्ठानं जगतः श्रेयसे कल्पते तदा तस्य तथानुष्ठानं समुचितमिति प्राचामस्मत्पूर्वतनानां विदितवेदितव्यानां लोकानुग्रहैकाविष्टहृदयानां मनस्यासीदिति । अतएव यदा यदा धर्मस्य श्रुतिस्मृत्युदितस्यापि क्वचित्कदाचिद्देशकालाद्यनुरोधेन संकोचो विकासो वाऽपेक्ष्यते तदा धर्मज्ञास्सर्वेऽप्येकत्र संमिलिताः विचार्य लौकिकीं परिस्थितिं लोकानुग्रहैकधिषणाः तत्तद्देशकालानुसारेण निरणैषुः धर्मस्वरूपमिति तत्र तत्र पुराणादिषूपलभ्यते ।

अयमेव चाशयः धर्मं व्याख्यातुं प्रवृत्तेन भगवता आपस्तंबमहर्षिणा 'अथातस्सामयाचारिकान्धर्मान्व्याख्यास्यामः' इति धर्मस्य सामयाचारिकत्वविशेषणं ददता, अग्रे 'धर्मज्ञसमयः प्रमाणं वेदाश्च' इति वेदापेक्षया धर्मज्ञसमयस्य प्रथमतः प्रामाण्यमभ्युपगच्छता प्रकटीक्रियते ।

यदा वा अस्मत्पूर्वतनाः अस्मत्समाजस्य शक्तिह्रासमपश्यन्, बुद्धेरल्पताञ्चावालोकयन्, श्रद्धाया आत्यन्तिकमभावं ईक्षन्ते स्म तदा एकीभूय कलेरादौ कृपाविष्टचित्ताः कांश्चन धर्मान्प्रवर्तितवन्तः, कांश्चन पूर्वप्रवृत्तानपि न्यरुन्धन् । अमुमर्थं स्पष्टमेव वदन्ति श्रीमन्तो माधवाचार्याः पराशरमाधवीये—"एतानि लोकगुप्त्यर्थं कलेरादौ महात्मभिः । निर्वर्तितानि धर्माणि व्यवस्थापूर्वकं बुधैः" इति ।

अतः अद्यत्वेऽपि देशकालादिकमनुसृत्य समाजाभ्युदयाय यदि कश्चिद्धर्मनिर्णयः कर्तव्य आपेद्येत; तर्हि अलोलुपैर्निर्मत्सरैः धर्मशास्त्रमर्मवेदिभिः वि-

द्भिर्मिलित्वा सुविचार्य निर्णीयेत धर्मपथः। मन्ये, नात्र दोषलेशोऽपीति। नैतावतायमाशयो मम यत् सर्वथा प्राचीनाचरितो धर्मः स्वमनीषानुसारेणोन्मूलनीय इति। अयि आर्यमहोदयाः! अवधत्त किञ्चिदिव; कीदृशी दुरवस्था सञ्जाता अस्मद्भारतदेशस्य! कीदृशं वा दुःखमनुभवन्ति अस्मद्भ्रातरो भगिन्यश्च! कीदृशो वा वज्राघातस्सञ्जनि अस्माकं पूज्यतमस्य सनातनधर्मस्य! सर्वेष्वेषु कीदृशो वा ह्रासः प्रतिकलं प्रजायते! क्वचिच्च वज्राघातं हन्यते यवनैः! क्वचिच्च समूलकाषं सम्पिष्यते क्रैस्तमतावलम्बिभिः! क्वचिच्चास्मद्भ्रातृभिरेव कैश्चिदपार्थकरणेन इतस्ततः शिखायां गृहीत्वा आकृष्यते धर्मः! मतान्तरीयैस्सर्वैरपि रात्रिन्दिवं स्वधर्मरक्षणे यतमानैरेव स्थीयते। अस्माभिस्तु सर्वदा सुप्यत एव। यदि इदानीमपि वयं पिनद्धाक्षाः 'तातस्य कूपोऽयमिति ब्रुवाणाः क्षारं जलं का पुरुषाः पिबन्ति' इति न्यायमेवानुसरन्तः एकामेव सरणिमनुगच्छेम; मन्ये नास्माकं अस्मद्देशस्य वा युगान्तेऽपि सन्तरणं भविष्यतीति। अतो महोदयाः 'उत्तिष्ठत! मा स्वपत! यद्यदस्मत्समाजविषये कर्तव्यं तस्य सर्वस्याविलम्बेन करणे सन्नद्धा भवत। धर्मज्ञानस्मद्गुरुवरान्शरणमन्विच्छत।

सत्यम्; समुद्रयात्रा देशान्तरगमनं वा शास्त्रनिषिद्धमिति परन्तु, आधुनिकीं परिस्थितिमनुसृत्य यदि देशान्तरगमनेन देशस्यास्मत्समाजस्य, सर्वोत्तमस्यास्मत्सनातनधर्मस्य, सर्वजनलालनीयायास्सुरभारत्याश्च अल्पीयानप्युपकारस्सञ्जायेत तर्हि अवश्यमेव तत्कर्तव्यम्। स एवास्माकं प्राथमिकः कर्तव्यो धर्मः। न तेन दोषलेशोऽपि भवितुमर्हति। अत एव च इदानीं राज्यपरिषदि-(असम्ब्ल्याख्यायां) कृतो वैवाहिकविषयनिर्णयः शारदाबिलाख्यः अस्माकं धार्मिके विषये हस्तक्षेपं करोतीति कृत्वा तं निरोद्धुं देशान्तरगमनं यद्यावश्यकं स्यात् तर्हि निषिद्धस्यापि धर्मोज्जीवनार्थं तस्य करणे न कोऽपि दोषः। अतस्सर्वैरपि विशालदृष्टिभिर्भूत्वा अस्मत्समाजोन्नतये यत्कर्तव्यं तदचिरादेव कृत्वा अस्मद्देशस्य अस्मत्समाजस्य, अस्मत्सुरभारत्याश्च समुन्नतिस्संपादनीया इति।

## श्रीभगवते धन्वन्तरये विनिवेदनम्।

लेः—पण्डित श्रीगिरिजादत्त पाठकः, वैद्यभूषणम्।

घनाक्षरीच्छन्दः

विमला विभूतिस्तव सुहृदां सुखाय चास्तु,
सिञ्चतु सदैव सुधा-धारा वैद्य-वल्लरीम्।
गद-गज-वाहिनीयं विपिनम्प्रयातु दृष्ट्वा;
सत्वरं प्रयोग-पञ्चाननममितौजसम्॥
सुखिनो भवन्तु लोकाः नीरुजः शतायुषश्च
स्पृशतु न जातु चिन्ता-सर्पिणी शरीरकम्।
तिष्ठतु मनो मे पादपङ्कजे निरन्तरन्ते;
सुजनमनःसु मूर्तिरास्तामवः प्रतिक्षणम्॥ १॥
शुष्यति सरोवरोऽयं सिञ्च सुधा-धारयाऽद्य
मुञ्चाऽधुना निद्रां कुरु कृपेक्षणं सत्वरम्।
देहि स्वां समज्ञां हर रोग-भव-बाधाः सर्वाः;
स्वल्पा इह प्राणाः प्रभो! जीवनं हि गत्वरम्॥
तिष्ठ मनोमन्दिरे मे निष्ठतामिवधेहि सदा;
धृष्टतां क्षमस्व क्रीड़ प्राप्य चित्त-चत्वरम्।
शल्यञ्च शलाकाप्राणधानं मृतकल्पं तयोः
सञ्जीवनाय चैहि धन्वन्तरे! सुसत्वरम्॥२॥

परमं पवित्रञ्चारुचरणं निधेहि चात्र;
विष्टरम्मनो मे तत्र सादरं प्रतिष्ठताम् ।
यानि चार्चनानि विहितानि तानि प्रतिगृह्य;
गदिनां सुवार्तं देहि सुखितां वलिष्ठताम् ॥
भगवन् ! मदीयं विनिवेदनम्विधेहि चित्ते;
कोऽपि न करोतु भिन्नभावयोर्ग्रनिष्ठताम् ।
वर्द्धतां सदैव शुभा प्रतिभा गदघ्नी तथा;
चायुषागमेषु मतिरेतु नो गरिष्ठताम् ॥ ३ ॥
मनसि स्मरन्तु सर्वे भिषजस्त्वदीयाकृतिं;
वचनं वदन्तु सत्यं रोगिणां हितङ्करम् ।
निपुणाः प्रयोगैः किल सर्वेषां सुखाय सन्तु;
दिव्यतु सदैव दिव्यौषधमगदङ्करम् ॥
वर्द्धताम्प्रभावः शुभः शोभतां स्वभावः सौम्यः,
दीप्यतां स्वतन्त्रं सरहस्यञ्च सुखङ्करम् ।
शल्यनिगमेषु शलाका साध्यामयेषु स्यातां
विशदा विशुद्धा बुद्धिर्ज्ञानञ्च शुभङ्करम् ॥ ४ ॥
भारतीया भूमिस्तवक्रीड़ास्थली विश्रुतैव;
काशीपते ! काशिकां सनाथीकुरु पुनरेव ।
स्वागताय चैते स्वल्पमतयः स्तुवन्ति वैद्याः
तेषां मनःकामनां सुपूरयाशु, देव-देव ! ॥
जगति प्रतिष्ठां प्राप्य परमं प्रमोदमेत्य;
सफला चिकित्सा भातु भेदं माऽस्तु किञ्चिदेव;
मुह्यतु भुवनत्रयं वीक्ष्य कर्मदाढ्यञ्चास्याः
सर्पतु समज्ञा सितीकर्तुं प्रतिलोकमेव ॥ ५ ॥

---

अखिलभारतवर्षीयं संस्कृत साहित्य-सम्मेलनं फाल्गुन शुक्लाष्टमीमारभ्य दिन चतुष्टयं यावत् काश्यां गोदौलियास्थ काशी-नरेश मन्दिरे वादनद्यतो भविष्यति ।



## आयुर्वेदस्य वेदत्वम् ।

ले०—कविराजः श्रीसत्यनारायणशास्त्री भिषक्शिरोमणिः



धीवर्यैव सुविदितमिदं सर्वविदुषां चत्वारो वेदा इति, तत्राथर्ववेदस्त्रिस्कन्धो मन्त्रतन्त्रौषधविभागात्मकः। तेष्वौषधखण्ड एवायुर्वेदोऽत्र नास्ति केषाञ्चिदपि बुधवर्याणामनुपपत्तिः । सन्ति च यद्यपि ऋगथर्ववेदयोरुपवेदं मन्वाना बहवो विद्वांसः, यथाऽऽहुरेके- चरकादयो महर्षयः, आयुर्वेदो नाम यदुपाङ्गमायुर्वेदस्य, अपरे तु—अयमायुर्वेद उपवेदोऽथर्ववेदस्येति, तथा हि—ऋग्वेदस्योपवेद एष आयुर्वेद इति जावालिः । कात्यायनस्तु-ऋग्वेदस्यायुर्वेद उपवेद इति चरणव्यूहे । नात्रोभयोर्मतभेदः, अपि तु वेदत्रयीतिपक्षे ऋग्वेदस्योपवेदत्वमिति सर्वतन्त्रसिद्धान्तः, तत्र समासेनाभिहितस्यैव विषयस्य विस्तरेणोपबृंहणमथर्ववेद इति ।

तत एवोल्लिखामि प्रतितन्त्रसिद्धान्तापेक्षया सर्वतन्त्रसिद्धान्तस्य परमार्थतो बलवत्वादेकदेशीयवाक्यान्यनुस्मरद्भिः सर्वैरेव भिषग्भिर्वेदस्वरूपत्वमेव स्वीक्रियत इत्यायुर्वेदिकानामभिष्टिः ।

उक्तं हि भावमिश्रेण—

“ अथर्वान्तर्गतं सम्यगायुर्वेदञ्च लब्धवानिति ।
यदा मत्स्यावतारेण हरिणा वेद उद्धृतः ।
स भाति चरकाचार्यो वेदाचार्यस्त्रिलोकिषु ॥”

ब्रह्मवैवर्त्तपुराणे आयुर्वेदावतरणक्रमे—

"ऋगथर्वाभिधयोर्दत्त्वा वेदयोरौषधादिकम् ।
त्रिस्कन्धमायुषो वेदं भास्कराय ददौ विभुः ॥
भास्करश्च स्वशिष्येभ्य आयुर्वेदं स्वसंहिताम् ।
प्रददौ पाठयामास ते चक्रुः संहितास्ततः ॥"
इत्यादि ।

ब्रह्मवैवर्ते चैवमेवाह भगवान् व्यासः —

ब्रह्मवैवर्ते पुराणे १६ अध्याये ब्रह्मखण्डे ।

तथाच—

अथर्वा नामर्षिर्भूतविद्याऽऽचार्यो बलिमन्त्रादि प्रवर्त्तकः । यजुर्वेदस्य षडशीतिर्भेदाः । चरका द्वादश भेदाः । चरका आह्वरकाः । कठाः प्राच्य-कठाः । इति ।

योगवार्त्तिके विज्ञानभिक्षुः—योगेनेत्यादि ।

भोजश्च-पातञ्जल-सूत्रवृत्तौ—

शब्दानामनुशासनं विदधता पातञ्जले कुर्वता
वृत्तिं राजमृगाङ्कसंज्ञकमपि व्यातन्वता वैद्यके ।
वाक्चेतो वपुषां मलः फणिभृतां भर्त्रेव येनोद्धृतः ।

पाणिनीयव्याकरणे प्रौढमनोरमाखण्डनकारैः, चरकटीकाविधातृभिश्चरक चतुराननोपाधिविशिष्टै-श्चक्रपाणिमहोदयैः—

"पातञ्जल-महाभाष्य-चरकप्रतिसंस्कृतैः ।
मनोवाक्कायदोषाणां हर्त्रे हि पतये नमः ॥ इति ॥"

रामचन्द्रदीक्षितप्रणीते पतञ्जलिचरिते—

"सूत्राणि योगशास्त्रे, वैद्यके चरकसंहितामतुलाम् ।
भाष्यं पाणिनिसूत्रे, प्रचारयामास जगदिदं त्रातुम् ॥
इति ।

अथेन्द्रस्तदायुर्वेदामृतमृषिभ्यः सङ्क्रमय्योवा-चैतत् सर्वमनुष्ठेयमिति ।

किमधिकप्रलपनेन चत्वारोऽपि वेदाश्चिकित्सा-मात्रैकोद्देश्याश्चतुर्ष्वपि वेदेषु चिकित्साऽभिहितेति-न सन्देहावसरः । बहवो मन्त्रा बह्वयः श्रुतयः समुप-लभ्यन्ते, तत्र च कतिपया एव प्रदर्श्यन्ते विस्तर-भयात् ।

तद्यथा—

शीर्षक्तिं शीर्षाऽमयं कर्णशूलं विलोहितम् ।
सर्वं शीर्षण्यं ते रोगं बहिर्निमन्त्रयामहे ॥ १ ॥
कर्णाभ्यां ते कङ्कूषेभ्यः कर्णशूलं विशल्यकं ॥ सर्वं २ ॥
यस्य हेतोः प्रच्यवते यक्ष्मः कर्णत आस्यतः ॥ सर्वं ३ ॥
यः कृणोति प्रमोतमन्धं कृणोति पूरुषम् ॥ सर्वं ४ ॥
अङ्गभेदमङ्गज्वरं विश्वाङ्गयं विशल्यकम् ।
सर्वं शीर्षण्यं ते रोगं बहिर्निमन्त्रयामहे ॥ ५ ॥
यस्य भीमः प्रतीकाश उद्वेपयति पूरुषम् ।
तक्मानं विश्वशारदं बहिर्निर्मन्त्रयामहे ॥ ६ ॥
उरु अनुसर्पत्यथो एति गवीनिके ।
यक्ष्मं ते अन्तरङ्गेभ्यो बहिर्निर्मन्त्रयामहे ॥ ७ ॥
यदि कामादपकामाद्धृदया जायते परि ।
हृदो बलासमङ्गेभ्यो बहिर्निर्मन्त्रयामहे ॥ ८ ॥
हरिमाणं ते अङ्गेभ्यो प्वामन्तरोदयात् ।
यक्ष्मोऽधामन्तरात्मानो बहिर्निमन्त्रयामहे ॥ ९ ॥
आसो बलासो भवतु मूत्रं भवत्वाभयत् ।
यक्ष्माणां सर्वेषां विषं निरवोचमहं कृत्वत् ॥ १० ॥

औषधप्रतिपादकमन्त्रा :—

ओषधीः प्रतिमोदध्वं पुष्पवतीः प्रसूवरीः ।
अश्वा इव सजित्वरीर्वीरुधः पारयिष्णवः ॥
ओषधीरिति मातरस्तद्वो देवीरुपब्रुवे ।
सतपमश्वं गां वास आत्मानं तव पूरुष ॥
अश्वावती सोमावतीमूर्जयन्तीमुदोजसम् ।
आविस्ति सर्वा ओषधीरस्मा अरिष्टतातये ॥
यस्यौषधीः प्रसर्पथाङ्गमङ्गं परुस्परुः ।
ततो यक्ष्मं विबाध्वमुग्रोमध्यमशीरिव ॥

अग्नेर्घासो अपां गर्भो यारो हन्ति पुनर्णवाः ।
ध्रुवा सहस्रनाम्नी भैषजी सन्त्वाभृताः ॥
मधुमन्मूलं मधुमदग्रमासां मधुमन्मध्यं वीरुधां बभूव ।
मधुमत्पर्णं मधुमत्पुष्पमासां मधोः संभक्ता अमृतस्य ॥
भद्रो घृतमन्नं दुहतां गोपुरोगगवम् ।
यावतीः कियतीश्चेमाः पृथिव्यामध्योषधीः ।
तामा सहस्रपर्ण्येर्मृत्योर्मुञ्चत्वं हसः ॥ इत्यादि ॥

अतएवोपरितनमन्त्रैर्निष्पक्षपातानां कोविदाना-मनुमोदितमेवेदं साग्रहं स्याद्-यदायुर्वेद ऋग्वेदाथर्ववेदयोरेकतमएवान्तर्भूतो न तूपवेदो धनुर्वेदादिवदिति ।

ये तूपवेदवादिनस्तेषामपि मते नास्य वेदत्वप्रतिघातो महर्षिभिः संगृहीतानामेव संहितानामुपवेदार्हता सम्भवाद् ।

अतोऽविसंवादिवेदत्वं सिद्धमायुर्वेदस्येति वोबुद्धयन्तां स्वस्वबुद्धौ बुद्धिमन्तो बुद्धिवैशद्येन सदसद्विवेचनपारवश्येन च ।

तथाच—वेद इवैनमधीयताम् मन्वतां निदध्यासन्तां सन्ततमविच्छेदेन शृण्वन्तु श्रावयन्त्वपि सदयहृदया जगदवनविहस्ताः प्रशस्तचरिताः सन्त इति शम् ।



## प्रहसनम् ।

परिहासी :—अहो ! किमति महान् जन-सम्मर्दः अद्य लवपुरे दृश्यते ।

नलिन :—को भवान् ! तत्र भवान् किं न जानाति स्वराज्ये प्रतिज्ञा-पूरणाय महासभायां (कांग्रेस) भारतस्य सभ्यलोकाः एकत्रोपस्थिता उपायनिश्चयं कुर्वन्ति ।

परिहासी :—मनुष्योऽस्मि इंग्लैण्डवासी अत्र नव एव समागतः, तत् पृच्छामि भारतेऽपि सभ्याः सन्तीति ?

नलिन :—( स्मितं कुर्वन् ) कथम् ?

परिहासी :—अस्मद्देशे पतिव्रता अस्ति मिसमेयोनामा, सा कथयति, भारते स्त्रियः पुरुषाश्च असभ्या एव सन्ति ।

नलिन :—भवद्देशेऽपि पतिव्रता ! मिसमेयोनामा पतिव्रता ! कियतः पुरुषान् अनुभवन्ती पतिव्रता भवति ( परिहसति ) ?

परिहासी :—( हसन् ) नैकमाश्रयन्ती पतिव्रता भवति, पतीन् व्रतयतीति पतिव्रता बहुवचनं हि आदरार्थे प्रयुञ्जते धार्मिकाः ।

नलिन :—(स्मयमानः) श्लाघ्या भवतां सभ्यता यत् प्रत्येकं स्त्री, पुरुषान् व्रतयन्ती एव पतिव्रता भवति, नैवमस्मद्देशे ।

परिहासी :—( हसन् ) अथ एतावान् जनसमुदायः वाङ्मात्रमेव स्वराज्यस्य उपायं पश्यति, किमेतेन साध्यम् ? ।

नलिन :—सम्राट्प्रतिनिधिः स्वराज्य-प्रदानाय भारतनेतॄणां सम्मिलितसभां कर्त्तुम् उदघोषयत्, तत्रैव विवादः प्रचलति ।

परिहासी :—अहो किं राज्यलाभोऽपि भिक्षया भवति ( परिहसति ) ।

नलिन :—शृणोतु भवान् सम्राट्प्रतिनिधौ विश्वासेन वर्तितव्यमित्येव विचारः । सन्नद्धा भारतीयाः नवयुवानः शक्त्यापि स्वराज्यलाभाय । नमस्ते, गच्छामि, मां समाह्वयन्ति स्वयंसेवक-पुरुषाः । उभौ सम्मिल्य गच्छतः ?

—चैतन्यपतिः उपाध्यायः
छात्रः ( सेन्ट्रल-हिन्दू-स्कूल काशी )



## शरद्द्युतिः ।

सकलशस्ययुता शरदि क्षिति-
विमलवारिसरः ससरोरुहम् ।
विनतशालिफला निखिलस्थली
कलमशोभि पयो बहु शोभते ॥ १ ॥

कृशजवेन जलेन दिने दिने
शिथिलतां लभता निखिलापगाम् ।
कृततरंग सुरेखमिदं सखे !
सितपतत्रिरवैः पुलिनं भृतम् ॥ २ ॥

व्रजति सस्यचयः परिपाकताम्
लभत उद्धततां न तरंगिणी ।
हरति चेत इला गतपङ्कता
हरितशालिरुपैति पिशङ्गताम् ॥ ३ ॥

दिवि पतन्ति न शुक्लपतत्रिणः
धृतसुरेन्द्रधनुर्न घनावलिः ।
जलदकान्तियुता न हि ता दिशः
अति तथापि विभान्ति शरद्गुणाः ॥४॥

शिखिरवेऽपि विहाय रुचिं सुहृत्
श्रयति हारिमरालरुतं श्रुतिः
अवितथा न गिरा 'सुधियामियम्
परिचयो न गुणा अनुरागभूः ॥ ५ ॥

रमेशचन्द्र शुक्लः "अज्ञातः"
C/o. गङ्गामन्दिर
किसरौल मुरादाबाद ।



## कृषकदैन्यम्

दिने हलाकर्षण-धर्षितानां निशागमेऽङ्गार-भयातुराणाम्
न सोऽस्ति कालोः धनवर्जितानां स्वापाय यः स्यात्कृषिसंश्रितानाम् ॥ १ ॥

गृहे गृहे याहि निधेहि लोचने कृषीवले क्रूर-कुसीदवाहिनि ।
ततो निवृत्तस्य सुखं तवान्तिके वसेत्तदा भृत्यपदं मुदाश्रये ॥ २ ॥

क्षुधातुरस्यापि दिने जनस्य हा ! दिनान्तवेलाशन-बद्ध-बुद्धेः ।
नक्तं शिशूनां प्रतिबोधहेतोः पयोव्रतस्यैव सदापयाति ॥ ३ ॥

धनागमाच्छालिसमागमः क्वचित् तथापि चुल्लीषु न काष्ठसङ्गमः ।
धनागमाशा तु कृषीवलानां नपुंसकानामिव सूनुदर्शनम् ॥ ४ ॥

कवितार्किककेशरी
राभसुख मिश्रः ।

# स्वभावोक्तिः ।

ले० — बुलुसु वेङ्कटरमणार्यः, साहित्यविद्याप्रवीणः ।

अयि विचक्षणास्सहृदयाः !

हिताहित-प्रवृत्तिनिवृत्तिफलकाभ्यां प्रभुसुहृत्संमिताभ्यां वेदपुराणाभ्यां तत्फलकस्यैव काव्यस्य कान्तासंमिततया खलु चारुता । तच्च काव्यं व्यङ्ग्यप्राधान्ये सति ध्वनिः । व्यङ्ग्याप्राधान्ये गुणीभूतव्यङ्ग्यमिति व्यङ्ग्यराहित्ये च चित्रमिति च गीयते । त्रिविधस्यापि काव्यस्योत्कर्षाधायकाः गुणालङ्कारादयस्सन्ति ।

यद्यपि काव्यशोभाधाने रीतिवृत्तिगुणाः परमुपकुर्वन्ति । किंतु अलङ्कारा एव गुणादीनतिरिच्य परं कव्यस्योत्कर्षतामापादयन्तीति न किञ्चिद्वैमत्यम् । अलङ्कारास्तावद्धारादिविभूषणस्थानीयाः । तथाहि—

"हारादिवदलङ्कारास्तत्र स्युरुपमादयः ।" इति ।

तस्माच्चाव्यक्ता गुणादयः, व्यक्ताश्चालङ्काराः । किंच

"न कान्तमपि निर्भूषं विभाति वनितामुखम् ।"

इत्यादिभिस्सूक्तिविदां वचोभिरुत्तमे काव्ये ध्वनावपि यदि अलङ्कारावश्यकता, का वार्ता तदितर काव्ययोरपि तेषामावश्यकतायाम् ! अत एव साहित्यमीमांसारूपमलङ्कारशास्त्रं रसालङ्काराद्यनेकमपि अलङ्कारव्यपदेशतया व्यवह्रियते, अस्मिन् शास्त्रे अलङ्काराणामेव बहुलतया प्रतापरुद्रयशोभूषणव्याख्यायां रत्नापणस्य कर्ता कुमारसोमपीथी छत्रिन्यायमप्युररीचकार ।

अलङ्कारान् विसृज्य काव्यं न शोभाकोटीमारोहति ।

अदोषौ सगुणौ सालङ्कारौ शब्दार्थौ काव्यमिति तेषामलङ्कारणानां लक्षणान्तः प्रवेशो द्रष्टव्यः । तत्र तावत्प्रमाणानि दीयन्ते ।

"निर्दोषं गुणवत्काव्यमलङ्कारैरलङ्कृतम् ।
रसान्वितं कविः कुर्वन् प्रीतिं कीर्तिं च विन्दति ॥

( सरस्वतीकण्ठाभरणम् )

"काव्यं रसादिमद्वाक्यं श्रुतं सुखविशेषकृत् ॥"
आदिपदेनालङ्कारपरिग्रहः ।" इति ॥

( अलङ्कारशेखरः )

"... प्रजानां व्युत्पत्तिमभिसंधाय सूरयः ।
वाचां विचित्रमार्गाणां निबबन्धुः क्रियाविधिम् ॥
तैः शरीरञ्च काव्यानामलङ्काराश्च दर्शिताः ।
शरीरं तावदिष्टार्थव्यवच्छिन्ना पदावली ॥

* * *

काव्यशोभाकरान् धर्मानलङ्कारान् प्रचक्षते ॥

( आचार्यदण्डी )

"काव्यं ग्राह्यमलङ्कारात् । सौन्दर्यमलङ्कारः ।
स दोषगुणालङ्कारहानादानाभ्याम् ।

( आचार्यवामनः )

"वाक्यं रसात्मकं काव्य" मिति काव्यलक्षणनिरूपयिता दर्पणकारः, "रमणीयार्थप्रतिपादकः शब्दः काव्य" मिति काव्यस्वरूपनिवेदयिता रसगङ्गाधरकारश्चालङ्काराः काव्यात्मनो रमणीयताप्रयोजका इत्युररीचक्रतुः।

"तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि ।" इत्यलङ्काराकरे काव्यप्रकाशे काव्यलक्षणं निरूपयितुराचार्यमम्मटस्यापि नास्त्यलङ्कारविषये वैमत्यावकाशः । अत एव स तावदेवमाह—"क्वापीत्यनेनैतदुच्यते यत्सर्वत्र सालङ्कारना। क्वचित्स्फुटालङ्कारविरहेऽपि न काव्यत्त्वहानि" रिति । ततः स्फुटालङ्कारविरहेऽपि स्थले अस्फुटालङ्कारैरवश्यंभाव्यमिति फलितम्। नास्ति खलु तद्वाक्यं यद्यथा कथंवालङ्कारविहीनम् । न पारयन्ति कवयो विनालङ्कारं ग्रन्थान् रचयितुम्।

अलङ्क्रियते काव्यमनेनेति चारुताहेतुरलङ्कारः। काव्यालङ्करणे तस्यैव सामर्थ्यं नेतरस्येति तदलङ्कारपदमेवान्वर्थं व्यक्तीकरोति, तस्मात्सर्वालङ्कारिकमतेऽलङ्कारा नोपेक्षिता नोपेक्षणीयाश्च । रसादिभिन्नं यद् व्यङ्ग्यं तद्भिन्नत्वे सति शब्दार्थान्यतरनिष्ठा या विषयिता—सम्बन्धावच्छिन्ना चमत्कृतिजनकतावच्छेदकता तदवच्छेदकत्वमेव तल्लक्षणमिति, अनुप्रासादिविशिष्ट शब्दज्ञानादुपमादिविशिष्टार्थज्ञानाच्च चमत्कारोदयात्तेषु लक्षणसमन्वय इति नवीनालङ्कारिका उररीचक्रुः।

तत्र शब्दार्थालङ्कारमध्येऽर्थालङ्काराणामेव प्राधान्यम्। तथाहि। व्यङ्ग्यप्रधानं हि काव्यम्। वस्त्वलङ्काररसात्मना त्रिविधं तद् व्यङ्ग्यम्। तत्रालङ्कारविषयेऽर्थालङ्काराणामेव ग्रहणम्, न तु शब्दालङ्काराणाम्। तेषां शब्दप्रधानतया कदापिव्यङ्ग्यत्वासम्भवात्, किञ्च रसपरतन्त्रे काव्ये अनुप्रासयमकादयश्शब्दालङ्कारास्सुतरां निषेद्धव्याः । अन्यथा रसविच्छेदः स्यात् । शब्दालङ्काररहितं काव्यं सुललितपदबन्धबन्धुरं भासते। शब्दालङ्कारबन्धुरं तथा न सुज्ञेयम्। रसास्वादनैकहृदयस्य च श्रोतुरर्थगवेषणकारणानि शब्दालङ्करणानि अन्तरायरूपाण्येव भासन्ते।

किंचार्थचित्राणां गुणीभूतव्यङ्ग्यतया मध्यमकाव्य—विषयताप्यस्ति खलु । शब्दचित्राणां तु निर्व्यङ्ग्यतया न ताद्दग्विषयता तेषामपित्वधमतैव।

अर्थालङ्काराणां च संख्या इयतीति न कोऽपि वक्तुं शक्नोति, वस्तुस्वभावमनुरुध्य कल्पितास्तेऽलङ्कारास्संख्यातीतविषयतां भजन्ते, नास्ति तेषां कुत्रापि विश्रान्तिः। न तावच्चमत्कारिता कस्यचिदेव निधिः। व्यक्तिबुद्धिविशेषतश्चमत्कारा अप्यनन्ता एव, ततस्तन्मूलकानामप्यलङ्काराणां तदानन्त्यं केन वार्यते। भरतमुनिना चत्वार एवाऽर्थालङ्कारा इति निरूपितमासीत्। आचार्यदण्डी तावत्—

"काव्यशोभाकरान् धर्मानलङ्कारान् प्रचक्षते।

ते चाद्यापि विकल्प्यन्ते कस्तान् कार्त्स्न्येन वक्ष्यति॥

इति वदन् सूक्ष्मतया पञ्चत्रिंशदलङ्कारानङ्गीचकार। नवीनालङ्कारिकाश्चाप्पयदीक्षिताः पुनः परश्शतानलङ्कारान्निरूपयामासुः। ततश्च सहस्रशो हि महात्मभिरन्यैश्चालङ्काराः प्रकाशिताः प्रकाश्यन्ते च। तस्मात्तेषामलङ्काराणामनन्तता सुप्रतिपादिता भवति।

अस्तु नाम तेषामानन्त्यम्, तथापि ते सर्वेऽपि नालं प्रधानपदवीमारोढुम्। न च सर्वेषामप्रधानता। परंतु केषाञ्चित् प्राधान्यं केषाञ्चिदप्राधान्यञ्च। तत्रैकस्यैवालङ्कारस्य मुख्यता युक्ता।

तदुपमामेव सर्वालङ्कारमूलभूतेति मन्यमाना आलङ्कारिकास्तामेव प्रधानतया गणयन्ति, अप्पयदीक्षितस्तु स्वरचितचित्रमीमांसायामुपमामेवाद्री निरूपयंस्तामेव सर्वालङ्कारमूलभूतेतिवदंस्तस्यामेव सर्वेषामलङ्काराणामन्तर्भावमाचचक्ष। वक्रोक्तिं विना न काव्यस्योत्कर्ष इति सर्वेषामलङ्काराणां वक्रोक्तिरेव मूलमिति तदेवकाव्यजीवितमिति कुन्तकस्स्वरचितवक्रोक्तिजीविते निरूपयामास। किंच स्वभावकथनं विना न कस्याप्यलङ्कारस्योत्कर्षतेति मन्यमाना आचार्यदण्डिप्रभृतयः स्वभावोक्तिमेवाद्यौ निरूपयन्त। तस्या एवाद्यालंकृतित्वमुररीचक्रुः।

निपुणतरं विचार्यमाणे वस्तुस्वाभावख्यापनं विना नालङ्काराणामुत्कर्षता सुप्रतिपादिता भवति। तत्खल्वलङ्कारजीवातुभूतम्। वस्तुस्वभावं विधाय उपायान्तरेण न पारयन्ति कवयस्तद्वस्त्वलङ्कर्तुम्। तथाहि ग्रीष्मर्तुवर्णने शीतोष्णस्थितिं पर्यालोचयन्

"मन्दमन्द मलयानिलवदतिशीतला निदाघवाता हृदयानन्दसन्धायिनो भवन्ती" ति यदि केनापि वर्ण्यते तत्वमतिरमणीयमुतारमणीयं पर्यालोचयन्तु सन्तः। तथा "भगवान् सहस्ररश्मिश्शीतकिरण इति" "शुभ्रांशुश्चण्डकिरण" इति न केनापि शक्यते वक्तुम्। तस्माद्वस्तुस्वभावमेव सुनिपुणैर्युक्तिभिर्वचोभिश्च विस्तारयन्ति कवयः। मुखचन्द्रयोरुभयोरपि वर्तुलत्वादि समानाकारतया, आह्लादकत्वादिसमानधर्मतया च मुखंचन्द्र" इति "अयं परिदृश्यमानस्सुधांशु र्नैवसुधांशुः; किंतु प्रेयसीमुखमेव सुधांशुरिति रूपकापह्नुत्यादिकमलङ्कारजातं जायते।

वस्तुस्वभावं तिरस्कर्तुं न शक्नोति कविः। स्वभावत उन्नतानेव सौधान् दृष्ट्वा कविः स्वशक्तिं विनियुज्य "अस्य पुरस्य सौधाग्राणि विधुमंडलं स्पृशन्तीति वर्णयति। एतद्वर्णनं तावत् क्षुद्रकुटीर विषये कथमपि नोपयुज्यते खलु। यः कोऽपि वा कविः कंचिद्दुर्भरदरिद्रं दृष्ट्वा "त्वं तावत्कुबेर" इति न

ग्रुवा: । अप्रत्यक्षमपि वस्तु प्रत्यक्षी कुर्वन्त स्तत्रचारुतामापादयन्तः कतिचनैव कालिदासप्रभृतयो महाकवय इति गण्यन्ते, अन्ये तावत्स्वकीर्ति स्वप्रपुष्येव जीर्णयन्ति, तेष्वपि महाकविषु कालिदास एवाग्रिमः। पश्यत—

ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने बद्धदृष्टिः
पश्चार्धेन प्रविष्टश्शरपतनभयाद्भूयसा पूर्वकायम्।
दर्भैरर्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा
पश्योदग्रप्लुतत्वाद्वियति बहुतरं स्तोकमुर्व्यां प्रयाति॥

( अभिज्ञानशाकुन्तलम् )

भो भोः पाठकमहाशया! रक्षन्तु तं तपस्विनं धावन्तं मृगपोतम्। पर्यालोचयत तद्गतिम्। जाग्रत! जाग्रत! अन्यथायमप्रेक्षणीयस्संवृत्तो भविष्यति, किमिति निश्चेष्टाः पश्यन्ति? नायं मृगो भवद्दृष्टिगोचरः अपसर्तव्यं भवद्भिरिदानीं क्षणं मार्गात्। यतः—

मुक्तेषु रश्मिषु निरायतपूर्वकाया,
निष्कम्पचामरशिखा निभृतोर्ध्वकर्णाः।
आत्मोत्थितैरपि रजोभिरलङ्घनीया,
धावन्त्यमी मृगजवाक्षमयेव रथ्याः॥

भो पाठकमहाशय! यदि त्वया तद्वशा वाजिनः कदापि दृष्टा नो चेदप्रमत्तः क्षणमात्रं पश्य! अनुक्षणमेव ते भवद्दृष्टिपथमतिक्रामन्ति। किं वदसि? अश्वैरेवोत्थितै रजोभिः किमपि न दृष्टिगोचरमिति, तत्तिष्ठ, साम्प्रतं तद्रथमेवारोहयामः। अपि त्वमुपविष्टोऽसि? अद्य तावत्पश्य —

यदालोके सूक्ष्मं व्रजति सहसा तद्विपुलतां
यदर्धे विच्छिन्नं भवति कृतसंधानमिव तत्।
प्रकृत्या यद्वक्रं तदपि समरेखं नयनयो-
र्न मे दूरे किंचित् क्षणमपि न पार्श्वे रथजवात्॥

किं ब्रवीषि! रथवेगाच्छीर्षवेदना समुद्भूतेति, न भेतव्यं, न भेतव्यम्, अयमत्र युष्मत्पार्श्ववर्ती दुष्यन्तः, तथापि मास्म भूः प्रमत्तः क्षणमपि, अन्यथा त्वं रथादधः पतिष्यसि, यथेतःपूर्वं रथपथान्निवृत्तः स्वरक्षणमकरोस्तथेदानीमपि स्वात्मरक्षायै प्रवृत्तस्व। किं पर्यालोचयसि? "नायं दृष्टपूर्वो रथवेग" इति। यदि त्वं कदापि धूमशकटमारुह्य ग्रामान्तरं गच्छेर्नैवं कदापि वदिष्यसि।

अहो! वयमतीव परिश्रान्ताः, तत्तस्मिंस्तपोवनाश्रमे क्षणमात्रं विश्रान्तिं लभामहे। पश्य, पश्य—

आकीर्णमृषिपत्नीनामुटजद्वाररोधिभिः।
अपत्यैरिव नीवारभागधेयोचितैर्मृगैः॥
सेकान्ते मुनिकन्याभिस्तत्क्षणोज्झितवृक्षकम्।
विश्वासाय विहङ्गानामालवालाम्बुपायिनाम्॥
आतपात्ययसंक्षिप्तनीवारासु निषादिभिः।
मृगैर्वर्तितरोमन्थमुटजाङ्गणभूमिषु॥

तपोवनमिदम्। सखे! का पुनस्तत्र भवती सखी परिवृतास्ता। खलु स्वप्रमाणानुरूपैस्सेचनघटैर्बालपादपेभ्यः पयः प्रदाय परिश्रान्तेति मन्ये। यस्याः खलु —

स्रस्तांसावतिमात्रलोहिततलौ बाहू घटोत्क्षेपणा-
दद्यापि स्तनवेपथुं जनयति श्वासः प्रमाणाधिकः।
स्रस्तं कर्णशिरीषरोधि वदने घर्माम्भसां जालकं
बन्धे स्रंसिनि चैकहस्तयमिताः पर्याकुला मूर्धजाः॥

\+ + + + +

किंतदन्यद्वनमिव लक्ष्यते, सत्यमियमन्या पर्णशाला। कौ पुनस्तौ जम्पती लक्षयामि किमिति वितर्कः। सत्यं तौ पुनः सीतारामौ। निवर्तस्व तावत्।

"किमपि किमपि मन्दं मन्दमासत्तियोगा-
दविरलितकपोलं जल्पतोरक्रमेण ॥
अशिथिलपरिरम्भ व्यापृतैकैकदोष्णोः"

तयोर्नावां दृष्टिविषयौ भवावः। यदेतौ नौ दृष्ट्वा स्वानन्दं छेत्स्यतः। अन्यच्चादर्शनीयं खलु संयुक्तं युग्मम्।

अयि भोः एहि तावत्। पूर्वदृष्टे तपोवनाश्रम परिसरे आलाप इव श्रूयते तद्गत्वा शृणु। स्वपुत्रिकां भर्तृसकाशं प्रेषयन्महामुनिः काश्यपः किं व्याकुली भवति।

अपिनाम मुनेरपि व्यामोहविषयता, तद्वाक्यश्रवणे सावधानौ स्वः।

यास्यत्यद्य शकुन्तलेति हृदयं संस्पृष्टमुत्कण्ठया
कण्ठः स्तम्भितबाष्पवृत्तिकलुषश्चिन्ताजडं दर्शनम्।
वैक्लव्यं मम तावदीदृशमहो स्नेहादरण्यौकसः
पीड्यन्ते गृहिणः कथं नु तनयाविश्लेषदुःखैर्नवैः॥

साधु, काश्यप! साधु, साधु पुत्रिकावत्सल! साधु। युक्तमुक्तं भवता।

अयमन्यो एङ्कः। पाठक! पश्य तावदास्थानगतं राजानं शकुन्तलासहितान् मुनिकुमारांश्चाश्रु तं त्वया दुष्यन्तवचनं "नाहं शकुन्तलाया नामाप्यश्रृणव" मिति, सा खलु तपस्विनी किं करिष्यति, अपितु मुनिकुमारसकाशमेव गच्छति। तौ तु तां वारयतः खलु। सा खलु—

"इतः प्रत्यादेशात्स्वजनमनुगन्तुं व्यवसिता
मुहुस्तिष्ठेत्युच्चैर्वदति गुरुशिष्ये गुरुसमे।
पुनर्दृष्टिं बाष्पप्रसरकलुषामर्पितवती——
(दुष्यन्ते)................................"

किमपि कर्तुं न शशाक। भो दुष्यन्त! त्वं तावदतीव कठिनः। यदिमाम् अशिक्षितकपटामेव तिरस्कुरुषे।

अयमन्यः प्रदेशः यदत्र दुष्यन्तोऽवगतशकुन्तलावृत्तान्तस्तां दूरत एव पश्यन्नात्मानमत्यन्तं निन्दयति, या खलु—

वसने परिधूसरे वसाना
नियमक्षाममुखी धृतैकवेणिः।
अतिनिष्करुणस्य शुद्धशीला
...दीर्घं विरहव्रतं बिभर्ति॥

सा पुरतः परिदृश्यमाना शकुन्तलैव।

हन्त! प्रबुद्धौ स्वः, अतीतं खलु तत्सर्वं मति वृत्तम्। किंशताब्दीयो दुष्यन्तः, किंशताब्दीयौ आवाम्। परं तु स्वभावोक्तिवर्णननिपुणेन महाकविना गतमपि तद्वृत्तं प्रत्यक्षीकृतम्। प्रकृतमनुसरामः। नैतादृशी शोभास्वभावोक्तिव्यतिरिक्तस्थलेऽन्यालङ्कारेऽस्ति। पूर्वोक्तस्थलेष्वपि कीदृशी शोभेति यदि पृश्नावकाशः, न पारयामस्तावद्वयं तद्विशदीकर्तुम्। अपितु रसास्वादपरैस्सहृदयैरेव निर्णीयताम्।

अप्पयदीक्षिताः पुनरुपमालङ्कारमेव बहुमन्यमानास्स्वरचितायामलङ्कारमीमांसायामर्थचित्रमीमांसायामुपमामेवादौ निरूप्य सा सर्वालङ्कारजीवातुरिति च निरूपयामासुः। सुचिरं सुनिपुणं विचार्यमाणे स्वभावोक्तिरेव प्रायस्सर्वालङ्कारजीवातुरिव परिदृश्यते इति प्रथममेव निरूपितं मया अत्र दिङ्मात्रं निरूप्यते।

"चन्द्र इव मुख" मित्युपमायां "चन्द्र इव मुखमिव चन्द्र" इत्युपमेयोपमायां "मुखं चन्द्र"

इति रूपके 'मुखं चन्द्र इति मन्ये" इत्युत्प्रेक्षायां, "नायं सुधांशुः, किंतु प्रेयसीमुखमेव सुधांशु" रित्यपह्नुतौ, " पश्य नेत्रोत्पलद्वन्द्वान्निःसरन्ति सिताः शरा" इत्यतिशयोक्तौ, "सङ्कुचन्ति सरोजानि स्वैरिणी वदनानि" चेति तुल्ययोगितायां चाह्लादकत्वादिकस्स्वाभाविकस्साधारणधर्मः सुव्यक्त एव भवति। तं धर्मं विना नालङ्कारस्य विषयता स्यात्।

"दिगन्तमगमत्तस्य कीर्तिः प्रत्यर्थिभिस्सह" इति सहोक्तिः,"विना खलैर्विभात्येषा राजेन्द्र भवतस्सभा इत्यादिर्विनोक्तिः, "हृदि स्नेहक्षयो नाभूत् स्मरदीपे ज्वलत्यपी" ति विशेषोक्तिश्च स्वरूपतः स्वभावोक्तय एव परेतु क्रमतः सहविनाविचित्रभावसंकलिताः। समासोक्तावपि "अयमैन्द्रीमुखं पश्य रक्तश्चुम्बति चन्द्रमाः" इत्यादौ प्रस्तुतवृत्तान्तस्वाभाविकवर्णनं विना प्रस्तुतवृत्तान्तप्रतीतिरेव नोपपद्यत इति तस्या अपि स्वभावोक्तिरेव मूलमिति निर्विवादम्।

किंचाप्रस्तुतप्रशंसायामपि "एकः कृतिः शकुन्तेषु योऽन्यं शक्रान्न याचते" इत्यादौ निबध्यमानमप्रस्तुतया चकवृत्तान्तावगतिपर्यवसायीति प्रस्तुतवर्णनस्यैव प्राधान्यात्तस्य च स्वभावोक्तिमूलैवेति भासते। "नमस्तस्मै कृतौ येन मुधा राहुवधूकुचा" विति पर्यायोक्तौ तावद्भङ्ग्यन्तरस्य प्रकृतविष्णुरूपप्रतिपाद्यस्य चोभयोरपि स्वभावाख्यानेव सुविद्धमास्ते। "अस्त्रैरतीक्ष्णकठिनैर्जगज्जयति मन्मथः" इत्यादौ विभावनायां मनसिजस्वभाववृत्तिरेव कथिताऽभवत्। अपिच"नमन्ति सन्तस्त्रैलोक्यादपि लब्धुं समुन्नति" मिति विचित्रालंकारे "निर्गते नीरे सेतुमेषा चिकीर्षती" ति ललिते च क्रमाद्वस्तुस्वभाव-प्रस्तुतवृत्तान्तवर्णनपरत्वमस्तीति तयोरपि निर्विवादं स्वभावोक्तिमूलत्वम्।किं बहुना,सामान्यतस्सर्वेऽलङ्कारास्स्वभावनिरूपणपरा एव। तस्मात्तेषां स्वभावोक्तावेव ते सर्वैरन्तर्भवन्तीति वच्मि तदितररमणीयतया सह स्वभावोक्तिरपि तत्रास्तीत्येव मामकीनः पक्षः।

किं बहुना। अलङ्कारशास्त्राधारभूते अग्निपुराणेऽपि काव्यशोभायामर्थालङ्कारा एव परमुपकुर्वन्तीति तेषु स्वभावोक्तिरेवाग्रिमालङ्कार इति च सुप्रतिपादितम्। तथाहि:—

अलङ्कारणमर्थानामर्थालङ्कार इष्यते,
तं विना शब्दसौंदर्यमपि नास्ति मनोहरम्।
अर्थालङ्काररहिता विधवेव सरस्वती,
स्वरूपमथ सादृश्यमुत्प्रेक्षातिशयावपि ॥
स्वभावएव भावानां स्वरूप मभिधीयते। इति

[अग्निपुराणेचतुश्चत्वारिंशदधिके त्रिशततमोऽध्यय:]

प्राचीनास्तावन्महाकवयो रसपरतन्त्राः शब्दालङ्कारमतिशयोक्तिमूलमलङ्कारञ्च नादृतवन्तः। क्लिष्टतापि तेषां ग्रन्थेषु न कुत्रापि परिदृश्यते अपितु सौशब्द्यमेव। तेषां शय्यातीव कोमला।

परिणामस्तावत्सर्व पदार्थ—साधारणः। तस्य वाङ्मयेऽपि प्रवृत्तत्वात्कालक्रमेण वाङ्मयेऽपि नूतना विकारास्समभूवुः। अलङ्कारभूषणीभूता स्वभावोक्तिर्निरस्ता, सौशब्द्यमपास्तम्। शब्दालङ्कारपद्धतिस्स्वीकृता ओजोगुणोऽराजत। अतिशयकथनमेव प्रधानमासीत् तस्मात्तन्मूलका अतिशयोक्तिरूपमादयश्चाग्रस्थानीया बभूवुः। दृश्येष्वपि च काव्येषु शब्दालङ्करणमतिशयोक्तिं च बहुशो वर्णयद्भिस्तैःकविभिः किमिति स्वभावकथनं स्वीक्रियेतालङ्कारेषु प्रधानतः। अतएव कुन्तकमहाशयः वक्रोक्तिः (अतिशयोक्तिः) काव्यजीवितमिति स्वग्रन्थे निरूपयामास।

अपि च प्राचीनमार्गानुसरणे स्वोत्कर्षो न प्रतिभातीति च हेतोर्नवीनाः कवयः, नवीनाश्चालङ्कारिकाः उपमातिशयोक्ती एव परममन्यन्त। परन्तु वस्तुतत्वं परिशीलितुं कामयमानास्सर्वे सहृदया स्वभावोक्तिमेवोत्कृष्टतमां सम्भावयन्तु।



## श्रीमान् सभापतिशर्म्मा व्याकरणाचार्यः ।



इमे खलु काशी-स्थ-बिरला-संस्कृत महाविद्यालयस्य प्रधानाध्यापकाः काशीस्थविद्वत्सु प्रथमांश्रेणीमलङ्कुर्वन्ति। इमे प्राचीन परिपाटी प्रसिद्धपण्डिता अपि धर्म-समाज-साहित्य-कार्येषु सर्वदा बद्धपरिकराः सन्तिष्ठन्ते । संस्कृत--साहित्य-समाजस्य प्रारम्भत एव मन्त्रणा समितेर्विशिष्टसदस्याः, सुप्रभातस्य च परम-पोषकाः सन्ति। एतेषामेव प्रयत्नेन साम्प्रतं दानवीरेण राज्ञा बलदेवदास-बिरला महोदयेन सुप्रभातस्य साहाय्यं कृत्वा तस्य पुनर्जीवनं कृतम् । प्रस्तुत संस्कृत-साहित्य-सम्मेलनस्य स्वागत-समितेः कार्यकारिण्याः समितेरुपसभापतयः सन्ति ।

एभिर्वैयाकरण-लघुमञ्जूषाया एका नितरां सरला विस्तृता पाण्डित्यपूर्णा च टीका विरचिता, मुद्रिता च । ( अस्याः विज्ञापनमन्यत्र द्रष्टव्यम् ) पुस्तकमिदं व्याकरणशास्त्राध्यायिनां कृतेऽवश्यपठनीयं सङ्ग्राह्यञ्च विद्यते । अन्तरङ्गेन सह बहिरङ्गमप्यस्या नितरां मनोहरम् । मुद्रणम्, मसृणत्वम्, पत्रम्, प्रकाशनम्—सर्वमिदं हृदयमाकर्षति। श्रूयते, अन्येषामपि विविधानां दुरूहग्रन्थानां सटीकं सटिप्पणञ्च प्रकटनं भविष्यति । लघुमञ्जूषाया विस्तृतं समालोचनं लेखरूपेणाग्रे भविष्यति ।

सं० सा० सं० विज्ञप्तिसंख्या—१

**अखिल-भारतीय-संस्कृत-साहित्य-सम्मेलनम्,**

**प्रधान-कार्यालयः,**

**काशी-नरेश-मन्दिरम्, गोदौलिया,**

वाराणसी ........................... १९ .

## कार्य-समितेः सदस्य-सूचना ।

श्रीमन्तः ........................................................

महानुभावाः

मान्याः !

विदितमेव तत्रभवतां यदिदानीं वत्सरे निखिल-भारतीय-संस्कृत-साहित्य-सम्मेलनस्य द्वादश-मधिवेशनं फाल्गुनशुक्लाष्टमीमारभ्य दिनचतुष्टयं यावत् (मार्चमासस्य ८-९-१०-११ दिवसेषु) वाराणस्यां समजनीति । सम्मेलनस्य प्रधान कार्यालयश्च साम्प्रतं सम्मेलन प्रस्तावानुसारं वाराणस्यामेव प्रतिष्ठितः । अत्र सम्मेलनकार्यसंचालनाय कार्यसमितेर्नवीनं निर्वाचनमभूत् । यत्र श्रीमन्तः .............. ..............................पदे निर्वाचिताः सन्ति । तद्वयं सादरं निवेदयामो यच्छ्रीमन्तः सत्वरमेव सदस्यतास्वीकृतिसूचनां संप्रेष्य नूनं सम्मेलनमिमं समनुगृह्णन्त्विति ।

एतदपि निवेदनं यत् सम्मेलन-सदस्या एव कार्यसमितेर्निर्वाचिताः सदस्या भवन्तीति नियमानुसारं श्रीमद्भिः सहैव सदस्य—शुल्कप्रेषणेन सम्मेलन—सदस्यत्वमपि स्वीकर्तव्यमेव । तदर्थं सम्मेलनस्य सदस्य—पत्रं साकमेव प्रहीयते ।

आशास्महे सम्मेलन-सदस्यतां स्वीकृत्य श्रीमन्तश्चिरविशृङ्खलितस्य सम्मेलनस्य पुनरुत्थाने बद्धपरिकराः सविशेषमस्य कार्य-सञ्चालने च दत्तावधाना भविष्यन्ति ।

स्वीकृतिसूचना सत्वरमेव प्रदेया ।

वशंवदः —

**देवीप्रसाद शुक्लः**

(महामहोपाध्यायः, कविचक्रवर्ती)

प्रधान मन्त्री ।

अ० भा० सं० सा० सं० विज्ञप्तिसंख्या—२

# अखिल-भारतीय-संस्कृत-साहित्य-सम्मेलनम्,

प्रधान-कार्यालयः,

वाराणसी ································१९ .

## सदस्य-सूचना ।

श्रीमन्तः ··························································,

महानुभावाः

अयि मान्याः !

विदितचरमेव श्रीमतां यत्कियतःकालादखिल-भारतीय-संस्कृत-साहित्य-सम्मेलनस्य कार्यं जातं कार्यकर्तॄणामभावेन शिथिलप्रायमासीत् । वर्षत्रयाच्च सम्मेलनस्य शैथिल्यमालोच्य वर्षेऽस्मिन् काशीस्थ-संस्कृत-साहित्य-समाजस्य प्रयत्नेन वाराणस्यां सम्मेलनस्य द्वादशमधिवेशनं समजनि एतस्य प्राधानकार्यालयश्च वाराणस्यामेव प्रतिष्ठित इत्यपि निश्चितं सम्मेलनेन । तदिदानीं श्रीमतामन्तिकं सादरं निवेद्यते यत् यतः प्रभृति सम्मेलनवार्षिकं शुल्कं न दत्तं श्रीमद्भिस्तत आरभ्यावशिष्टं साहाय्यं सम्प्रेष्य स्वीयां सदस्यतां सम्मेलनञ्च संरक्षन्तु । सदस्य-पत्रं सदस्यनियमाश्च सहैव सेवायां प्रहीयन्ते ।

यदि च श्रीमद्भिः पूर्वावशिष्टं साहाय्यं न प्रदीयेत चेत् पुनरस्मिन्नेव वत्सरे सदस्यत्वं स्वीकृत्य सम्मेलनस्य पुनरुद्धारे नूनं प्रयतन्तामिति सानुरोधं प्रार्थनम् । यतः संस्कृतप्रणयिनामियमेवैका संस्कृत-संस्था । यदि भवादृशा एवास्याः संरक्षण-सम्वर्धन-तत्परा न भविष्यन्ति चेत् कमन्यमालम्बनमवलम्बेत भगवती सुरभारतीति सत्वरमेव सदस्यपत्रं संपूर्य कार्यालये सूचनां प्रहिण्वन्त्विति ।

आशास्महे, सहृदय-धुरीणाः श्रीमन्तोऽत्रास्माकं निवेदनमवश्यमुररीकरिष्यन्तीति ।

निवेदयति,

देवीप्रसाद शुक्लः

( महामहोपाध्यायः, कविचक्रवर्ती )

( प्रधान मन्त्री )

सं० सा० सं० विज्ञप्तिसंख्या—३

# अखिल-भारतीय-संस्कृत-साहित्य-सम्मेलनम्

प्रधान—कार्यालयः,

काशी-नरेश-मन्दिरम्, गोदौलिया,

वाराणसी ······························१९ .

अयि आर्याः !

विदितमस्तु तत्र भवतां श्रीमतां यत् अखिल भारतीय-संस्कृत-साहित्य-सम्मेलनस्य द्वादशाधिवेशने द्वादश प्रस्तावानुसारं संस्कृतसाहित्यसमाजस्य तन्मुखपत्रस्य सुप्रभातस्य च सम्मेलनेन सह सम्बन्धः समभूदिति । तदिदानीं सुप्रभातं सम्मेलनस्य मुखपत्रत्वेन परिगृहीतम् । सम्मेलनस्य प्रबन्ध-समित्या तस्य प्रबन्ध-विषये स्वानुकूल्येन विहितः प्रयत्नः । तत्र मूल्यसम्बन्धिनो नियमाः सदस्यानां ग्राहकानामनुग्राहकानाञ्च विज्ञानाय प्रकाश्यन्ते ।

१—सुप्रभातस्य सर्वसाधारणं वार्षिकम्मूल्यं मुद्रात्रयं भविष्यति ।

२—सम्मेलनस्य साधारण—सदस्येभ्यः, छात्रेभ्यश्च मुद्राद्वयेन प्रदीयेत ।

३—सम्मेलनस्य साधारणसदस्यानां शुल्कं १) एका मुद्रा विद्यते । ये साधारण-सदस्य-शुल्कं दत्वा सम्मेलन-सदस्यत्वं स्वीकरिष्यन्ति, त एव मुद्राद्वयेन सुप्रभातं प्राप्स्यन्ति ।

४—साधारण-सदस्यातिरिक्तं सम्मेलनस्य विशिष्ट-मानार्ह आजीवन-संरक्षक-सदस्येभ्यो विनामूल्यं प्रदीयेत । विशिष्ट-सदस्यशुल्कं मुद्रापञ्चकं विद्यते ।

५—सुप्रभातं प्रतिसौरमासस्य २५ तमे दिवसे नियमतः प्रकाशितं भविष्यति, मासस्यान्तिम-दिवसं यावत्, ग्राहकानां सदस्यानाञ्च सविधे प्रेषितं स्यात् ।

६—सुप्रभातस्य प्राचीन-ग्राहकेभ्यो यथापूर्वं तावन्मूल्येनैव दास्यते यावत्तैर्दत्तम् ।

७—सुप्रभातस्य अष्टमादिद्वादशान्ता अङ्काः सम्मेलनाङ्करूपेण सहैव प्रकाशिता भविष्यन्ति ।



निवेदकः—

अम्बिकादत्त उपाध्यायः
( शास्त्री एम० ए०, काव्यतीर्थः, )
सहायक मन्त्री

सं० सा० सम्मेलन-कार्यालयः,
काशीनरेशमन्दिरम्,
गोदौलिया, काशी ।

## सनातनधर्म-संरक्षकः ।

(उपदेशदर्पणस्य प्रथमसंख्या)

सङ्कलयिता—एकः काशीस्थः सनातनधर्मा विद्वानाचार्यः

पुस्तकमिदं हिन्दीभाषायां श्रुतिस्मृति-पुराणेतिहासशिलालेखादिप्रमाणाधारेण शुद्धिभोजनादिव्यवस्थाविषये लिखितमस्ति । विषयेऽस्मिन् बहुज्ञताभिलाषुकैर्वर्त्तमान-सामाजिक-धार्मिक-प्रगतिप्रतिस्पर्धिभिः खण्डनमण्डनकामैश्चावश्यं गृहेलिममिदम् जिघृक्षुभिःसार्द्धाणकद्वयस्य =)॥ चिटिका प्रेष्या ।

## सचित्रम् सामुद्रिकरहस्यम् ।

ले०—श्रीकालिकाप्रसादशर्म्मा, राजज्यौतिषी,

अद्भुतमिदं ग्रन्थरत्नम्, हिन्दीटीकासहितम्, अनेकचित्रविभूषितम्, नरनारीणां शुभाशुभज्ञाने नितरामुपयुक्तम्, संस्कृते सर्वथा नवीनमेव । एतेन हस्तरेखाणां गुरुं विनैव सम्यक् परिचयो भवति । मूल्यम् १।) मुद्रा ।

## राष्ट्रभाषाभूषणम् ।

ले०—श्रीगोपाल शास्त्री, दर्शनकेशरी, साहित्याचार्य्यः

एतत् पुस्तकं हिन्दीभाषायां विद्यते । संस्कृतज्ञानां हिन्दीज्ञाने नितरामुपकारजनकम् । सर्वैरपि संस्कृतज्ञैरेतद् व्याकरणम् पठनीयम् । एतेन हिन्दीभाषायां निबन्धलेखनेऽनुवादादिज्ञाने च महत्सौकर्यं स्यात् । मूल्यम्—सार्द्धाणकषट्कम् ।=)॥

## रतिरहस्यम् (कोकशास्त्रम्)

एष प्राचीनो ग्रन्थः श्रीमहाकवि-कोक्कोक-विरचितः । अस्मिन् कामशास्त्रसम्बन्धिन्यः सर्वा वार्ताः, पद्मिनी-शङ्खिनी-चित्रिणी-हस्तिनी-प्रभृतीनां स्त्रीणां भेदाः, एवं चत्वारः पुरुषभेदाः, स्त्रीणां वशीकरणस्यौषध्यः, मन्त्राः, तत्तद्देशीयानां स्त्रीणां पुरुषाणाञ्च लक्षणानि, तेषां संयोगाः, आलिङ्गन-चुम्बनादीनां भेदाः, तेषां विशेषाश्च अन्ये च बहवो ज्ञातव्याः कामशास्त्रीयाः विषयाः सन्ति । एष ग्रन्थो नितरां सुप्रसिद्धः प्राचीनश्च विद्यते । एतस्यैका प्रतिः सर्वैरपि स्वसविधे नूनं संस्थापनीया । मूल्यम्—मुद्राद्वयम् ।

## गोलविद्या गोलसूत्रञ्च ।

ले०—श्रीतारादत्तपन्तः, साहित्याचार्यः, काव्य-व्याकरण-तीर्थः

संस्कृते भूगोलज्ञानस्य प्रधानं प्रथमञ्च पुस्तकम् । अत्र हिन्दी भूगोल-पुस्तकवत् भारतवर्षस्य समस्तो भूगोलः सरलतया बालानां ज्ञानाय समुपवर्णितोऽस्ति । संस्कृतकाव्येषु नाटकेषु पुराण-पुस्तकेषु च समागतानां देशानां नदीनां स्थानानां पर्वतानाञ्चाधुनिकी स्थितिस्तेषां नामानि च सन्ति । सर्वथा द्रष्टव्यमिदं पुस्तकम् । मूल्यम् ॥) आणकाः ।

## महाकवि बाणभट्टः ।

लेः—सुप्रभात-सम्पादकः, श्रीकेदारनाथशर्म्मा

हिन्दीभाषायामयमपूर्वो निबन्धः । अत्र बाणभट्टस्य जीवनविषये महत्वपूर्णा, मननीया च गवेषणा वरीवर्ति । छात्राणां कृते नितरामुपकारकोऽयं निबन्ध-बन्धः । मूल्यम् =)॥

सर्वेषां प्राप्तिस्थानम्—

मैनेजर, सुप्रभात-कार्यालयः, बनारस-सिटी ।

Published by Gaurinath Pathak and printed by Rameshwar Pathak at the Tara Printing Works, Benares.

